॥ श्रीः ॥

# पातञ्जलयोगसूत्राणि ।

वाचस्पतिमिश्रविरचितटीकासंवलितव्यासभाष्यसमेतानि ।

इदं पुस्तकं

एल्फिन्स्टन्-पाठशालाध्यापकेन

बोडसोपाह्वगङ्गाधरभट्टसूनुना राजारामेण

तथैव च

नागोजीभट्टकृतवृत्त्या सनाथीकृतम्

फर्ग्युसन-कालेजाध्यापकेन

अभ्यंकरोपाह्ववासुदेवशास्त्रिणा

द्वितीयावृत्तये संस्कृतम्

तच्च

[illegible] पुण्यपत्तने

आर्यभूषण-मुद्रणालये मुद्रापयित्वा

[illegible]

[illegible]

मूल्यं सार्धं रूप्यकत्रयम् ।

॥ श्रीगणेशाय नमः ॥

## एतत्पुस्तकस्थानां विषयाणामनुक्रमः ।



### प्रथमः समाधिपादः

## विषयाणामनुक्रमः ।



### द्वितीयः साधनपादः

## तृतीयो विभूतिपादः

## विषयाणामनुक्रमः।

## चतुर्थः कैवल्यपादः

॥ श्रीः ॥

# प्रस्तावना

पातञ्जलयोगसूत्रभाष्यस्य श्रीमद्व्यासमुनिविरचितस्य वाचस्पतिमिश्रविरचितटीकासमेतस्येयं द्वितीयाऽऽवृत्तिः। अस्यां च राजकीयाधिकार्यनुज्ञया पुस्तकसंशोधनार्थं प्रवृत्तेन मया भाष्यार्थावबोधनेऽत्यन्तोपयोगिनीं महामहोपाध्यायनागोजीभट्टविरचितां योगसूत्रवृत्तिमालोकयता तया वृत्त्या सहैवैतन्मुद्रणार्थं समार्पिता महाशया राजकीयाधिकारिणो वृत्तिपुस्तकसंशोधनेऽनुमतिं ददुः। तदनुसारेण पुस्तकान्यन्विष्यता मया यानि पुस्तकानि लब्धानि तेषु सूत्रपाठपुस्तकमेकं, भाष्यपुस्तकान्यष्टौ, वाचस्पतिमिश्रकृतटीकापुस्तकानि पञ्च, वृत्तेः पुस्तकानि त्रीणि। एतानि च तत्तत्सचिह्नपूर्वकं प्रदर्श्यन्ते—

*A* इति चिह्नितं पातञ्जलयोगसूत्रपाठपुस्तकं, लिखितं डेक्कनकॉलेजस्थग्रन्थसंग्रहालयान्तर्गतम्। एतच्च केन लिखितं कदा वा लिखितं तत्किमप्यत्र पुस्तकान्ते न निर्दिष्टम्। पृष्ठानि चास्य अस्मानि षट्। इदं पुस्तकं प्रायः शुद्धमेव। सूत्रपाठस्य ग्रन्थसंख्या १२०। सूत्राणां संख्या तु १९५। तत्र प्रथमे पादे ५१, द्वितीये ५५, तृतीये ५५ चतुर्थे ३४ ॥

*B, C, D* इति चिह्नितं भाष्यपुस्तकत्रयं डेक्कनकॉलेजस्थग्रन्थसंग्रहालयान्तर्गतम्। तत्र *B* इति चिह्नितपुस्तकस्य पृष्ठान्यणूनि। पृष्ठसंख्या ६७। इदं पुस्तकं प्रायः शुद्धं कृतमस्ति। 'शाके १७२२ दुन्दुभिनामसंवत्सरे ज्येष्ठशुद्ध १ भौमवासरे त्र्यम्बकमल्लारिभट्टाभ्यां लिखितम्' इति पुस्तकान्ते निर्दिष्टं दृश्यते *C* इति चिह्नितस्यापि पुस्तकस्य पृष्ठान्यणून्येव। पृष्ठसंख्या ६९। अस्मिंश्च पुस्तके केषुचित्स्थलेष्वतीव समीचीनाः पाठाः संदृश्यन्ते येऽन्यत्र नोपलभ्यन्ते। इदं पुस्तकं लेखनानन्तरं लेखकेनान्येन वा समीचीनपुस्तकान्तरानुरोधेन शुद्धं कृतमिति प्रतिभाति। यतः केषुचित्स्थलेषु प्राग्लिखिताः पाठा अशुद्धा इति तेषु कुण्डलनां परिकल्प्य तत्र पार्श्वे समीचीना अन्ये पाठा लिखिता दृश्यन्ते *D* इति चिह्नितस्य पुस्तकस्य पृष्ठानि महान्ति। पृष्ठसंख्या ७२। अक्षराणि चात्र स्थूलानि। एतत्पुस्तकं बहुषु स्थलेष्वशुद्धं दृश्यते। प्रारम्भे केषुचित्पृष्ठेषु शुद्धं कृतमस्ति। अत्र पुस्तके ग्रन्थसंख्या १२९० इत्युल्लेखो दृश्यते। *C, D* इति चिह्नितयोर्द्वयोरपि पुस्तकयोर्लेखकस्य लेखनकालस्य च नोल्लेखः।

*E* इति चिह्नितं भाष्यपुस्तकमानन्दाश्रमस्थं लिखितम्। अस्य पृष्ठानि ९०। इदं पुस्तकं योगशास्त्रानभिज्ञेन केवलं लिपिज्ञेन केनचित्पुस्तकान्तरं दृष्ट्वा तदनुरोधेन केषुचित्स्थलेषु संशोधितमस्ति। यतस्तादृशस्थलेष्वपि मध्ये

कचित्तत्संनिधावेव कानिचित्सूत्राक्षराणि तादृशानि दृश्यन्ते यानि सामान्यतो व्युत्पन्नोऽयोगशास्त्रज्ञोऽपि प्रमार्ष्टुं शक्नुयात् । इदं पुस्तकं शके १६९० सर्वधारीनामसंवत्सरे श्रावणकृष्णतृतीयायां रामाजी विष्णु केळकर इत्येतैर्लिखितम् । लेखकेन चेदं विशेषव्यवस्थया समीचीनैरक्षरैर्लिखितमस्ति । $D$, $E$ इति चिह्नितमेतत्पुस्तकद्वयं प्रायो मिथः सदृशं दृश्यते । केषुचित्स्थलेष्वेका पङ्क्तिः पङ्क्तिद्वयं वा पुस्तकद्वयेऽपि समानमेव गलितमस्ति । तत्रापि $E$ इति पुस्तकं दृष्ट्वा $D$ इति पुस्तकं लिखितमिति प्रतिभाति । यतः केषुचित्स्थलेषु $E$ पुस्तके दृश्यमाना पङ्क्तिः $D$ पुस्तके गलितास्ति ।

$F$ इति चिह्नितं भाष्यपुस्तकं 'मोरशास्त्री बाइकर' इत्येतेषाम् । इदं पुस्तकं केनापि समीचीनतया शुद्धं कृतमस्ति । अशुद्धस्थलानि न्यूनानि कचिदेव दृश्यन्ते । अस्य पृष्ठसंख्या ६२ । पृष्ठानि च दृढतराणि । अस्मिन्पुस्तके द्विसस्थलेषु तादृशान्युपयुक्तार्थप्रतिपादकानि वाक्यानि दृश्यन्ते यानीतरेषु पुस्तकेष्वंशतोऽपि नोपलभ्यन्ते । एतत्पुस्तकं दृष्ट्वैव प्राङ्निर्दिष्टं $B$ पुस्तकं संशोधितं स्यात् । यतो सूत्राक्षरस्थले तानि सूत्राक्षराणि रेखाङ्कितानि कृत्वा $F$ इति चिह्नितपुस्तकस्थान्यक्षराणि तत्र पार्श्वभागे संलिखितानि दृश्यन्ते । लेखनकालस्य लेखकस्य च नाम्नोल्लेखः ।

$G$ इति चिह्नितं भाष्यपुस्तकं काश्यां तिमिरनाशकनाम्नि मुद्रणालये मुद्रितम् । एतत्पुस्तकं प्रायः शुद्धमस्ति । कचिच्चैवं दृश्यते– पुस्तकान्तरेषु सूत्रानन्तर्गतानि कानिचिदक्षराण्यत्र स्थूलाक्षरैः सूत्रान्तर्गतत्वेनैवाङ्कितानि । कचित्तु तद्विपर्ययेण पुस्तकान्तरेषु सूत्रान्तर्गतान्यत्र सूक्ष्माक्षरैः सूत्राद्बहिरङ्कितानि । सूत्रकृतोऽभिमतः सूत्रपाठभेदश एवेति निर्भेत्तुं संप्रति वयं न पारयामः।

$K$ इति चिह्नितं भाष्यपुस्तकमानन्दाश्रममुद्रणालये मुद्रितम् ।

$L$ इति चिह्नितं भाष्यपुस्तकं राजकीयाधिकारिभिर्मुद्रिता प्रथमाऽऽवृत्तिः ।

वाचस्पतिमिश्रविरचितटीकायाः पुस्तकानि पञ्चोपलब्धानि । तत्र $K$ इति चिह्नितमानन्दाश्रममुद्रणालये मुद्रितम् ।

$L$ इति चिह्नितं राजकीयाधिकारिभिर्मुद्रिता प्रथमाऽऽवृत्तिः ।

$N$ इति चिह्नितं टीकापुस्तकं डेक्कनकॉलेजस्थं लिखितं प्रथमपृष्ठरहितम् । अस्य पुस्तकस्य पृष्ठसंख्या ९० । पृष्ठान्यतीव जीर्णानि । कचिदक्षराण्यप्यदृश्यतां गतानि । एतत्पुस्तकमानन्दाश्रममुद्रितं पुस्तकं च प्रायः सममेव दृश्यते ।

$O$ इति चिह्नितं टीकापुस्तकं वे. मोरशास्त्री बाइकर इत्येतेषाम् । इदं

पुस्तकं केनाप्यर्थावबोधायावलोकितमिव दृश्यते। प्रतीकानि चात्र गैरिकया ऽऽरक्तीकृतानि । लेखकप्रमादाद्यशुद्धमभूत्तल्लेखकेनान्येन वा केनापि शुद्धं कृतमस्ति। तथापि कचिदशुद्धं दृश्यते। पृष्ठसंख्या ११४।

*P* इति चिह्नितं टीकापुस्तकं डेक्कनकॉलेजस्थं लिखितम् । पृष्ठसंख्या ७१ इदं पुस्तकं शुद्धं कृतमस्ति। *O, P* इति चिह्नितयोर्द्वयोः पुस्तकयोर्दृश्यमाना पाठभेदाः प्रायो मिथः समाना एव दृश्यन्ते *N, O, P* इति पुस्तकत्रयेऽपि लेखनकालस्य लेखकस्य च नोल्लेखः।

नागोजीभट्टकृतयोगसूत्रवृत्तेः पुस्तकानि त्रीण्युपलब्धानि । तत्र *A* इति चिह्नितं पुस्तकमानन्दाश्रमग्रन्थसंग्रहालयस्थं दृढेषु चिक्कणपत्रेषु लिखितम्। अक्षराणि चात्यतीव सुवाच्यानि स्थूलानि समीचीनानि च वर्तन्ते। परं तु न केनाप्येतदवलोकितम्। यतो बहून्यशुद्धस्थलानि दृश्यन्ते। पृष्ठसंख्या १२७। इदं पुस्तकं शके १७७५ वैशाख शु. १ सोमवासरे 'गणेशभट्ट महेश्वर सभे' इत्येतैर्लिखितं माहेश्वरमध्ये ( महेश्वरग्रामे )। अस्मिंश्च पुस्तके 'रेभ्यो विरोधः' ( मुद्रितपुस्तक –पृ. २७१ प. २५ ) इत्यारभ्य ' मरणपर्यन्तकाले ' ( मुद्रितपुस्तक–पृ.२७४ प. २९ ) इत्येतत्पर्यन्तो ग्रन्थो लेखकेन न लिखितः। किं तु तावान्ग्रन्थो यावत्सु पृष्ठेषु संमायेत तावन्ति पृष्ठानि निरक्षराण्येव मध्ये प्रस्थापितानि। अतस्त्वेतत्संभावयितुं शक्यते–लेखकेन यत्पुस्तकमालोक्यैतल्लिखितं तत्र मध्ये पृष्ठद्वयं नष्टं वा गलितं स्यादिति। पुस्तकान्तरमन्विष्य पश्चादयं भागो विलेखनीय इति बुद्ध्या तावन्ति पृष्ठानि मध्ये निरक्षराण्येव संनिवेशितानि स्युः। २७१ पृष्ठेऽधस्तनगाढिष्ये पाठभेदप्रदर्शके पुस्तकचिह्नम् *A* इति प्रदर्शितमस्ति तत्र *C* इति द्रष्टव्यम्।

*B* इति चिह्नितं मुद्रितपुस्तकं काश्यां मुद्रितम् । एतच्च न सम्यक् संशोधितमिव दृश्यते। यतोऽत्र शुद्धिपत्रेऽप्यनिर्दिष्टानि कानिचिदशुद्धस्थलानि संदृश्यन्ते। नापि विषयानुक्रमण्या सूत्राणां सूच्या चैतत्सनाथीकृतम्।

*C* इति चिह्नितं मुद्रितपुस्तकं लिखितं कलकत्ता–एशिआटिकसोसायटी ग्रन्थसंग्रहालयस्थम् । अत्र च लेखकप्रमादाद्यशुद्धमभूत्तल्लेखकेनान्येन वा केनापि मूलपुस्तकमवलोक्य संशोधितम्। परंतु तज्ज्ञेन केनाप्यर्थावबोधायैतत्पुस्तकं नावलोकितमिति प्रतिभाति । यतोऽत्र तादृशान्यशुद्धस्थलानि दृश्यन्ते। केन कदा चैतल्लिखितं तस्य नात्र निर्देशो दृश्यते । अस्य पृष्ठसंख्या १२२ । पृष्ठानि च जीर्णानि । अस्मिन्पुस्तके 'भ्रमस्थले' ( मुद्रितपुस्तक–पृ. २२७प. २७ ) इत्यारभ्य 'बाध्यत्वात् ' ( मुद्रितपुस्तक–पृ० २२८ प. ५ ) इत्येतत्पर्यन्तो ग्रन्थो लेखकप्रमादाद्गलितः संशोधकेन तावान्ग्रन्थः

स्वतन्त्रे लघुनि त्रुटिपत्रे लिखितः स्यात् । यद्यपि तत्त्रुटिपत्रं न संप्राप्तं तथापि सप्तमे पृष्ठे निरङ्कभागे पार्श्वे 'प्रथमपङ्क्तिस्थत्रुटिलघुपत्रमपि तत्रस्यम्' इति लिखितं दृश्यते ।

इमानि च पुस्तकानि यैः संशोधनार्थं प्रेषितानि येषां च साहाय्येन लब्धानि तेषां निरपेक्षपरोपकारबुद्धीनां महाशयानामतीवोपकारभारं मन्ये—

पुणे श्रावण कृ. ३ <br> ता. ५।८।१९१७ } अभ्यंकरोपाह्व वासुदेवशास्त्री.

॥ श्रीः ॥

# उपोद्घातः

प्रथमावृत्तिस्थ उपोद्घातेऽस्य योगशास्त्रस्य विषयविशेषो योगस्य सामर्थ्यविशेषश्च दर्शितप्राय एव । प्रासङ्गिकमन्यदिदानीमुच्यते । एतच्च योगशास्त्रमादौ हिरण्यगर्भेणैव प्रणीतम् ।

हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ।

इत्युक्तेः । तथा श्वेताश्वतरोपनिषदि त्रिरुन्नतं स्थाप्य समं शरीरम् ( श्वे. २।८ ) इत्यादिनाऽऽसनादिकल्पनापुरःसरं बहुप्रपञ्चं योगविधानं दृश्यत इति श्रीशंकराचार्यैः शारीरभाष्ये द्वितीयाध्याये एतेन योगः प्रत्युक्तः ( ब्र. सू. २।१।३ ) इति सूत्रे प्रतिपादितम् । याज्ञवल्क्येन च योगशास्त्रं प्रतिपादितमिति

योगशास्त्रं च मत्प्रोक्तं ज्ञेयं योगमभीप्सता । ( याज्ञ. ३।११० )

इति प्रायश्चित्ताध्याये तदुक्तेर्ज्ञायते । पुराणेषु च विष्णुपुराणे षष्ठांशे सप्तमाध्याये, गारुडे चतुर्दशे एकोनपञ्चाशत्तमे चाध्याये, मार्कण्डेये योगचिकित्सानामके एकोनचत्वारिंशत्तमेऽध्याये, लिङ्गपुराणे च नवमेऽध्यायेऽष्टाङ्गो योगः प्रतिपादितः । पतञ्जलिश्च सर्वमेतत्संकलय्य समाधिं साधनानि विभूतीः कैवल्यं चेति विभज्य पादचतुष्टयात्मकं सूत्रं प्रणीय जिज्ञासूनां मुमुक्षूणामधिकारिणां करतलगतामिवैतद्योगशास्त्रमाकलयत् । पतञ्जलिश्च साक्षाच्छेषावतार इति तत्प्रतिपादितेषु सिद्धान्तेषु न लेशतोऽपि संशयस्यावकाशः ।

मूर्द्ध तृणमथ क्षणं शिरसि यद्वहन्त्यकि तत्
विवादविषये नृणां भवति साधु निर्णायकम् ॥
भुवं सविपिनां सदा शिरसि संवहन्नक्लमो
प्रभुः पवनपायिनां श्वसिति कः पुनः संशयः ॥

इत्यभियुक्तोक्तिरप्यमुमर्थमुपोद्बलयति ।

पतञ्जलिश्चायं गोनर्दीये देशे कस्याचिद्विप्रस्याञ्जलेः संध्याकरणसमये पतित इत्यैतिह्यं शब्देन्दुशेखरे पञ्चसंधिप्रकरणे शकन्ध्वादिषु पररूपं वाच्यमिति वार्तिके पतञ्जलिशब्दप्रसङ्गेन नागोजीभट्टैरुक्तम् । अञ्जलेः पतितस्य च तस्य तेन ऋषिणा सह संवादो बृहद्गणेशकल्पलतायां दृश्यते । यथा—

तवाञ्जलौ महाभाग पतितोऽहं हिताय ते ।
पतञ्जलिं च मां विद्धि शेषं धराधरं प्रभो ॥
गणेशेनैव विप्रेश प्रेरितोऽहं विशेषतः ।
भ्रान्तिनाशार्थमेवं ते जानीहि सहसाऽऽगतम् ॥

ततस्तस्मै योगशास्त्रं जगाद स पतञ्जलिः ।
यथा विघ्नेश्वरेणैव दर्शितं तादृशं किल ॥

इति । यच्च पतञ्जलिस्तस्मा ऋषये प्रोक्तवान्योगशास्त्रं तदेवैतत्पादचतुष्टयात्मकं योगसूत्रम् । तच्च व्यासमुनिभिर्भाष्यरूपेण विवृतमित्यप्युल्लेखस्तत्रैवाग्रे दृश्यते । यथा

तस्य भाष्यं चकारोऽपि व्यासो गूढार्थसिद्धये इति ।
पतञ्जलिचरिते च रामभद्रदीक्षितैरित्थमभ्यधायि—

पुरा किल श्रीभगवाञ्शेषशायी नारायणः कदाचिद्ध्यानस्थः श्रीशंकरं नृत्यन्तं साक्षात्कुर्वन्नानन्दभरव्याप्तचेता बभूव । आनन्दभरनिबन्धनं च तद्वपुर्गौरवं कदाप्यननुभूतपूर्वमसहमानः शेषः किमेतदिति व्याकुलचेता इतस्ततः पश्यन्नपि तन्निमित्तमवीक्षमाणो भारातिशयेनातिपीडितोऽभूत् । समाधेर्व्युत्थितः किमेतदिति शेषेण पृष्टो नारायणो यथावृत्तमकथयत् । नारायणस्याप्यानन्दातिशयावहं तन्नर्तनविशेषं विभावयता तद्दिदृक्षाक्रान्तमनसा शेषेण नारायणस्तदर्थमभ्यर्थित इत्थमूचे ।

आसीत्पुरा पाणिनिनामा मुनिः पणिपुत्रात्पाणिनाद्याख्यो संजातः । स च तपःसमाराधितेन चन्द्रमौलिना डमरुं संवाद्य चतुर्दशसूत्राऽभिव्यक्त्यानुगृहीतः शब्दशास्त्रे सूत्रं रचयामास । कात्यायनमुनिरपि तथैव तपःसमाराधितचन्द्रमौल्यनुगृहीतस्तेषु सूत्रेषु न्यूनतामाकलयंस्तत्परिपूर्त्यै वार्तिकमाबबन्ध । संजातमात्सर्येण पाणिनिनाभिशप्तः कात्यायनस्तेन प्रत्यभिशप्तः पाणिनिश्चेति द्वावपि लोकान्तरमगमताम् । भक्तरक्षी नीलकण्ठश्च तत्र भाष्यविरचनाय त्वां नियोक्ष्यते । तदर्थं च त्वं धरातले धृतावतारश्चिदम्बरक्षेत्रे नेत्रोत्सवं शंकरनर्तनं द्रक्ष्यसीति ।

एवमुक्तः स शेषो भूमाववतितीर्षुः स्वजन्मोचितमुनिवंशान्वेषणायेतस्ततः संचरन्काञ्चिच्छान्तामरण्यानीमवाप । तस्यां च गोव्याघ्रप्रभृतयोऽखिलाः प्राणिनो नैसर्गिकमपि वैरमपहाय मिथः सौहार्देन विहरन्तिस्म । ईदृशवैरत्यागमूलभूता यमान्तर्गताहिंसाप्रतिष्ठा कोऽत्राध्यारूढ इति सविस्मयाक्रान्तचेतास्तत्र संचरन्काञ्चित्तपस्विनीं गोणिकानाम्नीमालोच्य तामेव परामहिंसाकाष्ठामध्यारूढां प्रकल्पयंस्तद्गुणगणाकृष्टहृदयस्तां मातृत्वेन विभावितवान् । सा चादित्यमाराधयन्ती पुत्रं मे प्राज्ञमर्पयेति मनसाभिसंधाय यावदादित्यायार्घ्यं ददाति तावद्देवार्थं शेष आदित्यप्रेरितस्तस्या अञ्जलौ सूक्ष्मरूपेण प्रविश्यार्घ्येण सह मुनिरूपधारी भूमौ पपात । तेजस्विनं तमतिदिव्याकृतिं बालकं संवीक्ष्यैष मे पुत्रः पूर्वपुण्यपरिपाकात्प्रादुरासेति मनसा निश्चित्य तं मूर्ध्न्युपाघ्रायाञ्जलेः पतित इत्यतः पतञ्जलिनाम्ना तमाह्वयत् । स च तां प्रणम्य तदनुज्ञां

संपाय दक्षिणोदधितटे तपश्चचार। तपोन्तरायं संपादयितुं समागतमप्सरोगणं तृणायामन्यत। तत इन्द्रेण नियुक्ताः सिद्धचारणगणास्तस्योपरि पुष्पवृष्टिमातेनुः। तपोविशेषेण संतुष्टान्तरङ्गं वरप्रदानाय गिरिजया सार्कं समागतं श्रीशंकरं भाष्यनिर्माणपाटवमयाचत पतञ्जलिः। श्रीशंकरश्च तथेत्युक्त्वा ताण्डवदिदृक्षाक्रान्तमानसं च तं 'चिदम्बरपुरे ताण्डवं द्रक्ष्यसि' इत्येवं गिरानुग्रासान्तरधात्। पतञ्जलिश्च चिदम्बरपुरं गतस्तत्र व्याघ्रपदा तपस्विना 'अयं शेषावतार' इति समाधिदृशा विजानताऽर्घ्यपाद्यादिभिः संमानितोऽभूत्। विश्वकर्मणा च निर्मितायां हाटकमय्यां सभायां श्रीशंकरानुग्रहलब्धदिव्यदृष्टिस्ताण्डवमहोत्सवमश्रुतपूर्वमन्वभूद्व्याघ्रपदा सह पतञ्जलिः। ताण्डवान्ते च पदशास्त्रे भाष्यं विरचयेति पतञ्जलिं ब्रुवन्नन्तरधाच्चन्द्रमौलिः। तदनुग्रहलब्धबोधश्च पतञ्जलिर्लोकोपकृतये महाभाष्यं व्यरचयत्। अध्ययनाय समागतान्बहूंश्छात्रगणान्स्वयं विधृतफणासहस्रो जवनिकान्तर्हितो भूत्वा जवनिकानपसारणे कृतनिर्बन्धो महाभाष्यमध्यापयामास। अथ कदाचित्ते वासरूपसूत्र (पा सू. ३।१।९४) पर्यन्तं वृत्ताध्ययनाः प्रतिकूलतामुपगते विधौ जवनिकान्तःस्थस्वरूपदिदृक्षया कृतजवनिकापसारणाः कृतागसो दृष्टिमात्रेणैव भस्मसाद्बभूवुः। तेष्वेकस्तदानीं तत्रासंनिहितः पश्चादागतो दृष्टमात्र एव ब्रह्मराक्षसो भवेत्यभिशप्तोऽभूत्। प्रणतिपरंपरापूर्वकं च तेन शापविमोचनाय सविशेषं संप्रार्थितः पतञ्जलिर्धृतजटिलमनुष्यमूर्तिरित्थमब्रवीत्। पचेर्निष्ठायां किं रूपमिति त्वया पृष्टो यः पक्वमिति वदेत्तमेतद्भाष्यमध्याप्य शापान्मुच्यस इति। ततो योगशास्त्रे सूत्राणि वैद्यशास्त्रे वार्तिकानि च विरच्य गोनर्ददेशं गत्वा स्वमातरं गोणिकां नमस्कृत्यावतारकृत्यं समाप्य स्वमातरि त्रिदिवं गतायां स्वयमपि स्वस्वरूपमगमत्पतञ्जलिः।

ततो गते बहुतिथे काले पतञ्जलिरेव स्वजनुषा कं. . . . . . . . . . . पितृसंकेतितां चन्द्रगुप्तेति संज्ञां लेभे। स च प्रौढे वयसि राक्षसान्तिकं समागतो राक्षसेन पचेर्निष्ठान्तं रूपं पृष्टः पक्वमित्युवाच। तत एव शापावसानसमयं संनिहितमाकलयन्प्रहृष्टो राक्षसस्तस्मै पातञ्जलभाष्यमशेषं मासद्वयेनाचचक्षे। सोऽपि विप्रो नखाग्रेण वटपत्रेषु निखिलं भाष्यं विलिलेख। राक्षसेन च शापान्मुक्तेन दिव्यमूर्तिना भाष्यप्रचारं कुर्वित्याज्ञप्तः स चन्द्रगुप्तस्तानि वटदलान्युत्तरीयवस्त्राणि स्वाशीरसि दधन्गन्तुं प्रवृत्तोऽध्वश्रान्तो नद्यास्तीरे कस्यापि वटतरोरधस्ताच्छायायां वस्त्रबद्धं च तद्दलचयमुपधाय निदद्रौ। अत्रान्तरे केनचिदजेन वटदलचयग्रासलोलेन कानिचिद्दलान्याकृष्टानि। प्रबुद्धश्च तेषूत्तमेषु वटदलेषु यावद्दर्शनमवचित्य बुभुक्षाक्रान्तो यावदितस्ततः पश्यति तावत्कापि क्षुद्रकन्या तस्य पुरतो नवनीतं निधाय भक्तिप्रतिपन्नया गिरेत्थमभाषीत्। मया पूर्वं बहवस्तपोधनाः समाराधिताः। तैरित्थमुक्तं यदम द्विजरूप-

धारी पतञ्जलिरेव पतञ्जलभाष्यमधीयानः समेष्यति । तस्य पत्नी भूत्वा परं श्रेयोऽवाप्स्यसीति । अतोऽहं प्रार्थये जनुषो मे साफल्यं कुर्विति । एवं संप्रार्थितः स पूर्वं ब्राह्मणक्षत्रियविशां तिस्रः कन्याः क्रमेण परिणीय ततस्त्वां वोढुमीहे इत्युक्त्वा तया साकमुज्जयिनीं गत्वाऽखिलं भाष्यं विलिख्य पाठितवान् । क्रमेण चतस्रः कन्याः परिणीय तासु क्रमेण वररुचिविक्रमार्कौ भट्टिर्भर्तृहरिश्चेति चतुरः पुत्रांल्लेभे । ततः कियता कालेन पतञ्जलिरेवायं गोविन्दभगवत्पूज्यपादरूपेणावतीर्याद्वैतमार्गप्रवर्तकान्-श्रीमच्छंकराचार्याननुपदिदेशेति ।

अयं च पतञ्जलिः खिस्ताब्दात्पूर्वमेकशतकात्माक्संजात इत्यनुमीयते । यतः खिस्ताब्दात्पूर्वं षष्ठे शतके ततः प्राग्वा पाणिनिरासीदिति निश्चितप्रायमेव । तादृशपाणिनिप्रणीतस्य व्याकरणसूत्रस्य व्याख्यानरूपं महाभाष्यं पतञ्जलिना विरचितमित्यतः पाणिन्यनन्तरं पतञ्जलेः समयः । तथा खिस्ताब्दात्प्राक्तृतीये शतके मौर्या राजानो बभूवुः । मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः (पा. सू. ५।३।९९) इति च पतञ्जलेरुक्तिर्दृश्यते । तथा खिस्ताब्दात्प्राग्द्वितीये शतके पुष्यमित्रो नाम राजाऽऽसीत् । पुष्यमित्रो यजते । पुष्यमित्रो याजयाते (पा. सू. ३।१।२६ ) इह पुष्यमित्रं याजयामः (पा. सू० ३।२।१२३ ) इत्येतादृशी च पतञ्जलेरुक्तिस्तमेव समयं पतञ्जलेरवगमयति । तदानीमेवोत्तरतः कश्चियवना अपि बलीयांसो बभूवुः । तदनुसारेण अरुणद्यवनः साकेतम्, अरुणद्यवनो मध्यमिकाम् (पा. सू. ३।२।१११ ) इत्येतादृशी पतञ्जलेरुक्तिर्दृश्यते । साकेतम् = अयोध्यापुरम् । मध्यमिकाम् = तन्नामिकां पुरीम् । तथा च पाणिनेरनन्तरं गृहीतजनुषा पतञ्जलिना खिस्ताब्दात्पूर्वं द्वितीयशतके समलंकृतमिति संभाव्यते ।

आधुनिकाः केचनेत्यमाहुः—योगसूत्रकारः पतञ्जलिर्व्याकरणमहाभाष्यकारादन्य एव । पूर्वोक्तः कालस्तु व्याकरणमहाभाष्यकारस्यैव । योगसूत्रकारः पतञ्जलिस्तु परम-प्राचीनो द्वापरयुगान्ते जातः । अत एव द्वापरकलियुगयोः संध्याकाले जातेन महर्षिणा व्यासेन एतेन योगः प्रत्युक्तः (ब्र. सू. २।१।३) इति सूत्रे योगशब्देन पतञ्जलिप्रणीतयोगशास्त्रस्यानुवादः कृतः संगच्छते । किं च योगसूत्रभाष्यमपि महर्षिणा व्यासेन विरचितम् । अतोऽयं योगसूत्रकारः पतञ्जलिर्महर्षेर्व्यासात्प्राक् द्वापरयुगे संजात इति ।

तदपरे न क्षमन्ते । तथा हि ।

> योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन ।
> योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

इत्यभियुक्तोक्त्या व्याकरणमहाभाष्यकार एव योगसूत्रकर्तेति निश्चीयते । किं च पतञ्जलिचरिते व्याकरणमहाभाष्यकारं पतञ्जलिं प्रस्तुत्य

> सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः ।
> कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् ॥ (पत.च.५।२५)

इत्युक्तम् । तथा खिस्ताब्दीयैकादशशतके संजातेन चरकटीकाकारेण चक्रपाणिना चरकटीकायां

पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः ॥

इत्युक्तम् । तथा ततोऽपि पूर्वं संजातेन भर्तृहरिणा वाक्यपदीये प्रथमे ब्रह्मकाण्डे

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥ ( वा. प. १।१४८ )

इत्युक्तम् । एतच्च त्रिविधमलापसारणं भाष्यकृदेककर्तृकमिति भर्तृहरेराशयः । यतो भाष्यकारप्रशंसेयम् । एककर्तृकत्वानङ्गीकारे च कथमियं भाष्यकारप्रशंसा भवेत् । इयं च भाष्यकारप्रशंसेति तट्टीकाकृता स्पष्टमेवोक्तं द्वितीये काण्डे

अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् । ( वा. प. २।४८५ )

इति श्लोके । तत्र ह्येवमुक्तम् 'तदेवं ब्रह्मकाण्डे कायवाग्बुद्धिविषया ये मला इत्यादिश्लोकेन भाष्यकारप्रशंसोक्ता । इह चैवं भाष्यप्रशंसेति शास्त्रस्य शास्त्रकर्तुश्च टीकाकृता ( भर्तृहरिणा ) महत्त्वोपवर्णिता' इति ।

तथा च व्याकरणमहाभाष्यकर्ता योगसूत्रकर्ता चैक एवेति सिध्यति । एतेन योगः प्रत्युक्तः ( ब्र. सू. २।१।३ ) इति व्याससूत्रे योगशब्दोल्लेखस्तु न विरुध्यते। यतो योगशास्त्रं न पतञ्जल्युपज्ञम् । योगशास्त्रस्य हिरण्यगर्भेणैवादौ प्रणीतत्वादिति प्रागेवोक्तम् । पतञ्जलिना तु तत्र शास्त्रे सूत्राणि विरचय्य तच्छास्त्रं व्यक्ततरतामनायि । अथ योगानुशासनम् ( यो. सू. १।१ ) इति सूत्रे वाचस्पतिमिश्रैरपि योगशास्त्रस्य हिरण्यगर्भप्रणीतत्वात्कथं पतञ्जलेर्योगशास्त्रकर्तृत्वमित्याशङ्क्य सूत्रकारेणानुशासनमित्युक्तं न तु शासनमित्यर्थ इत्युक्तम् । वृत्तिकारैरपि योगोऽनुशास्यते विविच्य बोध्यतेऽनेनेति योगानुशासनं शास्त्रम् । अनेन हिरण्यगर्भाद्युपदिष्टस्यैव योगस्य विविच्य बोधनमत्र ध्वनयता प्रामाण्यमस्य सूचितम् ( पृ. २२० प. ५ ) इत्युक्तम् । एवं च पतञ्जलेः प्रागपि हिरण्यगर्भादिप्रणीतस्य योगशास्त्रस्य सिद्धत्वादेतेन योग इति ब्रह्मसूत्रे तस्य योगशब्देन निर्देशानङ्गीकारे न काचिदसंगतिः तथा पतञ्जलिप्रणीतयोगसूत्रव्याख्यानरूपभाष्यप्रणयनमपि महर्षेर्व्यासस्य न विरुध्यते । न हि सूत्रेषु भाष्यं विरचितमित्येतावता सूत्रकृतो जन्मानन्तरमेव भाष्यकृतो जन्मेति नियमे काचिदनुकूला युक्तिर्दृश्यते । केवलं सूत्रप्रणयनानन्तरं भाष्यप्रणयनमिति क्रिययोरेव क्रमः । न तु कर्त्रोः । तथा च पश्चादुत्पन्नेनापि पतञ्जलिना प्रणीतेषु सूत्रेषु भाष्यं प्रणेतुं महर्षिर्व्यासः समर्थ एव । सांप्रदायिकैर्व्यासस्य चिरजीवित्वाङ्गीकाराद्व्यासजन्मानन्तरं भूयसा कालेन पतञ्जलेरुत्पत्तावपि न किंचिद्विरुध्यते । अनया च

रीत्या पतञ्जलिप्रणीतयोगशास्त्रमभिलक्ष्यीकृत्याऽथेतेन योग इति सूत्रे योगशब्दोल्लेखः कृत इति समर्थयितुं शक्यते ।

अन्ये त्वाहुः—चिरजीवित्वेनोपपत्तिरास्तां नाम । किं तु नायं व्यासशब्दो व्यक्तिविशेषे संकेतितः ।

बुद्ध्यमानः सदर्थं वै ग्रन्थार्थं कृत्स्नशो नृप ।
ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप ।
य एवं वाचयेद्ब्रह्मन्स विप्रो व्यास उच्यते ॥

इति भविष्यपुराणानुरोधेन ज्ञानविशेषयुक्तो विशिष्टप्रवचनकर्ता व्यासशब्दाभिधेय इति प्रतीयते । मन्वन्तरभेदेन व्यासभेदस्तु प्रसिद्ध एव । प्रसिद्धिश्चेयं न व्यासशब्दो व्यक्तिविशेषनियत इति दर्शयति । रङ्गरामानुजाचार्यैश्च तत्र तत्र श्रुतप्रकाशिकाकाराः श्रीसुदर्शनसूरयो व्यासार्यशब्देन निर्दिश्यन्ते । तदुक्तम्—

श्रुतप्रकाशिकाभिख्यां व्याख्यामादाय रङ्गराट् ।
यं वेदव्यासमपरं जगौ सदसि तं भजे ॥

इति । तथा च पुराणकर्तुर्महर्षेर्व्यासादयं व्यासो भिन्न इत्यङ्गीकारे न किंचिद्बाधकं संदृश्यते । भारतादीन्यष्टादश पुराणानि, वेदव्यस्त्या, ब्रह्मसूत्राणि योगसूत्रभाष्यं चेत्यादीनि व्यासकृतित्वेन प्रसिद्धानि । तेषु पुराणकर्ता वेदविभागकर्ता चैक एव । अत एव ब्रह्मवैवर्ते प्रकृतिखण्डे चतुर्थेऽध्याये व्यासं प्रकृत्य

तदा त्वचो वरं प्राप्य स कवीन्द्रो बभूव ह ।
तदा वेदविभागं च पुराणं च चकार ह ॥

इत्युक्तम् । अत्र हि पुराणवेदविभागयोरेककर्तृत्वेनोल्लेखो दृश्यते । किं चात्र व्यासवर्णने वेदविभागपुराणवन्निर्देष्टुं समुचितमपि योगसूत्रभाष्यं ब्रह्मसूत्रं च यतो न निर्दिष्टमतो मन्यामहे न पुराणकर्त्रा ब्रह्मसूत्रं योगसूत्रभाष्यं च प्रणीतमिति । तत्र पुराणकर्ता महर्षिर्व्यासः प्राचीनः । योगभाष्यप्रणेता ब्रह्मसूत्रकारो व्यासमुनिस्तु तदपेक्षयाऽर्वाचीनः । अत एव ब्रह्मसूत्रकारा महाभारतकर्तारं महर्षिं व्यासमभिलक्ष्यीकृत्य स्मरन्ति च (ब्र. सू. २।३।४७, ३।१।१४) इत्येवं सूत्रयामासुः । महाभारतकर्ता महर्षिर्व्यासः स्मृतिकारत्वेनात्राभिलषितः सूत्रकृतामिति तु 'स्मरन्ति च व्यासादयः', 'मनुव्यासप्रभृतयः शिष्टाः' इति तत्रत्यशारीरभाष्यादवगम्यते । एतेन शिष्टापरिग्रहा अपि व्याख्याताः ( ब्र. सू. २।१।१२ ) इति सूत्रे शिष्टशब्दोऽपि मनुव्यासादीनुद्दिश्य निर्दिष्ट इति तत्रत्यभाष्यादवगम्यते । पुराणकर्तुर्महर्षेर्व्यासस्य प्रमाणभूतत्वेनोल्लेखो युक्त एव ।

कृष्णद्वैपायनं व्यासं विद्धि नारायणं विभुम् ।
कोऽन्यो हि भुवि मैत्रेय महाभारतकृद्भवेत् ॥( वि. पु. ३।४।५)

इति विष्णुपुराणवचनेन तस्य नारायणावतारत्वावगमात्। अत एव भारतः पञ्चमो वेद इति प्रसिद्धिः। अयं च महर्षिर्व्यासो द्वापरयुगशेषे बभूव। अनेनैव वेदविभागः कृतः।

ततः सप्तदशे जातः सत्यवत्यां पराशरात्।
चक्रे वेदतरोः शाखा द्वापरे सोऽल्पमेधसः॥ (भाग. १।३।२१)

इति भागवतोक्तेः। तथा च ब्रह्मसूत्रकारो व्यासो महाभारतकाराद्व्यासादभि-न्नस्ततोर्वाचीन इति सिद्धम्।

ननु गीतायां ब्रह्मसूत्रपदैश्चैव (गी. १३।४) इति ब्रह्मसूत्राणामुल्लेखो दृश्यते। गीता च महाभारतान्तर्गता। तथा च तदनुसारेण महाभारतापेक्षया ब्रह्म-सूत्राणां प्राचीनत्वं सिध्यतीति चेन्न। तत्र ब्रह्मसूत्रपदशब्देन ब्रह्म-सूचकान्यात्मेत्येवोपासीत (बृ. १।४।७), तत्त्वमसि (छा. ६।८।७) इत्यादीनि वाक्यान्युच्यन्ते इति भाष्यकारैरेव तथोक्तत्वात्। आनन्दगिरि-चतुर्धर-मधु-सूदन-श्रीधरादयो व्याख्याकारा अप्यमुमेवार्थमनुसस्रुः। पद्यते बोध्यतेऽनेनेति पदं बोधजनकं वाक्यम्। 'ब्रह्मसूत्रपदशब्देन जन्माद्यस्य यतः (ब्र. सू. १।१।२) इत्यादीनि सूत्राणि गृह्यन्ते' इति शंकरानन्दकृतं व्याख्यानं तूक्तभाष्यायसंमतत्वादुपेक्ष्यम्।

येन च व्यासमुनिना ब्रह्मसूत्राणि प्रणीतानि तेनैव पातञ्जलयोगसूत्रभाष्यं विर-चितमित्यङ्गीकारे न किंचिद्बाधकं दृश्यते। किं च ब्रह्मसूत्रकारस्येव योगभाष्यकार-स्यापि प्राचीनत्वं नावगम्यते। पतञ्जलिप्रणीतयोगसूत्रेषु भाष्यप्रणयनात्। किं च योगभाष्ये शब्दार्थप्रत्ययानाम् (यो. सू. ३।१७) इति सूत्रे श्रोत्रियंश्छन्दो-धीते (पा. सू. ५।२।८४) इति पाणिनिसूत्रस्योल्लेखो दृश्यते। यद्यपि 'तथा च पाणिनिरेवमाह' इत्येवं पाणिनीयत्वेन तत्र नोल्लेखस्तथापि पाणिनिसूत्रस्यैव स इति निश्चीयते। यतो वाक्यार्थे पदरचनायां हि तदुदाहरणम्। यदि साङ्-जिकतयैवायमुल्लेखः स्यात्तर्हि 'श्रोत्रियश्छन्दोऽधीते' इत्येवं कृतः स्यात्। न तु श्रोत्रियंश्छन्दोऽधीत इति। पाणिनिना हि श्रोत्रियशब्दस्याप्युदात्तत्वाय नित्यं कल्पितं 'श्रोत्रियन्' इति। किं च यथा स्मरन्ति चेत्यादिषु ब्रह्मसूत्रेषु महर्षि-व्यासवचनानि प्रमाणत्वेनाभिसंहितानि तथा योगभाष्ये वैयासिकी गाथा प्रमाणत्वेन निर्दिष्टा दृश्यते। यथा अनित्याशुचिदुःखानात्मसु (यो. सू. २।५) इति सूत्रे

स्थानाद्बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः॥

इति। इयं च वैयासिकी गाथेति तत्त्ववैशारद्यां वाचस्पतिमिश्रैः स्पष्टमेवो-क्तम्। किं च वीतरागविषयम् (यो. सू. १।३७) इति योगसूत्रे वीतरागाः

कृष्णद्वैपायनाद्य इति वाचस्पतिमिश्रैरुक्तम् । एवं च सूत्रकारैः कृष्णद्वैपायनमभिसंधाय वीतरागशब्दोच्चारणात्तत्र पुराणकर्ता महर्षिर्व्यासः कृष्णद्वैपायनापरपर्यायो गृह्यते । तथा च तत्सूत्रभाष्यकृद्व्यासस्तत्सूत्रकाराभिसंहिताद्बादरायणादन्य एव स्वीकार्यः । किं च पूर्वमीमांसासूत्रकारो जैमिनिः स्वसिद्धान्ते श्रद्धामुत्पादयितुं केषुचित्स्थलेषु बादरायणं निर्दिष्टवान् । यथा अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ( जै सू. ५।२।१९ ), जातिं तु बादरायणोऽविशेषात्० ( जै. सू. ६।१।८ ), विधिं तु बादरायणः ( जै. सू. १०।८।४३ ), विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ( जै. सू. ११।१।६४ ) इति । ब्रह्मसूत्रकारास्तु बहुषु स्थलेषु जैमिनिमतं पूर्वपक्षत्वेनोल्लिख्य तद्विपरीतं स्वसिद्धान्तं बादरायणशब्दमुल्लिख्य प्रस्थापयामासुः । यथा भावं तु बादरायणोऽस्ति हि (ब्र. सू. १।३।३३ ), पूर्वं तु बादरायणो हेतुव्यपदेशात् ( ब्र. सू. ३।२।४१ ) पुरुषार्थोऽतः शब्दादिति बादरायणः ( ब्र. सू. ३।४।१ ) इत्यादौ । जैमिनेरुल्लेखस्तु तत्र तत्र मध्वादिष्वसंभवादनधिकारं जैमिनिः ( ब्र. सू. १।३।३१ ), धर्मं जैमिनिरत एव ( ब्र. सू. ३।२।४० ), शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ( ब्र. सू. ३।४।२ ) इत्येवं दृश्यत एव । ब्रह्मसूत्रेषु च सूत्रकारैर्बादरायण इति स्वनाम्न एवोल्लेखः कृतः । भगवान्बादरायणः स्वमतेन सिद्धान्तमाहेति श्रीभाष्ये ( ब्र. सू. ४।४।७, ४।४।१२ ) स्पष्टमेवोक्तत्वात् । यद्यपि स्वनामोल्लेखोऽनुचितस्तथापि न सर्वत्र । प्रमाणत्वेन नामनिर्देशे कर्तव्ये स्वनामोल्लेखो न संभवति । यत्र तु पूर्वाचार्यविरुद्धं स्वमतं प्रतिपादनीयं तत्र स्वनामोल्लेखे न किंचिद्बाधकं दृश्यते ।' वयं तु पश्यामः', 'इति तु वयम् ' इत्येवं ग्रन्थकृदुक्तिदर्शनात् । जैमिनिनापि कर्मभेदं तु जैमिनिः ( जै. सू. ६।३।४ ) तदावृत्तिं तु जैमिनिरह्नाम्० (जै. सू.८।३।७) अधिकं च विवर्णं च जैमिनिः० (जै.सू.९।२।३९) इति सूत्रेषु स्वमतप्रतिपादने स्वनामनिर्देशः कृतः । एवं चार्थादेव जैमिनिमतप्रतिक्षेपको ब्रह्मसूत्रकारो बादरायणो, जैमिनिना प्रमाणत्वेन निर्दिष्टाद्बादरायणो भिन्न एवेति सिध्यति । किं च जैमिनिना बादरायणं प्रमाणत्वेन निर्दिश्य ये सिद्धान्ताः स्त्रीणां स्वर्गेऽधिकार इत्यादयः प्रतिपादितास्ते ब्रह्मसूत्रेषु नोपलभ्यन्ते । तथा च प्राचीनो बादरायणोऽन्य एवेति सिद्धम् ।

अथ पुराणप्रणेतुरिव ब्रह्मसूत्रकर्तुरपि व्यासशब्देन निर्देशो दृश्यते । यथा रसगङ्गाधरे श्लेषालंकारप्रकरणे 'शब्दादेव प्रमितः ( ब्र. सू. १।३।२४ ) इति सूत्रितमुत्तरमीमांसाकारैर्व्यासचरणैः ' इत्युक्तम् । तथा ब्रह्मसूत्रकर्त्रा स्वयमेव स्वस्य बादरायणशब्देन निर्देशः कृतः । किं च मधुसूदनपण्डितैरपि प्रस्थानभेदे ' भगवता बादरायणेन कृता चतुरध्यायी शारीरकमीमांसा ' इत्युक्तम् । तथा ब्रह्मसूत्रकर्तुः पाराशर्यशब्देनापि निर्देशो दृश्यते । यथा श्रीभाष्यारम्भे ' पाराशर्यवचःसुधाम् ' इति । तथा चोभयोरपि व्यास इति

बादरायण इति पाराशर्य इति च संज्ञैक्यादनयोरभेद एवेति मत्वा चिरजीवित्वाङ्गीकारेणैकस्यैव कालभेदेन तत्तद्ग्रन्थकर्तृत्वं साम्प्रदायिकाभिमतं स्वीकार्यमथ वा प्राचीनव्यासस्यैवायमंशावतारः प्रकल्पनीय आहोस्वित्सर्वथायमर्वाचीनो व्यासो भिन्न एवेत्यत्रत्यं तत्त्वं प्रदर्शितान्यन्यानि च साधकबाधकप्रमाणान्यालोच्य सुधीभिः स्वयमूह्यमिति विरम्यते ।

अस्य च व्यासभाष्यस्य टीका तत्त्ववैशारदी वाचस्पतिमिश्रेण विरचिता। भाष्यतत्त्वं विशदीकुर्वाणेयं तत्त्ववैशारदीति नामान्वर्थमेव दधाति। वाचस्पतिमिश्रश्चायं पाटलाग्रामनिवासी ब्राह्मणोऽनेकतन्त्रेष्वप्रतिहतगतिर्महामेधावी जगति प्रसिद्ध एव। अस्य च भार्या भामतीनाम्नी महापतिव्रताऽऽसीत् । तन्नाम्नैवानेन श्रीमच्छारीरभाष्यटीका भामती विरचिता । अयं च गौडब्राह्मण इति 'वाचस्पतिमिश्र' इति मिश्रान्तेन नाम्ना ज्ञायते । यतः प्रायो मिश्रशब्दान्तानि गौडब्राह्मणनामानीत्याधुनिकाः प्रतिपादयन्ति । अयं च वाचस्पतिमिश्रो नवमे शतके संजातः। यतोऽनेनैव कृते न्यायसूचीनिबन्धे

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।<br>
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥

इत्युक्तम् । एतच्च वस्वङ्कवसु (८९८) मानं प्रायस्तदीयदेशानुसारेण विक्रमसंवत एव स्यात् । विक्रमसंवत्सरारम्भानन्तरं च सप्तपञ्चाशद्वर्षैः ख्रिस्ताब्दारम्भ इति वस्वङ्कवसुसंख्या सप्तपञ्चाशत्संख्ययोना कृता चेत् (८४१) ख्रिस्ताब्दमानं लभ्यते ।

पातञ्जलसूत्रवृत्तिकारश्च नागोजीभट्टो महाराष्ट्रब्राह्मण आश्वलायनशाखाध्यायी 'काळे' इत्युपनामकोऽतितीक्ष्णबुद्धिरासीत् । अस्य पूर्वजैरुपाध्यायपदवी संपादिता । अयं च शिवभट्टात्सतीदेव्यां संजातः । मातरि चास्य गर्भिण्यां पूर्णगर्भावस्थायां प्रसवात्प्रागेवोपरतायां तज्जठरं विदार्य निष्काशितोऽयम् । एतदभिप्रायक एव ग्रन्थान्ते 'उपाध्यायोपनामकसतीगर्भजनागोजीभट्टकृतं' इत्युल्लेखो दृश्यते । पुत्रवात्सल्येन च जन्मनः प्रभृति पित्रैव संवर्धितः कृतोपनयनस्तत्तच्छास्त्राण्यध्येतुं प्रावर्तत । एकदा च तं पञ्चदशवर्षदेशीयं क्वचिद्याज्ञिके कर्मणि स्वयं गन्तुमप्रभुः पिता प्राहिणोत् । तत्र गतश्चायं धार्ष्ट्येन पित्रासनं समुपविष्टः पितुसदृशविद्यायाः अभावेनान्यैर्ऋत्विग्भिर्निर्भर्त्सितो निर्भर्त्सनया च प्रतिबुद्धजन्मान्तरीयसंस्कारः सद्य एव सर्वं तृणाय मत्वा कथमपि पितुराज्ञां संपाद्य वाराणसीक्षेत्रं गत्वा भट्टोजीदीक्षितस्य पौत्राद्धरिदीक्षितात्समग्रं व्याकरणमधीतवान् । क्रमेण च शास्त्रान्तरेष्वपि बुद्धिगतितैक्ष्ण्यात्परं कौशलमवाप । पूर्वसंस्कारानुरोधेन चेश्वरदत्तप्रतिभानैर्मल्येन नीरक्षीरविवेके हंस इव सारासारविवेकनैपुण्येन तदानींतनाखिलपण्डितेष्वग्रेसरतां संपादितवान् । शम्याष्ट्लञ् (पा. सू. ४।३।१४२) इति पाणिनिसूत्रे प्रत्ययस्य टित्त्वपित्त्वविषये भट्टोजीदीक्षिता

महापण्डिता अपि संदिहाना आसन् । तत्राप्यनेन सूक्ष्मबुद्ध्या निर्णयः कृत इति प्रौढमनोरमाशब्दरत्नग्रन्थाभ्यामवगम्यते । यत्र चास्यापि निर्णयो नाभवत्तत्र निर्णयं कर्तुमीश्वर एव प्रभुः । तथा च शब्देन्दुशेखरे स्वरप्रकरणे तत्त्वमीश्वरो वेदेत्युक्तम् । अनेन च व्याकरणशास्त्रे धर्मशास्त्रे साहित्यशास्त्रे मन्त्रशास्त्रे च शब्देन्दुशेखरपरिभाषेन्दुशेखरम ञ्जूषाप्रदीपोद्योतमर्मप्रकाशादिग्रन्थाः प्राचीनसकलग्रन्थातिशायिनो निर्मिता इति प्रसिद्धमेव । तथा षड्दर्शनवृत्तयोऽप्यनेन निर्मिता इति श्रूयते । तत्र न्यायसूत्रवृत्तिर्वैशेषिकसूत्रवृत्तिर्मीमांसासूत्रवृत्तिश्चाधुना नोपलभ्यते । योगभाष्यं च वाचस्पतिमिश्रैर्विशदीकृतमप्यनेन नागोजीभट्टेन योगसूत्रेषु वृत्तिं विलिख्य विशदतरतां प्रापितमिति मन्ये ।

नागोजीभट्टश्चायं खिस्ताब्दीयाष्टादशशतकप्रथमभागे समभवत् । यत एवमैतिह्यं श्रूयते । जयपूरमहाराजेन १७१४ मिते खिस्ताब्देऽश्वमेधयज्ञः कृतः । तदानीं तादृशाश्वमेधयज्ञमहोत्सवावलोकनार्थं निमन्त्रितोऽप्ययं नागोजीभट्टो जयपूरमहाराजस्य मुख्यसार्वभौमत्वाभावेनाश्वमेधेऽनधिकारादनधिकारिकृते च तत्र यज्ञे गन्तुमनीहमानः स्वकीयं वाराणसीक्षेत्रसंन्यासाभिनिवेशं पुरस्कृत्य यज्ञमण्डपं नालमकार्षीत् । अन्ये तु प्रायः सर्वेऽपि पण्डिता एषणापरवशास्ताद्दशयज्ञमहोत्सवावलोकनसुखमन्वभूवन् । पश्चाच्च नागोजीभट्टविषये मात्सर्याविष्टचेतसा तेषामयथापूर्वमाचरणेन तद्द्वेष्यतां स्वस्मिन्नुत्प्रेक्षमाणस्तथैव संभावितया द्वेष्यतया वाराणसीक्षेत्रनिवासलालसां नैसर्गिकीमप्यधरीकृत्य क्षेत्राद्बहिर्निष्काशितो देशान्तरं जिगमिषुः सपत्नीको दक्षिणोदधितीराभिमुखं प्रस्थितो दूरतरं गतो मार्गे शृङ्गवेरपुरं पूर्वमेव स्वकीयेन यशसा समाक्रान्तमाययौ । नागोजीभट्टेन च स्वास्मिन्कंचिद्योग्यं कार्यभागमारोप्य तद्विनिमयेनोदरपरिपूरणपरिमितं द्रव्यं याचितस्तत्रत्यो महीपतिर्देवगृहे तं पूजावसानसमयं यावद्गन्धपुष्पादिपूजासंभारसंरक्षणे नियुज्य तस्मै त्रिंशद्रूपकात्मकं मासिकं वेतनं परिकल्प्य नाम्ना परिचितमप्येतन्नामिकोऽयं व्यक्तिरित्येवं विशेषतोऽपरिचितमेव तं पुपोष । अयं च स्वपाण्डित्यमनाविष्कुर्वन्नेव कतिचिन्मासांस्तस्थौ । एकदा च राजगृहे कस्मिंश्चिन्मङ्गलमहोत्सवे विद्वत्संसदि समागतेष्वनेकेषु पण्डितेषु तूष्णीं स्थित्वैव केवलं तत्संवादं श्रोतुकामोऽयं नागोजीभट्टस्तस्यां संसदि यत्रक्वचित्स्थितोऽभूत् । पण्डितानां च मिथः शास्त्रीयचर्चायां प्रचालितायामन्यतमेन केनचित्पण्डितेन स्वोक्तिसमर्थनाय ' पण्डितललामभूता नागोजीभट्टा एवमूचुः ' इत्युक्तम् । अपरेण च ' नागोजीभट्टानां नायमभिप्रायः ' इति कथयता तद्व्युत्थापितम् । स्वकीयस्वरूपगोपने दक्षोऽप्ययं नागोजीभट्टस्तं संवादं शृण्वन्नभिनिविष्टबुद्धिरनवहितचेताः सहसैव वक्तुं प्रवृत्तः साधकबाधकप्रमाणानि प्रदर्श्यायमेवाभिप्राय इति सोपपत्तिकं सविस्तरं याथातथ्येनोपपादितवान् । तत एव सर्वे विद्वांसो राज्ञा सह चकित-

मनसो बभूवुः। कोऽयमपरो नागोजीभट्ट इत्यपि केचिदुत्प्रेक्षां चक्रुः। राज्ञा च सादरं सविनयं संप्रार्थितः स्ववृत्तान्तं यथावृत्तमकथयत्। पूजासंभारसंरक्षणनियोगमज्ञानतः कृतमपि स्वापराधत्वेनाकलयन् राजा तं स्वापराधं परिमिमार्जिषुरर्धराज्यप्रदानं तस्मै प्रतिश्रुतवान्। स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् (यो. सू. ३।५१) इति सूत्रोक्तरीत्या सङ्गकरणेऽनिष्टं भावयतस्त्रैलोक्यराज्यमपि तृणायैव मन्यमानस्य नागोजीभट्टस्य चेतसि लेशतोऽपि राजवचो न पदमधात्। प्रत्युत तस्मात्पुरान्निर्जिगमिषू राजकृतेन प्रार्थनातिशयेन किंचित्कार्यमकृत्वैव केवलं पूर्वसंकल्पितमेव वेतनं स्वीकृत्य यावज्जीवं तत्र निवासं चेतसा संकल्पितवान्। तत्र स्थितेन च तेनानेके ग्रन्थाः संग्रथिताः। नागोजीभट्टश्चायं पतञ्जलेरंशावतार इति सांप्रदायिका वदन्ति।

तदेवं पतञ्जलिना सूत्राणि विरचय्य तद्द्वारा योगतरोः फलं लोकानां हस्तेषु समर्पितम्। श्रीमद्भाष्यकारैर्व्यासमुनिभिस्तत्फलास्वादं ग्राहयितुं सूत्राणि व्याख्याय तद्विकासितम्। वाचस्पतिमिश्रैश्च भाष्यं टीकया विरचयद्भिस्ताद्दृशफलान्तर्गतो रस आस्वादार्हावस्थां प्रापितः। नागोजीभट्टैश्च वृत्तिं विरचय्य तद्रसास्वादग्रहणे शक्यता संपादिता। एवमपि यदि लोकास्तदन्यरसास्वादं गृह्णीयुस्तर्हि का हानिः शास्त्रकाराणाम्। उक्तं च—

> गान्धर्वी हि पुरंदरादिशिरसामान्दोलयित्री चिरं
> गीतिः सा बधिराय नन्दयति चेत्किं छिन्नमेतावता।

इति। न ह्ययं श्रुतेरपराधो यद्वना बधिरो न शृणोति। किं तु मुमुक्षुभिरवश्यमेतद्योगशास्त्रं समवलोक्य स्वार्थः साधनीयो येन गुरुतरसंरम्भसाध्येऽपवर्गेऽत्यन्तसुलभं सोपानमार्गमुपदिशतां शास्त्रकाराणां प्रयत्नसाफल्यं स्यात्। किं च प्रकाशकानां महाशयानां राजकीयाधिकारिणां मुद्रणप्रयत्नस्यापि साफल्यं स्यात्। यतोऽप्रकाशितं वस्तु तावदजातकल्पमिति लोकोक्तिर्दरीदृश्यते। किं च न केवलं योगिनां स्वार्थसिद्धिः किं तु योगिजनसंपर्केण तदीयदेशस्य तदीयबान्धवानां च पवित्रता संपाद्यते। तदुक्तं दक्षस्मृतौ—

> यस्मिन्देशे वसेद्योगी ध्यायी योगविचक्षणः।
> सोऽपि देशो भवेत्पूतः किं पुनस्तस्य बान्धवाः॥ (दक्षः ७।३५)

इति। अनेन च योगिनः पावनत्वातिशयः सुधीभिः स्वयमूह्यः। अलमधिकयोक्त्येति शिवम्।

पुणें, (ता. १।९।१९१७) **अभ्यंकरोपाह्ववासुदेवशास्त्री**

॥ श्रीः ॥

## उपोद्घातः

### ( प्रथमावृत्तिस्थः )

श्रीमता जगदीश्वरेण स्वसृष्टजनहिताय सकलवेदादिशास्त्राणि प्रादुर्भावितानि । तानि च स्वस्वाधिकारमनुसृत्य यथाविध्यध्ययनादिद्वारा संसेवितानि चेदवश्यं यथोक्तं फलं संपादयेयुरित्यसकृत् प्रतिपादितं महर्षिभिः । जनहितं च यद्यपि सर्वोऽपि जनः सुखं मे भूयादित्यजस्रमाशास्त इति प्रसिद्धमेव तथापि स विषयोपभोगजनितानागमापायिनो दुःखोदर्कान् सुखाभासानेव सुखं मन्यमानस्तदर्थमेवानवरतं प्रयतमानो यथार्थमनाद्यनन्तं कण्ठचामीकरमिव नित्यसिद्धमप्यात्मसुखं समुपेक्षमाणश्च कथमयं तादृशं यथार्थं सुखं लभते कथं च संचितकर्मादिजनितं दुःखत्रयं जह्यादिति कृपया तादृशजनस्य समस्तदुःखहानाय निरतिशयानन्दलाभाय वेदार्थमर्यादासंरक्षणाय चेश्वर एव तत्तन्मुनिरूपेणावतीर्य शिक्षाकल्पाद्यङ्गानि न्यायवैशेषिकसांख्ययोगपूर्वोत्तरमीमांसारूपाणि दर्शनान्युपाङ्गानि च प्रकाशयामास । एतेषामेव वेदादीनां यथाधिकारं परिशीलनेन प्राणिनां धर्मार्थकाममोक्षरूपाणां चतुर्णां पुरुषार्थानामप्रत्यूहसिद्धिर्भवति । शास्त्रीयज्ञानप्रसवभूमिः सर्वेयमेव । यद्यप्येषां दर्शनानामापाततः परस्परं विरोधो भासते तथाप्यल्पज्ञानां प्रथमत एव सूक्ष्मवस्तुनि प्रवेशो न भवेदिति क्रमेण स्थूलसूक्ष्मविषयाणामधिकारितारतम्येन ज्ञानं भवेदिति प्राण्यनुग्रहार्थैवेयं सोपानरूपा दर्शनपरंपरा भगवता निर्मिता । वस्तुतः सर्वाणीमानि दर्शनानि दुःखनिवृत्त्यर्थानि निरतिशयानन्दलक्षणमोक्षप्राप्त्यर्थानि चेति प्रतिपादितमनेकशआचार्यैः । तादृशानन्दलाभश्च विवेकवैराग्यादिना चित्तशुद्धौ सत्यां गुरूपसत्तिपूर्वकं श्रवणेनासंभावनां मननेन विपरीतभावनां च निराकृत्य निदिध्यासलक्षणयोगाभ्याससहकृतात्मज्ञानेनैव संपादनीयः ।

तदुक्तं योगरसायने—

कुले महति जातेन स्वात्मनः श्रेय इच्छता ।
आत्मज्ञाने श्रमः कार्यो यज्ज्ञात्वामृतमश्नुते ॥
पुंप्रकृत्योः कथामेव शिवशक्त्योस्तथैव च ।
यः शृणोति नरो भक्त्या निष्पापः सोऽभिजायते ॥
स गुणी स च धर्मिष्ठः स विवेकी स बुद्धिमान् ।
ब्रह्मज्ञाने मतिर्यस्य शेषाः पशुसमा नराः ॥

ग्रामे गोश्वखरोष्ट्राद्या अरण्ये हरिणादयः ।
यथैते पशवो मूढास्तथात्मानं न वेत्ति यः ॥
सर्वेषां तु पदार्थानामभ्यासः कारणं परम् ।
अनभ्यासेन मर्त्यस्य प्राप्तो योगोऽपि नश्यति ॥
अभ्यासेन स्थिरं चित्तमभ्यासेनानिलच्युतिः ।
अभ्यासेन परानन्दो ह्यभ्यासेनात्मदर्शनम् ॥
अभ्यासेनात्मसंवादो ह्यभ्यासेनान्यरूपता ।
अभ्यासेन समुत्क्रान्तिरभ्यासेनाणिमादयः ॥
श्रुत्वापि यदनभ्यासो लौल्यं निद्रा जने रतिः ।
विरुद्धशास्त्रश्रवणमेतद्योगविनाशनम् ॥
असत्सङ्गगुणज्ञोऽपि विषयासक्तमानसः ।
अकस्मात्प्रलयं याति गीतरक्तो यथा मृगः ॥
विषयेष्वपि कष्टोऽयं विषयः स्त्रीति नामतः ।
जीवत्यन्यैः किलाक्रान्तः स्त्रियाऽऽक्रान्तो न जीवति ॥
स्त्रीरत्नं ध्यातमात्रं तु ब्रह्मणोऽपि मनो हरेत् ।
किं पुनश्चेतरेषां तु विषयेच्छानुवर्तिनाम् ॥
स्त्र्यङ्गं मोहनं सृष्टं दृष्टमाशीविषोपमम् ।
यदीच्छेदात्मनः श्रेयो मनसापि न चिन्तयेदिति ॥

## मार्कण्डेयपुराणे—

संसार तव दुष्पारपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥
सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सन्तः संसारभेषजम् ॥
कामः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते ।
मुमुक्षां प्रति कर्तव्यः सा च तस्यापि भेषजमिति ॥

## वासिष्ठे—

मोक्षद्वारे प्रतीहाराश्चत्वारः परिकीर्तिताः ।
शमो विवेकः संतोषश्चतुर्थः साधुसंगमः ॥
वासना द्विविधा प्रोक्ता शुद्धातिमालिना तथा ।
शुद्धा जन्मक्षये हेतुर्मलिना जन्मकारणम् ॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥
न तदस्ति जगत्कोशे शुभकर्मानुपातिना ।

यत्गौरवेण शुद्धेन न समासाद्यते जनैः ॥
शुभवासनया चेतो महत्या जायते महत् ।
आत्मानं चिन्तयन्नुग्रं नन्दो रुद्रत्वमागतः ॥
क्षुद्रवासनया चेतः क्षुद्रतामेति नित्यशः ।
पिशाचविभ्रमात्पुत्रः पिशाचानिशि पश्यति ॥
यद्वातिशययुक्तेन विश्वामित्रेण विश्रुता ।
भूयो भूयः प्रयुक्तेन दुष्प्रापा तपसार्जिता ॥
प्रणयेन यमं जित्वा कृत्वा बचनसंग्रहम् ।
परलोकादुपानीतः सावित्र्या सत्यवान्पतिः ॥
न सोऽस्त्यतिशयो लोके यस्यास्ति न फलोदयः ।
अतः कार्यः प्रयत्नस्तु साधुभिः शिवफलासये ॥
वासनावागुराकृष्टो मनोहरिणको नृणाम् ।
परां विवशतामेति संसारतरुगुल्मके ॥
तस्मात्प्रजागरः कार्यः प्रयत्नेन दिवानिशम् ।
न मुष्णन्ति च्छलायस्मात्कामक्रोधादयोऽपि चेति ॥

## पुराणान्तरे—

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं व्यासकोटिभिः ।
ममेति मूलं दुःखस्य न ममेति च निर्वृतिः ॥
निर्ममत्वं विरागाय वैराग्याद्योगसंगतिः ।
योगात्संजायते ज्ञानं ज्ञानान्मुक्तिः प्रजायते ॥
उपभोगेन पुण्यानां प्राक्तनानां तथांहसाम् ।
कर्तव्यमिति नित्यानामकामकरणात्तथा ॥
असंचयादपूर्वस्य क्षयात्पूर्वार्जितस्य च ।
कर्मणो बन्धमाप्नोति शरीरं न पुनः पुनः ॥
अथेह कथ्यतेऽस्माभिः कर्मणा येन बन्धनम् ।
छिद्यते सदुपायेन श्रुत्वा तत्र प्रवर्त्यताम् ॥
अष्टावङ्गानि योगस्य यमो नियम आसनम् ।
प्राणायामश्चतुर्थं स्यात्प्रत्याहारश्च पञ्चमम् ।
धारणा ध्यानमपि च समाधिः स्याच्चाष्टमम् ॥

## भगवद्गीतायामपि—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥
प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथ वा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥

( भ. गी ६।४१–४७ )

इति । तथा

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।

( भ. गी. ४।३७ )

इत्यादिवाक्यैरपि योगविकलज्ञानेन संचितक्रियमाणकर्मद्वयस्य नाशो योगसहकृतेन तु प्रारब्धकर्मणोऽप्यन्येवोपदिश्यते । अत एव जनकप्रभृति-दृष्टान्तैर्जीवन्मुक्त्यवस्थोपपादिता शास्त्रे । तस्माज्ज्ञानी त्वात्मैव मे मतम् ( भ. गी. ७।१८ ) इत्यादावपि तादृशज्ञानयुक्त एव विवक्षित इत्युक्तदर्शनेषु योगाख्यदर्शनस्य तत्त्वज्ञाने मुख्यसाधनत्वाद्भगवता पतञ्जलिना तद्दर्शनं सूत्र-रूपेण विरचितम् । तच्चातिसूक्ष्ममतिगम्भीरं चेति श्रीमद्वेदव्यासाचार्यैर्व्याख्यातम् । तद्व्याख्यानमपि सूक्ष्मं गम्भीरं चेति श्रीमत्षड्दर्शनाचार्यवाचस्पतिमिश्रैस्तद्विवृतम् । तस्य चत्वारः पादाः । तत्र प्रथमे समाधिपादे एकपञ्चाशत्सूत्राणि । तैर्योगस्योद्देश-निर्देशौ वृत्तिभेदा योगोपाया योगभेदाश्च क्रमेण प्रदर्शिताः । द्वितीये साधनपादे पञ्चपञ्चाशत्सूत्राणि । तैः क्रियायोगः क्लेशाः कर्मणां विपाकास्तद्दुःखत्वं कायव्यू-हाश्च यथाक्रमं वर्णिताः । तृतीये विभूतिपादे चतुष्पञ्चाशत्सूत्राणि । तैरन्तरङ्गाङ्गानि परिणामा विभूतिसंयोगो विवेकजं ज्ञानं च प्रपञ्चितम् । चतुर्थे कैवल्यपादे चतुस्त्रिंशत्सूत्राणि । तैर्मुक्त्यर्हचित्तं धर्ममेघः समाधिर्द्वयी च मुक्तिः प्रसङ्गादन्यद-प्युपयुक्तं प्रतिपादितमिति ।

[ महा० राजारामशास्त्री बोडस ]

---

# ग्रन्थादिनामसूचकानि संक्षिप्तचिह्नानि

| | |
|---|---|
| अम. | अमरकोशः |
| आदि. | आदिपर्व |
| आ. पु. | आदित्यपुराणम् |
| ई. | ईशोपनिषत् |
| ऐ. | ऐतरेयोपनिषत् |
| का. | काठकोपनिषत् |
| कू. पु. | कूर्मपुराणम् |
| कै. | कैवल्योपनिषत् |
| ग. | गर्भोपनिषत |
| गा. | गारुडम् |
| गी. | गीता |
| गो. | गोपालतापनीयम् |
| गौ. सू. | गौतमसूत्रम् |
| छा. | छान्दोग्योपनिषत् |
| जैगी. | जैगीषव्यः |
| जै. सू. | जैमिनिसूत्रम् |
| तै. | तैत्तिरीयोपनिषत् |
| तै. आ. | तैत्तिरीयारण्यकम् |
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् |
| तै. सं. | तैत्तिरीयसंहिता |
| धा. | धातुपाठः |
| नार. | नारदीयम् |
| नारा. | नारायणोपनिषत् |
| न्या. सू. | न्यायसूत्रम् |
| प. | पञ्चशिखाचार्यः |
| पा. शि. | पाणिनिशिक्षा |
| पा. सू. | पाणिनिसूत्रम् |
| पू. ख. | पूर्वखण्डम् |
| प्र. | प्रश्नोपनिषत् |
| बृ. | बृहदारण्यकोपनिषत् |
| ब्र. सू. | ब्रह्मसूत्रम् |
| भ. गी. | भगवद्गीता |
| भा. | भारतम् |
| भाग. | भागवतम् |
| भार. | भारतम् |
| मनु. | मनुस्मृतिः |
| म. स्मृ. | मनुस्मृतिः |
| मा. | मात्स्यम् |
| मु. | मुण्डकोपनिषत् |
| मै. | मैत्रेयोपनिषत् |
| या. | याज्ञवल्क्यः |
| यो. सू. | योगसूत्रम् |
| र. | रघुवंशकाव्यम् |
| व. | वसिष्ठसंहिता |
| वाच. | वाचस्पतिमिश्राः |
| वा. प. | वाक्यपदीयम् |
| वा. पु. | वायुपुराणम् |
| वार्ष. | वार्षगण्यः |
| वि. पु. | विष्णुपुराणम् |
| वृ. | वृत्तिकारः |
| वैया. | वैयासिकी गाथा |
| शा. | शान्तिपर्व |
| शारी. | शारीरभाष्यम् |
| श्वे. | श्वेताश्वतरोपनिषत् |
| स. | सप्तशती |
| सां. का. | सांख्यकारिका |
| सां. सू. | सांख्यसूत्रम् |
| सु. | सुबालोपनिषत् |

॥ श्रीगणेशाय नमः ॥

योगदर्शनम् ।

# पातञ्जलयोगसूत्राणि

## वाचस्पतिकृतटीकायुतव्यासभाष्यसमेतानि ।

### तत्र समाधिपादः प्रथमः ।

ॐ नमो भगवते वासुदेवाय ।

यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोनेकधानुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोनेकवक्त्रः सुभोगी ।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोहीशः स वोव्यात्सितविमलतनुर्योगदो योगयुक्तः ॥ १ ॥

**अथ योगानुशासनम् ॥ १ ॥**

अथेत्ययमधिकारार्थः ।

नमामि जगदुत्पत्तिहेतवे वृषकेतवे ।
क्लेशकर्मविपाकादिरहिताय हिताय च ॥ १ ॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधीयते ॥ २ ॥

इह हि भगवान्पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य संक्षेपतस्तात्पर्यार्थं प्रेक्षावत्प्रवृत्त्यङ्गं श्रोतुश्च सुखावबोधार्थमाचिख्यासुरादाविदं सूत्रं रचयांचकार—**अथ योगानुशासनम्** । तत्र प्रथमावयवमथशब्दं व्याचष्टे—**अथेत्ययमधिकारार्थः** । अथैष ज्योतिरितिवत् । न त्वानन्तर्यार्थः । **अनुशासनमिति** हि शास्त्रमाहानुशिष्यतेनेनेति व्युत्पत्त्या । न चास्य शमदमाद्यनन्तरं प्रवृत्तिरपि तु तत्त्वज्ञानचिख्यापयिषानन्तरम् । जिज्ञासाज्ञानयोस्तु स्यात् । यथाम्नायते—तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत् ( बृ. ४।४।२३ ) इति । शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्यस्य च संभवेपि नाभिधानम् । शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात्प्रामाणिकत्वं योगानुशासनस्य तदभावेप्युपेयत्वादप्रामाणिकत्वे च तद्भावेपि हेयत्वात् । एतेन तत्त्वज्ञानचिख्याप-

7–10. G. om. यस्त्यक्त्वा० योगयुक्तः.
16. K. N. O. P. read विधास्यते for विधीयते.
17. O. P. om. प्र before आरिप्सितस्य.

**योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् । योगः समाधिः । स च सार्वभौमश्चित्तस्य धर्मः । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति**

विषयोरानन्तर्याभिधानं परास्तम् । अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य योगस्याभिधानात्सकलशास्त्रतात्पर्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्तितश्च भवतीति । निःश्रेयसस्य हेतुः समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम् । ननु किं सर्वसंदर्भगतोऽथशब्दोऽधिकारार्थः, तथा सत्यथातो ब्रह्मजिज्ञासा ( ब्र. सू. १।१।१ ) इत्यादावपि प्रसङ्ग इत्यत आह—**अथेति** । ननु—

हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ।

इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेर्योगशास्त्रकर्तृत्वमित्याशङ्क्य सूत्रकारेणानुशासनमित्युक्तम् । शिष्टस्यानुशासनं ननु शासनमित्यर्थः । यद्वायमथशब्दोऽधिकारार्थस्तदैव वाक्यार्थः संपद्यत इत्याह—**योगानुशासनं शास्त्रमधिकृतमिति** । ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो न तु शास्त्रमित्यत आह—**वेदितव्यमिति** । सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः । स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः । करणगोचरश्च व्युत्पादकस्य व्यापारो न कर्मगोचर इति कर्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यम् । शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः । अधिकारार्थस्य चाथशब्दस्यान्यार्थनीयमानोदकुम्भदर्शनमिव श्रवणं मङ्गलायापि कल्पत इति मन्तव्यम् । शब्दसंदेहनिमित्तमर्थसंदेहमपनयति—**योगः समाधिरिति** । युज समाधौ ( धा. पा. ४ ) इत्यस्माद्व्युत्पन्नः समाध्यर्थो न तु युजिर् योगे ( धा. पा. ७ ) इत्यस्मात्संयोगार्थ इत्यर्थः । ननु समाधिरपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गम् । न चाङ्गमेवाङ्गीत्यत आह—**स च सार्वभौमः** । पस्त्वर्थोऽङ्गादङ्गिनं भिनत्ति । भूमयोऽवस्था वक्ष्यमाणा मधुमती–मधुप्रतीका–विशोका–संस्कारशेषास्ताश्चित्तस्य । तासु सर्वासु विदितः सार्वभौमश्चित्तवृत्तिनिरोधलक्षणो योगः । तदङ्गं तु समाधिर्नैवंभूतः । व्युत्पत्तिनिमित्तमात्राभिधानं चैतद्योगः समाधिरिति । अङ्गाङ्गिनोरभेदविवक्षामात्रेण प्रवृत्तिनिमित्तं योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः । वृत्तयो ज्ञानान्यात्माश्रयाण्यतस्तन्निरोधोऽप्यात्माश्रय एवेति ये पश्यन्ति तन्निरासायाह—**चित्तस्य धर्म**

1. G. reads नाम after अनुशासनम्.
10. O. reads वक्तृत्वम् for कर्तृत्वम्.
11. K. O. read शासनमनु for अनुशासनं न तु.
21. O. om. इत्यर्थः
23. L. reads त्वर्थे for त्वर्थः.
26. K. reads तु after निमित्तम्.
28. K. O. read आत्माश्रिताः for आत्माश्रयाः.

**चित्तस्य भूमयः । तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते । यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति क्षिणोति**

**इति** । चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति । न हि कूटस्थनित्या चिति-
शक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति बुद्धिस्तु भवेदिति भावः । स्यादेत-
५ त्सार्वभौमश्चेद्योगो हन्त भोः क्षिप्तमूढविक्षिप्ता अपि चित्तभूमयः । अस्ति च
परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्रापि योगत्वप्रसङ्ग इत्याशङ्क्य हेयो-
पादेयभूमीरुपन्यस्यति—**क्षिप्तमित्यादि** । क्षिप्तं सदैव रजसा तेषु तेषु विष-
येषु क्षिप्यमाणमत्यन्तमस्थिरम् । मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमत् । क्षिप्ता-
द्विशिष्टं विक्षिप्तम् । विशेषोऽस्थेमबहुलस्य कादाचित्कः स्थेमा । सा चास्या-
१० स्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा ।
एकाग्रमेकतानम् । निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम् । तत्र
क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतु-
भावाभावात्तदुपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वमिति न तयोर्योगत्वं निषि-
द्धम् । विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः संभाव्येत योग-
१५ त्वमिति निषेधति । तत्र विक्षिप्ते चेतसि समाधिः कादाचित्कः सद्भूतविषय-
श्चित्तस्य स्थेमा न योगपक्षे वर्तते । कस्मात् । यतस्तद्विपक्षविक्षेपोपसर्जनीभूतः ।
विपक्षवर्गान्तर्गतस्य हि स्वरूपमेव दुर्लभं प्रागेव कार्यकरणम् । न खलु दहनान्त-
र्गतं बीजं त्रिचतुःक्षणावस्थितमप्यङ्कुराय कल्पत इति भावः ।

यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्ह्यन्यत आह—**यस्त्वेकाग्रे**
२० **चेतसीति** । भूतमिति समारोपितमर्थं निवर्तयति । निद्रावृत्तिरपि स्वालम्बने
तमसि भूते भवत्येकाग्रेत्यत उक्तम्—**सदिति** । शोभनं नितान्ताविर्भूतं सत्त्वम् ।
तमःसमुद्रेकस्त्वशोभनस्तस्य क्लेशहेतुत्वादिति । द्योतनं हि तत्त्वज्ञानमागमाद्वा-
नुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति द्विचन्द्र-
दिङ्मोहादिष्वनुच्छेदकत्वादत आह—प्रेति । प्रशब्दो हि प्रकर्षं द्योतयन्साक्षा-

1. E. G. K. L. read चित्त for चित्तस्य.

1. B. F. read आत्मानश्चित्तवृत्तिनिरोधं विहाय कुर्वन्ति तासां येषु निद्रा-ह्म्यास्ताभिः सह वेगयोगेन ब्रह्मणि लयं गच्छन्ति । नित्यं साक्षादात्मा केवलात्मसंस्कारशेषं समाधिना लयं कृत्वा ब्रह्मणि योगं योगः । स च योगिनां इति योगे भिन्नाभावः सार्वभौम इति । after भूमयः.

13. K. reads तद्रूप for तदुप.

15. K. N. P. read कादाचित्कसद्भूतविषयस्य for कादाचित्कः सद्भूतविषयः.

17. K. L. read कारणम् for करणम्.

24. K. L. read प्रकारः for प्रशब्दः.

**स क्लेशान्कर्मबन्धनानि श्लथयति निरोधमभिमुखं करोति स संप्रज्ञातो योग इत्याख्यायते। स च वितर्कानुगतो विचारानुगत आनन्दानुगतोस्मितानुगत इत्युपरिष्टात्प्रवेदयिष्यामः। सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः॥ १॥**

तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते—

## योगश्चित्तवृत्तिनिरोधः॥ २॥

**सर्वशब्दाग्रहणात्संप्रज्ञातोपि योग इत्याख्यायते। चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात्त्रिगुणम्।**

---

त्कारं सूचयति। अविद्यामूलत्वादस्मितादीनां क्लेशानां, विद्यायाश्चाविद्योच्छेदरूपत्वाद्विद्योदये चाविद्यादिक्लेशसमुच्छेदो विरोधित्वात्कारणविनाशाच्चेत्याह—**क्षिणोति चेति**।अत एव कर्मरूपाणि बन्धनानि श्लथयति। कर्म चात्रापूर्वमभिमतं कार्ये कारणोपचारात्। श्लथयति स्वकार्यादवसादयति। वक्ष्यति हि सति मूले तद्विपाकः (२।१३) इति। किं च निरोधमभिमुखं करोत्यभिमुखीकरोति। स च संप्रज्ञातश्चतुष्प्रकार इत्याह—**स चेति**। असंप्रज्ञातमाह—**सर्ववृत्तीति**। रजस्तमोमयी किल प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिमुपादाय संप्रज्ञाते निरुद्धा। असंप्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः। तदिह भूमिद्वये समाधा या मधुमत्यादयो भूमयस्ताः सर्वास्तासु विदितः सार्वभौम इति सिद्धम्॥ १॥

द्वितीयं सूत्रमवतारयति—**तस्य लक्षणेति**। तस्येति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति। **योगश्चित्तवृत्तिनिरोधः**। निरुध्यन्ते यस्मिन्प्रमाणादिवृत्तयोवस्थाविशेषे चित्तस्य सोवस्थाविशेषो योगः। ननु संप्रज्ञातस्य योगस्याव्यापकत्वादलक्षणमिदम्। अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिरित्यत आह—**सर्वशब्दाग्रहणादिति**। यदि सर्वचित्तवृत्तिनिरोध इत्युच्येत भवेदव्यापकं संप्रज्ञातस्य। क्लेशकर्मविपाकाशयपरिपन्थी चित्तवृत्तिनिरोधस्तु तमपि संगृह्णाति। तत्रापि राजसतामसचित्तवृत्तिनिरोधात्तस्य च तद्भावादित्यर्थः। कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसंबन्धः किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्या इत्याशङ्क्य प्रथमं तावदवस्थासंबन्धहेतुमुपन्यस्यति—**चित्तं हीति**। प्रख्या-

---

5. B. F. read प्रवृत्ते for प्रववृते.
20. L. reads माण for प्रमाण.
23. O. reads अपि after भवेत.
23. L. reads अव्यापकत्वम् for अव्यापकम्.
27. K. N. read संबन्धे for संबन्ध.

**प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति । तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति । तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति ।**

---

शीलत्वात्सत्त्वगुणम् । प्रवृत्तिशीलत्वाद्रजोगुणम् । स्थितिशीलत्वात्तमोगुणम् । प्रख्याग्रहणमुपलक्षणार्थम् । तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते । प्रवृत्त्या च परितापशोकादयो राजसाः । प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः । स्थितिग्रहणाद्गौरवावरणदैन्यादय उपलक्ष्यन्ते । एतदुक्तं भवति— एकमपि चित्तं त्रिगुणनिर्मिततया गुणानां च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणामं सदनेकावस्थमुपपद्यत इति ।

क्षिप्ताया एव चित्तस्य भूमीर्यथासंभवमवान्तरावस्थाभेदवतीरादर्शयति— **प्रख्यारूपं हीति** । चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम् । तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम् । तत्र चित्ते सत्त्वात्किंचिदूने रजस्तमसी यद् मिथः समे च भवतस्तदैश्वर्यं च विषयाश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तम् । सत्त्वप्राधान्यात्खलु चित्तं तत्त्वं प्रणिधित्सदपि तत्त्वस्य तमसापिहितत्वादणिमादिकमैश्वर्यमेव तत्त्वमभिमन्यमानं तत्प्रणिधित्सति प्रणिधत्ते च क्षणम् । अथ रजसा क्षिप्यमाणं तत्राप्यलब्धस्थितिविशेषात्तत्प्रियमात्रं भवति । शब्दादिषु पुनरस्य स्वरसवाही प्रेमा निरूढ एव । तदनेन विक्षिप्तं चित्तमुक्तम् । क्षिप्तं चित्तं दर्शयन्मूढमपि सूचयति— **तदेव तमसेति** । यदा हि तमो रजो विजित्य प्रवृत्तं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽशक्तत्वाद्रजसस्तमःस्थगितं चित्तमधर्माद्युपगच्छति । अज्ञानं च विपर्ययज्ञानमभावप्रत्ययालम्बनं च निद्राज्ञानमुक्तम् । ततश्च मूढावस्थापि सूचितेति । अनैश्वर्यं सर्वत्रेच्छाप्रतिघातः । अधर्मादिव्याप्तं चित्तं भवतीत्यर्थः । यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्याण्युपगच्छतीत्याह— **प्रक्षीणेत्यादि** । मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम् । अत एव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानम् । तथापि न धर्मायैश्वर्याय च कल्पते प्रवृत्त्यभावादित्यत आह— **अनुविद्धं रजोमात्रया** । रजसः प्रवर्तकत्वादस्ति धर्मादिप्रवृत्तिरित्यर्थः । तदनेन संप्रज्ञातसमाधिसंपन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं संगृहीतम् ।

---

1. B. F. read असंसृष्टम् for संसृष्टम्.
2. B. F. read उपगतम् for उपगम्.
13. O. P. read चित्त for चित्तं.
17. K. N. om. विशेषात्.
28. L. N. P. read धर्मादिः for धर्मादिप्रवृत्तिः.

च्छेदवादप्रसङ्गः, उपादाने च हेतुवादः। उभयप्रत्याख्याने शाश्वतवाद इत्येतत्सम्यग्दर्शनम्। तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते ॥ १५ ॥

**हेयं दुःखमनागतम् ॥ १६ ॥**

दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्तते। वर्तमानं च ५ स्वक्षणे भोगारूढमिति न तत्क्षणान्तरे हेयतामापद्यते। तस्माद्यदेवानागतं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति नेतरं प्रतिपत्तारम्। तदेव हेयतामापद्यते ॥ १६ ॥

तस्माद्यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते--

**द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥**

१० द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः। दृश्या बुद्धिसत्त्वोपारूढाः सर्वे धर्माः। तदेतद्दृश्यमयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन

---

स्वरूपमुपादेयमित्यत आह—उपादाने च हेतुवादः। उपादानं हि कार्यत्वेनानित्यत्वे सति मोक्षत्वादेव च्यवेत। अमृतत्वं हि मोक्षः। नापि विशुद्धो विज्ञानसंतानो भवत्यमृतः। संतानिभ्यो व्यतिरेकस्य संतानस्य वस्तुसतोऽभावात्। १५ संतानिनां चानित्यत्वात्। तस्मात्तथा यतितव्यं यथा शाश्वतवादो भवति। तथा च पुरुषार्थतापवर्गस्येत्याह—उभयप्रत्याख्यान इति। तस्मात्स्वरूपावस्थानमेवात्मनो मोक्ष इति। एतदेव सम्यग्दर्शनम् ॥ १५ ॥

**तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते--हेयं दुःखमनागतम्।** अनागतमित्यतीतवर्तमाने व्यवच्छिनत्ति। तत्रोपपत्तिमाह—**दुःखमतीतमिति।** २० ननु वर्तमानमुपभुज्यमानं न भोगेनातिवाहितमिति कस्मान्न हेयमित्यत आह—**वर्तमानं चेति।** सुगमम् ॥ १६ ॥

हेयमुक्तम्। तस्य निदानमुच्यते—**द्रष्टृदृश्ययोः संयोगो हेयहेतुः।** द्रष्टुः स्वरूपमाह--**द्रष्टेति।** चितिच्छायापत्तिरेव बुद्धेर्बुद्धिगतसंवेदनम्, अपरिणामिनस्यापि पुंसः। नन्वेतावतापि बुद्धिरेवानेन दृश्येत, न दृश्येरञ्छब्दादयोऽत्यन्तव्यवहिता २५ इत्यत आह--**दृश्या बुद्धिसत्त्वेति।** इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां भवन्ति शब्दादयोऽपि धर्मा दृश्या इत्यर्थः। ननु तदाकारापत्त्या बुद्धिः शब्दाद्याकारा भवतु। पुंसस्तु बुद्धिसंबन्धेऽभ्युपगम्यमाने परिणामित्वम्। असंबन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढानामपि शब्दादीनां दृश्यत्वम्। न हि दर्शिनाऽसंस्पृष्टं दृश्यं दृष्टमित्यत आह--**तदेतद्दृश्यमिति।** प्रपञ्चितमिद- ३० मस्माभिः प्रथमपाद एव यथा चित्यासंपृक्तमपि बुद्धिसत्त्वमत्यन्तस्वच्छतया

---

11. B. F. read बुद्धिः after मणिकल्पम्.
30. L. reads संपृक्तम् for असंपृक्तम्.

**स्वं भवति पुरुषस्य दृशिरूपस्य स्वामिनः । अनुभवकर्मविषयतामापन्नं यतः । अन्यस्वरूपेण प्रतिपन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्र-मपि परार्थत्वात्परतन्त्रम् ।**

**तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुर्दुःखस्य कारणमि-**

---

चितिबिम्बोद्ग्राहितया समापन्नचैतन्यमिव शब्दाद्यनुभवतीति । अत एव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीताञ्शब्दादीन्भुञ्जानः स्वामी भवति द्रष्टा तादृशं चास्य बुद्धिसत्त्वं स्वं भवति । तदेतद्बुद्धिसत्त्वं शब्दाद्याकारवद्दृश्यमय-स्कान्तमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः । कस्मात्, **अनुभव-कर्मविषयतामापन्नं यतः** । अनुभवो भोगः पुरुषस्य कर्म क्रिया तद्विषयतां भुज्यमानतामापन्नं यस्मादतः स्वं भवति । ननु स्वयंप्रकाशं बुद्धिसत्त्वं कथमनु-भवविषय इत्यत आह—**अन्यस्वरूपेणेति** । यदि हि चैतन्यरूपं वस्तुतो बुद्धिसत्त्वं स्यात्तर्हि स्वयंप्रकाशम् । किं तु स्वं चैतन्यादन्यज्जडरूपं तेन प्रतिलब्धा-त्मकं तस्मात्तदनुभवविषयः । ननु यस्य हि यत्र किंचिदायततं तत्तदधीनम् । न च बुद्धिसत्त्वस्य पुरुषमुदासीनं प्रति किंचिदायतत इति कथं तत्तन्त्रम् । तथा च न तस्य कर्मेत्यत आह—**स्वतन्त्रमपि परार्थत्वात्पुरुषार्थत्वा-त्परतन्त्रं** पुरुषतन्त्रम् ।

नन्वयं दृग्दर्शनशक्त्योः संबन्धः स्वाभाविको वा स्यान्नैमित्तिको वा । स्वा-भाविकत्वं संबन्धिनोर्नित्यत्वादशक्योच्छेदः संबन्धः । तथा च संसारनित्यत्वम् । नैमित्तिकत्वं तु क्लेशकर्मतद्वासनानामन्तःकरणवृत्तितया सत्यन्तःकरणे भावाद-न्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गादनादित्वस्य च सर्गादावसंभवा-दनुत्पाद एव संसारस्य स्यात् । यथाक्रम्—

> पुमानकर्ता येषां तु तेषामपि गुणैः क्रिया ।
> कथमात्मा भवेत्तत्र कर्म तावन्न विद्यते ॥
> मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा ।
> मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं मनस्तदा ॥

इति शङ्कामपनयति—**तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेय-हेतुः** । सत्यम् । न स्वाभाविकः संबन्धो नैमित्तिकस्तु । न चैवमादिमान् । अनादि-निमित्तप्रभवतया तस्याप्यनादित्वात् । क्लेशकर्मतद्वासनासंतानश्चायमनादिः प्रतिसर्गावस्थायां च सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुनस्तादृगेव

---

2. C. D. E. om. यतः.
2. G. K. om. प्रतिपन्नमन्यस्वरूपेण.
6. N. P. read सुखादीन् for शब्दादीन्.
13. L. reads आपतते for आयतते.
22. L. reads कर्ता च for अकर्ता.

**स्यर्थः । तथा चोक्तम्—तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः । कस्मात् । दुःखहेतोः परिहार्यस्य प्रतीकारदर्शनात् । तद्यथा—पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वं, परिहारः कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाधिष्ठानम् । एतत्त्रयं यो वेद लोके ५ स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाप्नोति । कस्मात् । त्रित्वोपलब्धिसामर्थ्यादिति । अत्रापि तापकस्य रजसः सत्त्वमेव तप्यम् । कस्मात् । तपिक्रियायाः कर्मस्थत्वात् । सत्त्वे कर्मणि तपिक्रिया नापरिणामिनि निष्क्रिये क्षेत्रज्ञे । दर्शितविषयत्वात्सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽनुतप्यत इति ॥ १७ ॥**

---

प्रादुर्भवति वर्षापाय इवोद्भिज्जभेको मृद्भावमुपगतोऽपि पुनर्वर्षासु पूर्वरूप इत्यसकृदावेदितम् । प्राग्भावितया संयोगस्याविद्या कारणम् । स्थितिहेतुतया पुरुषार्थं कारणम् । तद्वशेन तस्य स्थितेः । तदिदमुक्तमर्थकृत इति । **तथा चोक्तं** पञ्चशिखेन तत्संयोगो बुद्धिसंयोगः स एव हेतुर्दुःखस्य । तस्य विवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः । अर्थात्तदपरिवर्जने दुःखमित्युक्तं भवति । तत्रैवात्यन्तप्र-
५ सिद्धं निदर्शनमाह—**तद्यथेति** । पादत्राणमुपानत् । स्पष्टमन्यत् । गुणसंयोगस्तापहेतुरित्युच्यमाने गुणानां तापकत्वमभ्युपेतम् । न च तपिक्रियाया अस्त्यादेरिव कर्तृस्था भावो येन तप्यमन्यन्नापेक्षेत । न चास्यास्तप्यतया पुरुषः कर्म । तस्यापरिणामितया क्रियाजनितफलशालित्वायोगात् । तस्मान्नैषस्तप्यव्यापारस्य तन्निवृत्तौ निवृत्तिमवगच्छामो ज्वलनविरहेणेव धूमाभावमित्यत आह—**अत्रापि तापकस्येति** । गुणानामेव तप्यतापकभावः । तत्र मृदुत्वात्पादतलवत्सत्त्वं तप्यम् । रजस्तु तीव्रतया तापकम् । पृच्छति—**कस्मात्सत्त्वमेव तप्यं न तु पुरुषः** । उत्तरम्—**तपिक्रियाया इति** । तत्किमिदानीं पुरुषो न तप्यते । तथा चाचेतनस्यास्तु सत्त्वस्य तापः किं नश्छिन्नमित्यत आह—**दर्शितविषयत्वात्सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्यनुतप्यत इति** । दर्शितविषयत्वमनु-
५ तापहेतुः । तच्च प्राग्व्याख्यातम् ॥ १७ ॥

---

7–8. B. F. read परिणामिनि for नापरिणामिनि.

8. B. F. read बुद्धितादात्म्येन after क्षेत्रज्ञे.

9. B. F. read बुद्धिस्थः after अनुरोधी.

9. E. K. L. read अपि after पुरुषः.

11. P. reads प्रागभावितया for प्राग्भावितया.

16. N. reads अस्त्यादिः for अस्त्यादेः.

18. P. om. तस्मात्.

दृश्यस्वरूपमुच्यते—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥**

प्रकाशशीलं सत्त्वम् । क्रियाशीलं रजः । स्थितिशीलं तम इति ।
५ एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोगवियोगधर्माण
इतरेतरोपाश्रयेणोपार्जितमूर्तयः परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभा-
गास्तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः प्रधानवेलायामुपदर्शि-

---

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ।**
व्याचष्टे—**प्रकाशेति** । सत्त्वस्य हि भागः प्रकाशस्तामसेन भागेन दैन्येन वा
१० राजसेन वा दुःखेनानुरज्यते । एवं राजसादिष्वपि द्रष्टव्यम् । तदिदमुक्तम्—
**परस्परोपरक्तप्रविभागा इति** । पुरुषेण सह संयोगवियोगधर्माणः ।
यथाम्नायते—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥

१५ ( तै. आ. ६।१० ) इति ।

इतरेतरोपाश्रयेणोपार्जिता मूर्तिः पृथिव्यादिरूपा यैस्ते तथोक्ताः । स्यादेतत् ।
सत्त्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोरपि सत्त्वाङ्गत्वेन तत्र हेतुभावादस्ति
सामर्थ्यमिति यद्यपि च रजस्तमसोरङ्गित्वं तथापि शान्त एव प्रत्यय उदीयेत
न घोरो मूढो वा सत्त्वप्राधान्य इत्यत आह—**परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नश-
२० क्तिप्रविभागाः** । भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोरङ्गभावः । तथापि
नैषां शक्तयः संकीर्यन्ते । कार्यासंकरोन्नेयो हि शक्तीनामसंकरः । असंकीर्णेन च
समुदाचरता रूपेण शान्तघोरमूढरूपाणि कार्याणि दृश्यन्त इति सिद्धं शक्ती-
नामसंभेद इति । स्यादेतत् । असंभेदश्चेच्छक्तीनां न संभूयकारित्वं गुणानाम् ।
न जातु भिन्नशक्तीनां संभूयकारित्वं दृष्टम् । न हि तन्तुमृत्पिण्डवीरणादीनि
२५ घटादीन्संभूय कुर्वत इत्यत आह—**तुल्यजातीयातुल्यजातीयशक्तिभेदानु-
पातिनः** । यद्यपि तुल्यजातीय उपादानशक्तिर्नान्यत्र, सहकारिशक्तिस्त्वतुल्य-
जातीये । पटे तु जनयितव्ये न वीरणानामस्ति सहकारिशक्तिरपीति न तैस्तन्तू-
नां संभूयकारितेति भावः । तुल्यजातीयातुल्यजातीयेषु शक्तेषु ये शक्तिभेदा-
स्ताननुपतितुं शीलं येषां ते तथोक्ताः । **प्रधानवेलायामिति** । दिव्यशरीरे

---

5. G. reads विभाग for वियोग.

22. N. reads चेत्यम् for चेत्.

**तसंनिधाना गुणत्वेपि च व्यापारमात्रेण प्रधानान्तर्णीतानुमितास्तिताः पुरुषार्थकर्तव्यतया प्रयुक्तसामर्थ्याः संनिधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनुवर्तमानाः प्रधानशब्दवाच्या भवन्ति । एतद्दृश्यमित्युच्यते ।**

५ **तदेतद्भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते । तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इति ।**

---

जनयितव्ये सत्त्वगुणः प्रधानम् । अङ्गे रजस्तमसी । एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानमङ्गे सत्त्वतमसी । एवं तिर्यक्शरीरे जनयितव्ये तमः प्रधानमङ्गे सत्त्वरजसी । तेनैते गुणाः प्रधानत्ववेलायामुपदर्शितसंनिधानाः कार्योपजननं
१० प्रत्युद्भूतवृत्तय इत्यर्थः । प्रधानशब्दश्च भावप्रधानः । यथा "द्व्येकयोर्द्विवचनैकवचने" ( पा. सू. १।४।२२ ) इत्यत्र द्वित्वैकत्वयोरिति । अन्यथा द्व्येकेष्विति स्यात् । ननु तदा प्रधानमुद्भूततया शक्यमस्तीति वक्तुम् । अनुद्भूतानां तु तदङ्गानां सद्भावे किं प्रमाणमित्यत आह—**गुणत्वेपि चेति** । यद्यपि नोद्भूतास्तथापि गुणानामविवेकित्वात्संभूयकारित्वाच्च व्यापारमात्रेण सहकारितया प्रधानेन्तर्णी-
१५ तं सदनुमितमस्तित्वं येषां ते तथोक्ताः । ननु सन्तु गुणाः संभूयकारिणः समर्थाः । कस्मात्पुनः कुर्वन्ति । न हि समर्थमित्येव कार्यं जनयति । मा भूदस्य कार्योपजननं प्रति विराम इत्यत आह—**पुरुषार्थकर्तव्यतयेति** । ततो निर्वर्तितनिखिलपुरुषार्थानां गुणानामुपरमः कार्यानारम्भणमित्युक्तं भवति । ननु पुरुषस्यानुपकुर्वतः कथं पुरुषार्थेन प्रयुज्यत इत्यत आह—**संनिधिमात्रेति** । ननु धर्मा-
२० धर्मलक्षणमेव निमित्तं प्रयोजकं गुणानाम् । तत्किमुच्यते पुरुषार्थप्रयुक्ता इत्यत आह—**प्रत्ययमन्तरेणेति** । एकतमस्य सत्त्वस्य रजसस्तमसो वा प्रधानस्य स्वकार्ये प्रवृत्तस्य वृत्तिमितरं प्रत्ययं निमित्तं धर्मादिकं विनैवानुवर्तमानाः । यथा च वक्ष्यति—"निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" ( यो. सू. ४।३ ) इति । एते गुणाः प्रधानशब्दवाच्या भवन्तीति संबन्धः ।
२५ प्रधीयत आधीयते विश्वं कार्यमेभिरिति व्युत्पत्त्यैतद्दृश्यमुच्यते ।

तदेवं गुणानां शीलमभिधाय तस्य कार्यमाह—**तदेतदिति** । सत्कार्यवादसिद्धौ यद्यदात्मकं तत्तेन रूपेण परिणमत इति भूतेन्द्रियात्मकत्वं दीपयति—**भूतभावेनेत्यादिना** । भोगापवर्गार्थमिति सूत्रावयवमवतारयति—

---

1. L. reads संधिधानानुगुणत्वे for संनिधाना गुणत्वे.
1. C. D. read अन्तर्मीतेन for अन्तर्णीत.
6. D. E. read यथा for तथा.
17. N. reads अविरामः for विरामः

तत्तु नाप्रयोजनमपि तु प्रयोजनमुररीकृत्य प्रवर्तत इति भोगापवर्गार्थं हि तद्दृश्यं पुरुषस्येति । तत्रेष्टानिष्टगुणस्वरूपावधारणमविभागापन्नं भोगो भोक्तुः स्वरूपावधारणमपवर्ग इति । द्वयोरतिरिक्तमन्यद्दर्शनं नास्ति । तथा चोक्तम्—अयं तु खलु त्रिषु गुणेषु कर्तृष्वकर्तरि च ५ पुरुषे तुल्यातुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान्सर्वभावानुपपन्नाननुपश्यन्न दर्शनमन्यच्छङ्कत इति ।

तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ कथं पुरुषे व्यपदिश्येते इति । यथा च जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते, स हि तत्फलस्य भोक्तेति । एवं बन्धमोक्षौ १० बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्येते, स हि तत्फलस्य भोक्तेति । बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्धस्तदर्थावसायो मोक्ष इति । एतेन ग्रहणधारणोहापोहतत्त्वज्ञानाभिनिवेशा बुद्धौ वर्तमानाः पुरुषेऽध्यारोपितसद्भावाः । स हि तत्फलस्य भोक्तेति ॥ १८ ॥

---

तत्तु नाप्रयोजनमपि तु प्रयोजनमुररीकृत्य प्रवर्तते । भोगं विवृणोति—तत्रेति। १५ सुखदुःखे हि त्रिगुणाया बुद्धेः स्वरूपं । तस्यास्तथात्वेन परिणामात् । तथापि गुणगततयावधारणे न भोग इत्यत आह—अविभागापन्नमिति । एतच्चासकृद्विवेचितम् । अपवर्गं विवृणोति—भोक्तुरिति । अपवृज्यतेऽनेनेत्यपवर्गः । प्रयोजनान्तरस्याभावमाह—द्वयोरिति । तथा चोक्तं पञ्चशिखेन—अयं तु खल्विति ।

२० ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिवर्तिनौ च । कथं तदकारणे तदनधिकरणे च पुरुषे व्यपदिश्येते इत्यत आह—तावेताविति । भोक्तृत्वं च पुरुषस्योपपादितमग्रे च वक्ष्यते। परमार्थतस्तु—बुद्धेरेव पुरुषार्थापरिसमाप्तिरिति । एतेन भोगापवर्गयोः पुरुषसंबन्धित्वकथनमार्गेण ग्रहणादयोऽपि पुरुषसंबन्धिनो वेदितव्याः । तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणम् । तत्र स्मृतिर्धारणम् । २५ तद्गतानां विशेषाणामूहनमूहः । समारोपितानां च युक्त्यापनयोऽपोहः । ताभ्यामेवोहापोहाभ्यां तदवधारणं तत्त्वज्ञानम् । तत्त्वावधारणपूर्वं हानोपादानज्ञानमभिनिवेशः ॥ १८ ॥

---

1. B. C. E. F. om. अपि तु प्रयोजनम्.
4. B. F. read विशेषाविशेषलिङ्गमात्रेषु after खलु.
5. E. reads तान् for तत्.
5. G. reads अप for उप.
13. G. reads सा हि for स हि.
26. N. reads अवधारणं तत्त्व for अवधारणपूर्वं.

**दृश्यानां तु गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—**

## विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥

**तत्राकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः । तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि । वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि । एकादशं मनः सर्वार्थम् । इत्येतान्यस्मितालक्षणस्याविशेषस्य विशेषाः । गुणानामेष षोडशको विशेषपरिणामः ।**

**षडविशेषाः । तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेत्येकद्वित्रिचतुष्पञ्चलक्षणाः शब्दादयः पञ्चाविशेषाः षष्ठश्चाविशेषोऽस्मितामात्र इति । एते सत्तामात्रस्यात्मनो महतः षडविशेषपरिणामाः । यत्तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वं**

---

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि** । येषामविशेषाणां शान्तघोरमूढलक्षणविशेषरहितानां ये विशेषा विकारा एव न तु तत्त्वान्तरप्रकृतयस्तेषां तानाह—**तत्राकाशेति** । उत्पादक्रमानुरूप एवोपन्यासक्रमः । अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः । राजसस्य कर्मेन्द्रियाणि । मनस्तूभयात्मकमुभयप्रधानस्येति मन्तव्यम् । अत्र च पञ्च तन्मात्राणि बुद्धिकारणकान्यविशेषत्वादस्मितावदिति । विकारहेतुत्वं चाविशेषत्वं तन्मात्रेषु चास्मितायां चाविशिष्टम् । संकलय्य विशेषान्परिगणयति—**गुणानामेष इति** ।

अविशेषानपि गणयति—**षडिति** । संकलय्योदाहरति—**तद्यथेति** । विशिष्टं ह्यपरं परेणेति गन्ध आत्मना पञ्चलक्षणो रस आत्मना चतुर्लक्षणो रूपमात्मना त्रिलक्षणं स्पर्श आत्मना द्विलक्षणः शब्दः शब्दलक्षण एवेति । कस्य पुनरमी षडविशेषाः कार्यमित्यत आह—**एते सत्तामात्रस्यात्मन इति** । पुरुषार्थक्रियाक्षमं सत् । तस्य भावः सत्ता । तन्मात्रं तन्महतत्त्वम् । यावती काचित्पुरुषार्थक्रिया शब्दादिभोगलक्षणा सत्त्वपुरुषान्यताख्यातिलक्षणा वास्ति सा सर्वा महति बुद्धौ समाप्यत इत्यर्थः । आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति । प्रकृतेरयमाद्यः परिणामो वास्तवो न तु तद्विवर्त इति यावत् । **यत्तत्परं विप्रकृष्टकालमविशेषेभ्यस्तदपेक्षया संनिकृष्टकालेभ्यो लिङ्गमात्रं महत्तत्त्वं तस्मि-**

---

13. L. reads विशेषाः before येषाम्.
17. O. reads प्रधानम् for प्रधानस्य.
20. N. reads विशिष्टम् for विशिष्टम्.

**तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति ।**

**प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निःसत्तासत्तं निःसदसन्निरसदव्यक्तमलिङ्गं प्रधानं तत्प्रतियन्ति । एष तेषां लिङ्गमात्रः परिणामो निःसत्तासत्तं चालिङ्गपरिणाम इति ।**

५ **अलिङ्गावस्थायां न पुरुषार्थो हेतुः । नालिङ्गावस्थायामादौ पुरु-**

---

**न्त** **ते षडविशेषाः सत्तामात्रे महत्यात्मन्यवस्थाय** सत्कार्यवादसिद्धेर्विवृद्धि- **काष्ठामनुभवन्ति** प्राप्नुवन्ति । ये पुनरविशेषाणां विशेषपरिणामास्तेषां च धर्मलक्षणावस्थाः परिणामा इति । सेयमेषां विवृद्धिकाष्ठा परिणामकाष्ठेति ।

तदेवमुत्पत्तिक्रममभिधाय प्रलयक्रममाह—**प्रतिसंसृज्यमानाः** प्रलीयमा-
१० नाः स्वात्मनि लीनविशेषा अविशेषास्त**स्मिन्नेव सत्तामात्रे महत्यात्मन्यव-स्थाय** विलीय सहैव महता तेऽविशेषा अव्यक्तमन्यत्र लयं न गच्छतीत्यलिङ्गं प्रतियन्ति । तस्यैव विशेषणं **निःसत्तासत्तम्** । सत्ता पुरुषार्थक्रियाक्षमत्वम् । असत्ता तुच्छता । निष्क्रान्तं सत्ताया असत्तायाश्च यत्तत्तथोक्तम् । एतदुक्तं भवति— सत्त्वरजस्तमसां साम्यावस्था न कंचित्पुरुषार्थ उपयुज्यत इति न सती । नापि
१५ गगनकमलिनीव तुच्छस्वभावा । तेन नासत्यपीति । स्यादेतत् । अव्यक्तावस्थायामप्यस्ति महदादि तदात्मना । न हि सतो विनाशो विनाशे वा न पुनरुत्पादो न ह्यसत उत्पाद इति महदादिसद्भावात्पुरुषार्थक्रिया प्रवर्तेत । तत्कथं निःसत्त्वमव्यक्तमित्यत आह—**निःसदसदिति** । निष्क्रान्तं कारणं सतः कार्यात् । यद्यपि कारणावस्थायां सदेव शक्त्यात्मना कार्यं तथापि स्वोचितामर्थक्रियामकुर्वदस-
२० दित्युक्तम् । न चैतत्कारणं शशविषाणायमानकार्यमित्याह—**निरसदिति** । निष्क्रान्तमसतस्तुच्छरूपात्कार्यात् । तथा सति हि व्योमारविन्दमिवास्मान्न कार्यमुत्पद्येतेति भावः । प्रतिसर्गमुक्तमुपसंहरति—**एष तेषामिति** । एष इत्यनन्तरोक्तात्पूर्वस्य परामर्शः ।

लिङ्गमात्राद्यवस्थाः पुरुषार्थकृतत्वादनित्या अलिङ्गावस्था तु पुरुषार्थेना-
२५ कृतत्वान्नित्येत्यत्र हेतुमाह—**अलिङ्गावस्थायामिति** । कस्मात्पुनर्न पुरुषार्थो हेतुरित्यत आह—**नालिङ्गावस्थायामिति** । भवतिना विषयेण विषयिज्ञान-

---

4. B. C. D. E. F. G. om. निरसत्.
6. D. E. om. न after अवस्थायाम्.
11. L. reads गच्छन्ति for गच्छति.
16. N. om. न after वा.

**षार्थता कारणं भवतीति न तस्याः पुरुषार्थता कारणं भवतीति । नासौ पुरुषार्थकृतेति नित्याख्यायते । त्रयाणां त्ववस्थाविशेषाणामादौ पुरुषार्थता कारणं भवति । स चार्थो हेतुर्निमित्तं कारणं भवतीत्यनित्याख्यायते । गुणास्तु सर्वधर्मानुपातिनो न प्रत्यस्तमयन्ते नोपजायन्ते । व्यक्तिभिरेवातीतानागतव्ययागमवतीभिर्गुणान्वयिनीभिरुपजननापायधर्मका इव प्रत्यवभासन्ते । यथा देवदत्तो दरिद्राति । कस्मात् । यतोऽस्य म्रियन्ते गाव इति । गवामेव मरणात्तस्य दरिद्रता न स्वरूपहानादिति समः समाधिः ।**

**लिङ्गमात्रमलिङ्गस्य प्रत्यासन्नं तत्र तत्संसृष्टं विविच्यते । क्रमानतिवृत्तेः । तथा षडविशेषा लिङ्गमात्रे संसृष्टा विविच्यन्ते । परिणामक्रमनियमात् । तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते ।**

मुपलक्षयति । एतदुक्तं भवति—एवं हि पुरुषार्थता कारणमलिङ्गावस्थायां ज्ञायेत । यद्यलिङ्गावस्था शब्दाद्युपभोगं वा सत्त्वपुरुषान्यताख्यातिं वा पुरुषार्थं निर्वर्तयेत्तन्निर्वर्तने हि न साम्यावस्था स्यात् । तस्मात्पुरुषार्थकारणत्वमस्यां न ज्ञायत इति नास्याः पुरुषार्थता हेतुः । उपसंहरति—**नासाविति** । इतिस्तस्मादर्थे । अनित्यामवस्थामाह—**त्रयाणां** लिङ्गमात्राविशेषविशेषाणामिति । एवंस्वरूपं दर्शयित्वा गुणस्वरूपमाह—**गुणास्त्विति** । निदर्शनमाह—**यथा देवदत्त इति** । यत्रात्यन्तभिन्नानां गवामुपचयापचयौ देवदत्तोपचयापचयहेतू तत्र कैव कथा गुणेभ्यो भिन्नाभिन्नानां व्यक्तीनामुपजननापाययोरित्यर्थः ।

ननु सर्गक्रमः किमनियतो नेत्याह—**लिङ्गमात्रमिति** । न खलु न्यग्रोधधाना अह्नायैव न्यग्रोधशाखिनं सान्द्रशाद्वलदलजटिलशाखाकाण्डनिर्गतमार्तण्डचण्डातपमण्डलमारभन्ते किं तु क्षितिसलिलतेजःसंपर्कात्परंपरयोपजायमानाङ्कुरपत्रकाण्डनालादिक्रमेण । एवमिहापि युक्त्यागमसिद्धः क्रम आस्थेय

1. G. reads तस्यापुरुषार्था for तस्याः पुरुषार्थता.
2. B. F. read अयं प्रकृतिलयो भवप्रत्ययोऽसंप्रज्ञातः समाधिः । त्रिप्रत्ययविशेषलिङ्गमात्राणाम् after आख्यायते.
3. L. reads अर्थे हेतुर्निमित्त for अर्थो हेतुर्निमित्तम्.
13. O. om. पुरुषार्थम्.
14. O. reads निवर्तयेत्तन्निवर्तने for निर्वर्तयेत्तन्निर्वर्तने.
14. L. reads अस्याः; N. reads अस्य for अस्याम्.
16. N. reads नित्याम् for अनित्याम्.
16. N. reads सर्गं for एवं.

**तथा चोक्तं पुरस्तात् । न विशेषेभ्यः परं तत्त्वान्तरमस्तीति विशेषाणां नास्ति तत्त्वान्तरपरिणामः । तेषां तु धर्मलक्षणावस्थापरिणामा व्याख्यायिष्यन्ते ॥ १९ ॥**

**व्याख्यातं दृश्यम् । अथ द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—**

५ **द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

**दृशिमात्र इति दृक्शक्तिरेव विशेषणापरामृष्टेत्यर्थः । स पुरुषो बुद्धेः प्रतिसंवेदी । स बुद्धेर्न सरूपो नात्यन्तं विरूप इति । न तावत्सरूपः । कस्मात् । ज्ञाताज्ञातविषयत्वात्परिणामिनी हि बुद्धिः । तस्याश्च विषयो गवादिर्घटादिश्च ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति ।**
१० **सदा ज्ञातविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयति । कस्मात् ।**

इति । कथं भूतेन्द्रियाण्यविशेषसंसृष्टानीत्यत आह—**तथा चोक्तं पुरस्ता**दिदमेव सूत्रं प्रथमं व्याचक्षाणैः । अथ विशेषाणां कस्मान्न तत्त्वान्तरपरिणाम उक्त इत्यत आह—**न विशेषेभ्य इति** । तत्किमिदानीमपरिणामिन एव विशेषाः । तथा च नित्याः प्रसज्येरन्नित्यत आह—**तेषां त्विति** ॥ १९ ॥
१५ व्याख्यातं दृश्यम् । द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः** । व्याचष्टे—**दृशिमात्र इति** । विशेषणानि धर्मास्तैरपरामृष्टा । तदनेन मात्रग्रहणस्य तात्पर्यं दर्शितम् । स्यादेतत् । यदि सर्वविशेषणरहिता दृक्शक्तिर्न तर्हि शब्दादयो दृश्येरन् । न हि दृशिनाऽसंसृष्टं दृश्यं भवतीत्यत आह—**स पुरुष इति** । बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्ति-
२० रेव बुद्धिप्रतिसंवेदित्वं पुंसः । तथा च दृशिच्छायापन्नया बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्यर्थः । स्यादेतत् । पारमार्थिकमेव बुद्धिचैतन्ययोः कस्मादैक्यं नोपेयते किमनया तच्छायापत्त्येत्यत आह—**स बुद्धेर्न सरूप इति** । तथाऽसरूपस्य तच्छायापत्तिरपि दुर्घटेत्यत आह—**नात्यन्तं विरूप इति** । तत्र सारूप्यं निषेधति—**न तावदिति** । हेतुं पृच्छति । **कस्मात्** । सहेतुकं
२५ वैरूप्ये हेतुमाह—**ज्ञातेति** । परिणामिनी बुद्धिर्यस्मात्तस्माद्विरूपा । यदा खल्वियं शब्दाद्याकारा भवति तदा ज्ञातोऽस्याः शब्दादिलक्षणो भवति विषयः । तदनाकारत्वे त्वज्ञातः । तथा च कदाचिदेव तदाकारतां दधती परिणामिनीति । प्रयोगश्च भवति—बुद्धिः परिणामिनी ज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति ।
तद्वैरूप्यं पुरुषस्य तद्विपरीताद्धेतोः सिध्यतीत्याह—**सदेति** । स्यादेतत् ।
३० सदा ज्ञातविषयश्चेत्पुरुषो न तर्हि केवली स्यादित्याशयवान्पृच्छति—**कस्मा-**

---

6. B. F. read विशपण for विशेषण.
10. D. E. read न for तु.
23. O. reads एव for अपि.

न हि बुद्धिश्च नाम पुरुषविषयश्च स्यादगृहीता चेति सिद्धं पुरुषस्य सदा ज्ञातविषयत्वं ततश्चापरिणामित्वमिति । किं च परार्था बुद्धिः संहत्यकारित्वात्, स्वार्थः पुरुष इति । तथा सर्वार्थाध्यवसायकत्वात्त्रिगुणा बुद्धिस्त्रिगुणत्वादचेतनेति । गुणानां तूपद्रष्टा पुरुष इति । अतो
५ न सरूपः ।

अस्तु तर्हि विरूप इति । नात्यन्तं विरूपः । कस्मात् । शुद्धोऽप्यसौ प्रत्ययानुपश्यः । यतः प्रत्ययं बौद्धमनुपश्यति । तमनुपश्यन्नतदात्मापि तदात्मक इव प्रत्यवभासते । तथा चोक्तम्—अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति ।

---

• विति । उत्तरम् —न हि बुद्धिश्च नामेति । बुद्धग्रहणयोरस्ति सह संभवो निरोधावस्थायामत उक्तं विरोधसूचनाय पुरुषविषयश्चेति । तेनापश्चकारो बुद्धिं विषयत्वेन समुच्चिनोति । परिशिष्टौ तु विरोधद्योतकौ चकाराविति । प्रयोगस्तु पुरुषोऽपरिणामी सदा संप्रज्ञातव्युत्थानावस्थयोर्ज्ञातविषयत्वात् । यस्तु परिणामी नासौ सदा ज्ञातविषयो यथा श्रोत्रादिरिति व्यतिरेकी हेतुः । अपर-
१५ मपि वैधर्म्यमाह—किं च परार्थेति । बुद्धिः खलु क्लेशकर्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्तयन्ती परार्था । प्रयोगश्च—परार्था बुद्धिः, संहत्यकारित्वाच्छयनासनाभ्यङ्गवदिति । पुरुषस्तु न तथेत्याह—स्वार्थः पुरुष इति । सर्वं पुरुषाय कल्पते । पुरुषस्तु न कस्मैचिदित्यर्थः । वैधर्म्यान्तरमाह—सर्वेति । सर्वानर्थाञ्शान्तघोरमूढांस्तदाकारपरिणता बुद्धिरध्यवस्यति सत्त्व-
२० रजस्तमसां चैते परिणामा इति सिद्धा त्रिगुणा बुद्धिरिति । न चैवं पुरुष इत्याह—गुणानामिति । तत्प्रतिबिम्बितः पश्यति न तु तदाकारपरिणत इत्यर्थः । उपसंहरति—अत इति ।

अस्तु तर्हि विरूप इति । नात्यन्तं विरूपः कस्माद्यतः शुद्धोऽपि प्रत्ययानुपश्यः । यथा चैतन्यधर्मके "वृत्तिसारूप्यमितरत्र" ( यो. सू. १।४ )
२५ इत्यत्र । तथा चोक्तं पञ्चशिखेनापरिणामिनी हि भोक्तृशक्तिरात्मा । अत एव बुद्धावप्रतिसंक्रमा च परिणामिनि बुद्धिरूपेऽर्थे संक्रान्तेव तद्वृत्ति

---

1. G. reads नाहि for न हि.
1. B. Reads गृहीता after अगृहीता.
3. E. om. क after अध्यवसाय.
4. G. reads अचेतने त्रिगुणानाम् for अचेतनेति । गुणानाम्.
8. G. reads तु after भोक्तृ.
9. B. F. read इत्यर्थे प्रतिसंक्रान्ते च for अर्थे,प्रतिसंक्रान्तेव,
15. L. om. आदि after वासना.
17. N. O. read आयतनवत् for अभ्यङ्गवत्.

**तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्य-
विशिष्टा हि ज्ञानवृत्तिरित्याख्यायते ॥ २० ॥**

## तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

**दृशिरूपस्य पुरुषस्य कर्मरूपतामापन्नं दृश्यमिति तदर्थ एव
५ दृश्यस्यात्मा भवति । स्वरूपं भवतीत्यर्थः । तत्स्वरूपं तु पररूपेण प्रति-
लब्धात्मकं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति ।**

---

बुद्धिवृत्तिमनुपतति । नन्वसंक्रान्ता कथं संक्रान्तेव कथं वा वृत्तिं विनानु-
पततीत्यत आह—**तस्याश्चेति** । प्राप्तश्चैतन्योपग्रह उपरागो येन रूपेण तत्तथा
प्राप्तचैतन्योपग्रहं रूपं यस्याः सा तथोक्ता । एतदुक्तं भवति—**यथा निर्मले**
१० जलेऽसंक्रान्तोपि चन्द्रमाः संक्रान्तप्रतिबिम्बतया संक्रान्त इव, एवमत्राप्यसं-
क्रान्तापि संक्रान्तप्रतिबिम्बा चितिशक्तिः संक्रान्तेव । तेनबुद्ध्यात्मत्वमापन्ना
बुद्धिवृत्तिमनुपततीति । तदनेनानुपश्य इति व्याख्यातं तामनुकारेण पश्यती-
त्यनुपश्य इति ॥ २० ॥

द्रष्टृदृश्ययोः स्वरूपमुक्त्वा स्वस्वामिलक्षणसंबन्धार्थं दृश्यस्य द्रष्ट्रर्थत्वमाह—
१५ **तदर्थ एव दृश्यस्यात्मा** । व्याचष्टे—**दृशिरूपस्य पुरुषस्य** भोक्तुः **कर्मरूपतां**
भोग्यतामापन्नं **दृश्यमिति** तस्मात्तदर्थ एव द्रष्ट्रर्थ एव दृश्यस्यात्मा भवति
न तु दृश्यार्थः । **ननु** नात्मात्मार्थ इत्यत आह—**स्वरूपं भवतीति** । एत-
दुक्तं भवति—सुखदुःखात्मकं दृश्यं भोग्यम् । सुखदुःखे चानुकूलयितृप्रतिकूल-
यितृणी तत्त्वेन तदर्थे एव व्यवतिष्ठेते । विषया अपि हि शब्दादयस्तादात्म्यादे-
२० व चानुकूलयितारः प्रतिकूलयितारश्च । न चात्मैवैषामनुकूलनीयः प्रतिकूलनी-
यश्चः स्वात्मनि वृत्तिविरोधात् । अतः पारिशेष्याच्चितिशक्तिरेवानुकूलनीया प्रतिकू-
लनीया च । तस्मात्तदर्थमेव दृश्यं न तु दृश्यार्थम् । अतश्च तदर्थ एव दृश्यस्या-
त्मा न दृश्यार्थो यत्स्वरूपमस्य यावत्पुरुषार्थमनुवर्तते । निर्वर्तिते च पुरुषार्थे
निवर्तत इत्याह—**स्वरूपमिति** । स्वरूपं तु दृश्यस्य जडं पररूपेणात्मरूपेण
२५ चैतन्येन प्रतिलब्धात्मकमनुभूतस्वरूपं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्य-

---

1. B. L. read बुद्धिवृत्त्या for बुद्धिवृत्ति.
2. B. F. read अयं विदेहासंप्रज्ञातो भवप्रत्ययः । साक्षाद्भवप्रत्यय उपाय-
   प्रत्ययश्च योगश्च समाधिपादवर्णिता इति after आख्यायते.
3. A. reads एतदर्थ एव दृश्यस्यात्मता for तदर्थ० त्मा.
4. B. C. F. G. read विषयताम् for रूपताम्.
6. F. reads प्र before कृतायाम्.
6. B. F. om. न.
10–11. N. om. असंक्रान्तापि.
17. O. reads दृष्टः for दृश्य.
25. O. reads चेतनेन for चैतन्येन.

**स्वरूपहानादस्य नाशः प्राप्तः । न तु विनश्यति ॥ २१ ॥**

**कस्मात्—**

## कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥

**कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि नाशं प्राप्तमप्यनष्टं तदन्यपुरुषसाधारणत्वात् । कुशलं पुरुषं प्रति नाशं प्राप्तमप्यकुशलान्पुरुषान्प्रति न कृतार्थमिति तेषां दृशेः कर्मविषयतामापन्नं लभत एव पररूपेणात्मरूपमिति । अतश्च दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यात**

ते । भोगः सुखाद्याकारः शब्दाद्यनुभवः । अपवर्गः सत्त्वपुरुषान्यतानुभवः । तच्चैतदुभयमप्याजानतो जडाया बुद्धेः पुरुषच्छायापत्त्येति पुरुषस्यैव । तथा च पुरुषभोगापवर्गयोः कृतयोर्दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायामित्युक्तम् । अत्रान्तरे चोदयति—**स्वरूपहानादिति** । परिहरति—**न तु विनश्यतीति** ॥ २१ ॥

नन्वत्यन्तानुपलभ्यं कथं न विनश्यतीत्याशयवान्पृच्छति—**कस्मादिति** । सूत्रेणोत्तरमाह—**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्** । कृतोर्थो यस्य पुरुषस्य स तथा । तं प्रति नष्टमप्यनष्टं तद्दृश्यम् । कुतः । सर्वान्पुरुषान्कुशलानकुशलान्प्रति साधारणत्वात् । व्याचष्टे—**कृतार्थमेकमिति** । नाशोऽदर्शनम् । अनष्टं तु दृश्यम् । अन्यपुरुषसाधारणत्वात् । तस्माद्दृश्यात्परस्यात्मनश्चैतन्यं रूपं तेन तादृह श्रुतिस्मृतीतिहासपुराणप्रसिद्धमव्यक्तमनवः[illegible]कमनाश्रयं व्यापि नित्यं विश्वकार्यशक्तिमत् । यद्यपि कुशलेन तं प्रति कृतकार्यं न दृश्यते तथाप्यकुशलेन दृश्यमानं न नास्ति । न हि रूपमन्धेन न दृश्यत इति चक्षुष्मतापि दृश्यमानमभावमात्रं भवति । न च प्रधानवदेक एव पुरुषः । तन्नानात्वस्य जन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थया सिद्धेः । एकत्वश्रुतीनां च प्रमाणान्तरविरोधात्कथंचिद्देशकालविभागाभावेन भक्त्याप्युपपत्तेः । प्रकृत्येकत्वपुरुषनानात्वयोश्च श्रुत्यैव साक्षात्प्रतिपादनात् ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ ( तै.आ. ६।१०)

इति श्रुतिः । अस्या एव श्रुतेश्चानेन सूत्रेणार्थोऽनूदित इति । यतो दृश्यं नष्टमप्यनष्टं पुरुषान्तरं प्रत्यस्ति । अतो दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यातः ।

6. G. reads एवम् for एव.
7. B. L. F. read अनात्मरूपम् for आत्मरूपम्.
9. L. reads अजानतः for आजानतः.
19. L. reads तत्प्रतिकूल for तं प्रति कृत.
20. P. om. न before नास्ति.

इति । तथा चोक्तम्- धर्मिणामनादिसंयोगाद्धर्ममात्राणामप्यनादिः संयोग इति ॥ २२ ॥

संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रववृते—

**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥**

५ पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः । तस्मात्संयोगाद्दृश्यस्योपलब्धिर्या स भोगः । या तु द्रष्टुः स्वरूपोपलब्धिः सोपवर्गः । दर्शनकार्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तम् । दर्शनमदर्शनस्य प्रतिद्वंद्वीत्यदर्शनं संयोगनिमित्तमुक्तम् । नात्र दर्शनं

अत्रैवागमिनामनुमतिमाह—तथा चोक्तमिति । धर्मिणां गुणानामात्मभिरना-
१० दिसंयोगाद्धर्ममात्राणां महदादीनामप्यनादिः संयोग इति । एकैकस्य महदादेः संयोगोनादिरप्यनित्य एव यद्यपि तथापि सर्वेषां महदादीनां नित्यः । पुरुषान्तराणां साधारणत्वात् । अत उक्तं धर्ममात्राणामिति । मात्रग्रहणेन व्याप्तिं गमयति । अत एतद्भवति—यद्यप्येकस्य महतः संयोगोतीततामापन्नस्तथापि महदन्तरस्य पुरुषान्तरेण संयोगो नातीत इति नित्य उक्तः ॥ २२ ॥

१५ तदेवं तादर्थ्ये संयोगकारण उक्ते प्रासङ्गिके प्रधाननित्यत्वे संयोगसामान्यनित्यत्वे हेतौ चोक्ते संयोगस्य यत्स्वरूपमसाधारणो विशेष इति यावत्तदभिधित्सयेदं सूत्रं प्रवृत्ते—**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः** । यतो दृश्यं तद्धर्मतस्तज्जनितमुपकारं भजमानः पुरुषस्तस्य स्वामी भवति । भवति च तद्दृश्यमस्य स्वम् स चानयोः संयोगः शक्तिमात्रेण व्यवस्थितस्तत्स्वरू-
२० पोपलब्धिहेतुः । तदेतद्भाष्यमवयोतयति—**पुरुषः स्वामी** योग्यतामात्रेण **दृश्येन स्वेन** योग्यतयैव **दर्शनार्थं संयुक्तः** । शेषं सुगमम् । स्यादेतत् । द्रष्टुः स्वरूपोपलब्धिरपवृज्यतेनेनेत्यपवर्ग उक्तः । न च मोक्षः साधनवान् । तथा सत्यर्थं मोक्षत्वादेव च्यवेतेत्यत आह—**दर्शनकार्यावसानो** बुद्धिविशेषेण सह पुरुषविशेषस्य संयोग इति दर्शनं वियोगकारणमुक्तम् । कथं पुनर्दर्शनकार्या-
२५ वसानत्वं संयोगस्येत्यत आह—**दर्शनमिति** । ततः किमित्यत आह—**अदर्शनमविद्या संयोगनिमित्तमित्युक्तम्** । उक्तमर्थं स्पष्टयति—**नात्रेति** । ननु दर्शनमदर्शनं विरोधि निवर्तयतु, वन्ध्यस्य कुतो निवृत्तिरित्यत आह—

---

4. G. reads रूप for स्वरूप.
4. A. reads लब्धिः for लब्धिहेतुः.
6. G. om. स्वेन.
15. N. om. संयोगसामान्यनित्यत्वे.
27. O. om. अदर्शनम्.

मोक्षकारणम्। अदर्शनाभावादेव बन्धाभावः स मोक्ष इति। दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनं ज्ञानं कैवल्यकारणमुक्तम्।

किं चेदमदर्शनं नाम किं गुणानामधिकारः।

आहोस्विद्दृशिरूपस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्या-
५ नुत्पादः। स्वस्मिन्दृश्ये विद्यमाने यो दर्शनाभावः।

किमर्थवत्ता गुणानाम्।

अथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्योत्पत्तिबीजम्।

किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः। यत्रेदमुक्तं प्रधानं स्थित्यैव वर्तमानं विकाराकरणादप्रधानं स्यात्। तथा

---

१० दर्शनस्येति। बुद्ध्यादिविविक्तस्यात्मनः स्वरूपावस्थानं मोक्ष उक्तो न तस्य साधनं दर्शनमपि त्वदर्शननिवृत्तेरित्यर्थः।

असाधारणं संयोगहेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति-**किं चेदमिति**। पर्युदासं गृहीत्वाह--**किं गुणानामधिकारः** कार्यारम्भणसामर्थ्यम्। ततो हि संयोगः संसारहेतुरुपजायते।

१५ प्रसज्यप्रतिषेधं गृहीत्वा द्वितीयं विकल्पमाह--**आहोस्विदिति**। दर्शितो विषयः शब्दादिः सत्त्वपुरुषान्यता च येन चित्तेन तस्य तद्विषयस्यानुत्पादः। एतदेव स्फोरयति--**स्वस्मिन्दृश्ये** शब्दादौ सत्त्वपुरुषान्यतायां चेति। तावदेव प्रधानं विचेष्टते न यावद्द्विविधं दर्शनमभिनिर्वर्तयति। निष्पादितोभयदर्शनं तु निवर्तत इति।

२० पर्युदास एव तृतीयं विकल्पमाह—**किमर्थवत्ता गुणानाम्**। सत्कार्यवादसिद्धौ हि भाविनावपि भोगापवर्गार्थावव्यपदेश्यतया स्त इत्यर्थः।

पर्युदास एवचतुर्थं विकल्पमाह—**अथाविद्या** प्रतिसर्गकाले **स्वचित्तेन सह निरुद्धा** प्रधानसाम्यमागता वासनारूपेण स्वचित्तोत्पत्तिबीजम्। तेन दर्शनादन्याऽविद्यावासनैवादर्शनमुक्ता।

२५ पर्युदास एव पञ्चमं विकल्पमाह—**किं स्थितिसंस्कारस्य** प्रधानवर्तिनः साम्यपरिणामपरंपरावाहिनः क्षये गतिर्महदादिविकारारम्भस्तद्धेतुः संस्कारः प्रधानस्य गतिसंस्कारस्तस्याभिव्यक्तिः कार्योन्मुखत्वम्। तदुभयसंस्कारसद्भावे मतान्तरानुमतिमाह--**यत्रेदमुक्त**मैकान्तिकत्वं व्यामेधाद्यैः, प्रधीयते जन्यते विकारजातमनेनेति **प्रधानम्**। तच्चेत्स्थित्यैव वर्तेत न कदाचिद्गत्या ततो **विकाराकरणान्न** प्रधीयते तेन किंचिदित्य**प्रधानं स्यात्**।

---

1. D. E. read सम् before बन्ध.
2. F. reads अज्ञानादिदर्शनस्य; D. reads अदर्शनम् for अदर्शनस्य.
5. D. reads विद्यमानयोः for विद्यमाने यः.
10. N. O. read बुद्ध्या हि for बुद्ध्यादि.
11. L. reads निवृत्तिः for निवृत्तेः.
18. L. O. read विविधम् for द्विविधम्.

**गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्यात् । उभयथाचास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथा । कारणान्तरेष्वपि कल्पितेष्वेष समानश्चर्चः ।**

**दर्शनशक्तिरेवादर्शनमित्येके । प्रधानस्यात्मख्यापनार्था प्रवृत्ति-**
५ **रिति श्रुतेः । सर्वबोध्यबोधसमर्थः प्राक्प्रवृत्तेः पुरुषो न पश्यति सर्वकार्यकरणसमर्थं दृश्यं तदा न दृश्यत इति ।**

**उभयस्याप्यदर्शनं धर्म इत्येके । तत्रेदं दृश्यस्य स्वात्मभूतमपि**

---

अथ गत्यैव वर्तेत न कदाचिदपि स्थित्या, तत्राह—**तथा गत्यैवेति ।** क्वचित्पाठः "स्थित्यै गत्यै" इति । तादर्थ्ये चतुर्थी, एवकारश्च द्रष्टव्यः । स्थित्यै
१० चेन्न वर्तेत न कश्चिद्विकारो विनश्येत् । तथा च भावस्य सतोविनाशिनो नोत्प-त्तिरपीति विकारत्वादेव च्यवेत । एवं च न प्रधीयतेऽत्र किंचिदित्यप्रधानं स्यात् । तदुभयथा स्थित्या गत्या चास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथैकान्ताभ्युप-गमे । न केवलं प्रधाने कारणान्तरेष्वपि परब्रह्मतन्मायापरमाण्वादिषु कल्पितेषु समानश्चर्चो विचारः । तान्यपि हि स्थित्यैव वर्तमानानि विकाराकरणादकार-
१५ णानि स्युः, गत्यैव वर्तमानानि विकारनित्यत्वादकारणानि स्युरिति च ।

पर्युदास एव षष्ठं विकल्पमाह—**दर्शनशक्तिरेवेति** । यथा प्रजापतिव्रते नेक्षेतो-द्यन्तमादित्यमित्यनीक्षणप्रत्यासन्नः संकल्पो गृह्यत एवमिहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिरुच्यते । सा च दर्शनं भोगादिलक्षणं प्रसोतुं द्रष्टारं दृश्येन योजयतीति । अत्रैव श्रुतिमाह—**प्रधानस्येति** । स्यादेतत् ।
२० आत्मख्यापनार्थं प्रधानं प्रवर्तत इति श्रुतिराह न त्वात्मदर्शनशक्तिः प्रवर्तत इत्यत आह—**सर्वबोध्यबोधसमर्थ इति** । प्राक्प्रवृत्तेः प्रधानस्य नात्म-ख्यापनमात्रं प्रवृत्तौ प्रयोजकम् । असामर्थ्ये तदयोगात् । तस्मात्सामर्थ्यं प्रवृत्तेः प्रयोजकमिति श्रुत्यार्थादुक्तमित्यर्थः । दर्शनशक्तिः प्रधानाश्रयेत्यङ्गीकृत्य षष्ठः कल्पः ।

२५ इमामेवोभयाश्रयामास्थाय सप्तमं विकल्पमाह—**उभयस्य पुरुषस्य च दृश्यस्य चादर्शनं दर्शनशक्तिर्धर्म इत्येके** । स्यादेतत् । मृष्यामहे दृश्यस्येति, तस्य सर्वशक्त्याश्रयत्वात् । न द्रष्टुरिति पुनर्मृष्यामः । न हि तदाधारा ज्ञानशक्तिः । तत्र ज्ञानस्यासमवायात् । अन्यथा परिणामापत्ति-रित्यत आह—**तत्रेदमिति** । भवतु दृश्यात्मकं तथापि तस्य जडत्वेन तद्गतश-
३० क्तिकार्यं दर्शनमपि जडमिति न शक्यं तद्धर्मत्वेन विज्ञातुम् । जडस्य स्वयमप्रकाश-त्वात् । अतो दृशेरात्मनः प्रत्ययं चैतन्यच्छायापत्तिमपेक्ष्य दर्शनं तद्धर्मत्वेन भवति

---

2. B. reads एव; G. reads एषु for एषः.
18. L. reads प्रस्तोतुम् for प्रसोतुम्.
21. K. reads शक्तेः for शक्तिः.
31. N. reads चैतन्यम् for चैतन्य

पुरुषप्रत्ययापेक्षं दर्शनं दृश्यधर्मत्वेन भवति । तथा पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनेवादर्शनमवभासते ।

दर्शनं ज्ञानमेवादर्शनमिति केचिदभिदधति । इत्येते शास्त्रगता विकल्पाः । तत्र विकल्पबहुत्वमेतत्सर्वपुरुषाणां गुणानां संयोगे साधा-
५ रणविषयम् ॥ २३ ॥

यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—

## तस्य हेतुरविद्या ॥ २४ ॥

विपर्ययज्ञानवासनेत्यर्थः । विपर्ययज्ञानवासनावासिता च न

ज्ञायते विषयेण विषयिणो लक्षणात् । नन्वेतावतापि दृश्यधर्मत्वमस्य ज्ञानस्य
१० भवति न तु पुरुषधर्मत्वमपीत्यत आह—**तथा पुरुषस्येति** । सत्यं पुरुषस्यानात्मभूतमेव तथापि दृश्यबुद्धिसत्त्वस्य यः प्रत्ययश्चैतन्यच्छायापन्नस्तमपेक्ष्य पुरुषधर्मत्वेनेव न तु पुरुषधर्मत्वेन । एतदुक्तं भवति—चैतन्यबिम्बोद्ग्राहितया बुद्धिचैतन्ययोरभेदाद्बुद्धिधर्माश्चैतन्यधर्मा इव चकासतीति ।

अष्टमं विकल्पमाह—**दर्शनं ज्ञानमेव** शब्दादीनामदर्शनं न तु सत्त्वपुरुषा-
१५ न्यताख्या इति केचित् । यथा चक्षुः रूपं प्रमाणमपि रसाद्यप्रमाणमुच्यते । एतदुक्तं भवति—सुखाद्याकारशब्दादिज्ञानानि स्वाभिव्यनुगुणतया दृश्यदृश्यसंयोगमाक्षिपन्तीति । तदेवं विकल्प्य चतुर्थं विकल्पं स्वीकर्तुमितरेषां विकल्पानां सांख्यशास्त्रगतानां सर्वपुरुषसाधारण्येन भोगवैचित्र्याभावप्रसङ्गेन दूषयति—**इत्येते शास्त्रगता इति** ॥ २३ ॥

२० चतुर्थं विकल्पं निर्धारयितुं सूत्रमवतारयति—**यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोग इति** । प्रतीपमञ्चति प्राञ्चतीति प्रत्यगसाधारणस्तु संयोग एकैकस्य पुरुषस्यैकैकया बुद्ध्या वैचित्र्यहेतुः । सूत्रं पठति—**तस्येति** । नन्वविद्या विपर्ययज्ञानम् । तस्य भोगापवर्गयोरिव स्वबुद्धिसंयोगो हेतुः । असंयुक्तायां बुद्धौ तदनुत्पत्तेः । तत्कथमविद्या संयोगस्य हेतुरित्यत आह—**विपर्ययज्ञानवास-**
२५ **नेति** । सर्गान्तरीयाया अविद्यायाः स्वचित्तेन सह निरुद्धाया अपि प्रधानेऽस्ति

---

1. D. om. पुरुषप्रत्य० त्मभूतमपि.
1. C. E. read प्रत्ययमपेक्ष्यादर्शनम् for प्रत्ययापेक्षं दर्शनम्.
2. B. F. read एव for इव.
10. L. reads सत्त्वम् for सत्यम्.
14. N. O. P. om. सत्त्व.
21. P. reads प्रति प्रति for प्रतीपम्.

**कार्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साधिकारा पुनरावर्तते । सा तु पुरुषख्यातिपर्यवसानां कार्यनिष्ठां प्राप्नोति । चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्तते।**

**अत्र कश्चित्षण्डकोपाख्यानेनोद्घाटयति—मुग्धया भार्ययाभिधी-** ५ **यते—षण्डकार्यपुत्र, अपत्यवती मे भगिनी किमर्थं नाम नाहमिति । स तामाह—मृतस्तेहमपत्यमुत्पादयिष्यामीति । तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति, विनष्टं करिष्यतीति का प्रत्याशा । तत्राचार्य-देशीयो वक्ति—ननु बुद्धिनिवृत्तिरेव मोक्षः । अदर्शनकारणाभावाद्बुद्धि-**

वासना । तद्वासनावासितं च प्रधानं तत्तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृ- १० जति । एवं पूर्वपूर्वसर्गेष्वित्यनादित्वाददोषः । अत एव प्रतिसर्गावस्थायां न पुरुषो मुच्यत इत्याह—**विपर्ययज्ञानेति** । यदा पुरुषख्यातिं कार्यनिष्ठां प्राप्ता तदा विपर्ययज्ञानवासनाया बन्धकारणस्याभावान्न पुनरावर्तत इत्याह—**सा त्विति** ।

अत्र कश्चिन्नास्तिकः कैवल्यं षण्डकोपाख्यानेनोपहसति । षण्डकोपाख्यान- १५ माह—**मुग्धयेति** । किमर्थमित्यर्थशब्दो निमित्तमुपलक्षयति । प्रयोजनस्यापि निमित्तत्वात् । षण्डकोपाख्यानेन साम्यमापादयति—**तथेदं विद्यमानं** गुणपुरुषा-न्यताज्ञानं **चित्तनिवृत्तिं न करोति,** परवैराग्येण ज्ञानप्रसादमात्रेण ससंस्कारं निरुद्धं **विनष्टं करिष्यतीति का प्रत्याशा** । यस्मिन्सत्येव यद्भवति तत्तस्य कार्यं न तु यस्मिन्नसतीति भावः । अत्रैकदेशिमतेन परिहारमाह—**तत्रेति** । २० ईषदपरिसमाप्त आचार्य आचार्यदेशीयः । आचार्यस्तु वायुप्रोक्ते उक्तलक्षणः—

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥ (वा. पु. ५९।३०)

इति । भोगविवेकख्यातिरूपपरिणतबुद्धिनिवृत्तिरेव मोक्षः । न तु बुद्धिस्वरूपनि-वृत्तिः । सा च धर्ममेघान्तविवेकख्यातिप्रतिष्ठाया अनन्तरमेव भवति सत्यपि २५ बुद्धिस्वरूपमात्रावस्थान इत्यर्थः । एतदेव स्फोरयति—**अदर्शनस्य बन्धकारण-**

---

1. D. E. read ख्याति for ख्यातिम्.
1. D. E. read समाधिकारा for साधिकारा.
2. G. reads अख्याति for ख्याति.
2. C. G. read पर्यवसाना for पर्यवसानाम्.
2. G. reads निष्ठा for निष्ठाम्.
3. B. F. read अदर्शन for अदर्शना.
7. D. E. G. read वृत्तिम् for निवृत्तिम्.
11. L. N. read ख्यातिः for ख्यातिम्.
17. N. reads वृत्तिम् for निवृत्तिम्.
17. O. P. read संस्कार for ससंस्कारम्.

निवृत्तिः । तस्मादर्शनं बन्धकारणं दर्शनान्निवर्तते । तत्र चित्तनिवृत्तिरेव मोक्षः । किमर्थमस्थान एवास्य मतिविभ्रमः ॥ २४ ॥

हेयं दुःखमुक्तम् । हेयकारणं च संयोगाख्यं सनिमित्तमुक्तम् । अतः परं हानं वक्तव्यम्—

५ **तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥**

तस्यादर्शनस्याभावाद्बुद्धिपुरुषसंयोगाभाव आत्यन्तिको बन्धनोपरम इत्यर्थः । एतद्धानम् । तद्दृशेः कैवल्यं पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः । दुःखकारणनिवृत्तौ दुःखोपरमो हानम् । तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम् ॥ २५ ॥

१० अथ हानस्य कः प्राप्त्युपाय इति—

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

---

स्याभावाद्बुद्धिनिवृत्तिः । तस्मादर्शनं बन्धकारणं दर्शनान्निवर्तते । दर्शननिवृत्तिस्तु परवैराग्यसाध्या । सत्यपि बुद्धिस्वरूपावस्थाने मोक्ष इति भावः । एकदेशिमतमुपन्यस्य स्वमतमाह—**तत्र चित्तनिवृत्तिरेव मोक्षः** । ननूक्तं दर्शने

१५ निवृत्तेऽचरितार्थचित्तस्वरूपनिवृत्तिर्भवतीति कथं दर्शनकार्येत्यत आह—**किमर्थमस्थाने मतिविभ्रम इति** । अयमभिसंधिः—यदि दर्शनस्य साक्षाच्चित्तनिवृत्तौ कारणभावमङ्गीकुर्वीमहि तत एवमुपालभ्येमहि । किं तु विवेकदर्शनं प्रकर्षकाष्ठां प्राप्तं निरोधसमाधिभावनाप्रकर्षक्रमेण चित्तनिवृत्तिमत्पुरुषस्वरूपावस्थानोपयोगीत्यातिष्ठामहे तत्कथमुपालम्भमर्हतीति ॥ २४ ॥

२० तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति—**हेयं दुःखमुक्तमिति** । **तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम्** । व्याचष्टे—**तस्येति** । अस्ति हि महाप्रलयेऽपि संयोगाभावोऽत उक्तमात्यन्तिक इति । दुःखोपरमो हानमिति पुरुषार्थता दर्शिता । शेषमतिरोहितम् ॥ २५ ॥

हानोपायलक्षणं चतुर्थं व्यूहमाख्यातुं सूत्रमवतारयति—**अथेति** । **विवेक-**

२५ **ख्यातिरविप्लवा हानोपायः** । आगमानुमानाभ्यामपि विवेकख्यातिरस्ति । न

---

1. E. reads वृत्तिः for निवृत्तिः after बुद्धि.
1. C. reads अदर्शन for अदर्शनम्.
5. A. reads एव befor दृशेः.
5. G. reads दृशः for दृशेः.
8. B. F. read पुरुषसंयोगो लिङ्गमात्रादि for पुनरसंयोगः.
8. D. G. read असंयोगः for असंयोगः.

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः । सा त्वनिवृत्तमिथ्याज्ञाना प्लवते । यदा मिथ्याज्ञानं दग्धबीजभावं वन्ध्यप्रसवं संपद्यते तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति । सा विवेकख्यातिर-
५ विप्लवा हानोपायः । ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमः पुनश्चाप्रसव इत्येष मोक्षस्य मार्गो हानस्योपाय इति ॥ २६ ॥

## तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः । सप्तधेत्यशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवे-
१० किनो भवति ।

---

चासौ व्युत्थानं तत्संस्कारं वा निवर्तयति तद्वतापि तदनुवृत्तेरिति तन्निवृत्त्यर्थमविप्लवेति । विप्लवो मिथ्याज्ञानं तद्रहिता । एतदुक्तं भवति—श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकालनैरन्तर्यसत्काराऽऽसेवितायां भावनायाः प्रकर्षपर्यन्तं समधिगता साक्षात्कारवती विवेकख्यातिर्निवर्तितस-
१५ वासनामिथ्याज्ञाना निर्विप्लवा हानोपाय इति । शेषं सुगमं भाष्यम् ॥ २६ ॥

विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण—**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा** । व्याचष्टे—तस्येति प्रत्युदितख्यातेर्वर्तमानख्यातेर्योगिनः **प्रत्याम्नायः** परामर्शः । अशुद्धिरेवावरणं चित्तसत्त्वस्य । तदेव मलं तस्यापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठामा-
२० पन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति । विषयभेदात्प्रज्ञाभेदः । प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ताः । यतः परं नास्ति स प्रकर्षः । प्रान्ता भूमयो यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ।

---

1. D. reads स त्वनिवृत्त for सा त्वनिवृत्त.
2. B. reads वन्ध्याप्रसवम् for वन्ध्यप्रसवम्.
5. B. F. read सा द्वयी अस्मिता सास्मिता च या विश्वं निर्माय स्वात्मानं त्रिविधं विभज्य क्रीडति साऽस्मिताख्या । या तया सहिता तत्तादात्म्यं प्राप्याहमेव विश्वात्मक इव मन्यते सा सास्मिता । तयोः संयोगाभावेन स्वपातिः कैवल्यं स्वस्वैकवत्वं विवेकाभावात् after हानोपायः.
7. A. reads भूमी; B. F. read भूमि for भूमिः.
8. B. F. L. read सप्तधेव after सति.
13. K. reads युक्तिपथेन for युक्तिमयेन.
14. N. reads समाधिगत for समधिगता.
20. L. N. read विवेकः for विवेकिनः.

तद्यथा—१ परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति। २ क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति। ३ साक्षात्कृतं निरोधसमाधिना हानम्।४ भावितो विवेकख्यातिरूपो हानोपाय इति।एषा चतुष्टयी कार्या विमुक्तिः प्रज्ञायाः। चित्तविमुक्तिस्तु त्रयी। ५ चरिताधिकारा बुद्धिः। ५ ६ गुणा गिरिशिखरतटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति। न चैषां प्रविलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति। ७ एतस्यामवस्थायां गुणसंबन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इति। एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन्पुरुषः कुशल इत्याख्यायते। प्रतिप्रसवेऽपि चित्तस्य मुक्तः १० कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

ता एव सप्तप्रकाराः प्रान्तभूमिप्रज्ञा यस्येति विग्रहः। तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयम्। यावत्किल प्राधानिकं तत्सर्वं परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेवेति हेयम्। तन्मया ज्ञातम्। प्रान्ततां दर्शयति—**नास्य पुनः** किंचिदपरमत्र परिज्ञेयमस्ति। द्वितीयामाह—१५ **क्षीणा इति**। प्रान्ततामाह न पुनरिति। तृतीयामाह—**साक्षात्कृतं** प्रत्यक्षेण निश्चितं मया निरोधसमाधिना **हानम्**। न पुनरस्याः परं निश्चेतव्यमस्तीति शेषः। चतुर्थीमाह **भावितो** निष्पादितो **विवेकख्यातिरूपो हानोपायः**। अत्रापि न परं भावनीयमस्तीति शेषः। **एषा चतुष्टयी कार्या विमुक्तिः** समाप्तिः। कार्येति प्रयत्नसाध्यता दर्शिता। क्वचि- २० त्पाठः **कार्यविमुक्तिरिति**। कार्याणामेव विमुक्तिः प्रज्ञाया इत्यर्थः। प्रयत्ननिष्पाद्यानुनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह—**चित्तविमुक्तिस्तु त्रयी**। प्रथमामाह—**चरिताधिकारा बुद्धिः**। कृतभोगापवर्गकार्येत्यर्थः। द्वितीयामाह—**गुणा इति**। प्रान्ततामाह न **चैषामिति**। तृतीयामाह—**एतस्यामवस्थायामिति**। एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त २५ इत्युच्यते चरमदेहत्वादित्याह [illegible]। अनौपचारिकं मुक्तमाह—**प्रतिप्रसवे** प्रधानलयेऽपि **चित्तस्य** मुक्तः **कुशल इत्येव भवति गुणातीतत्वादिति** ॥ २७ ॥

4–5. D. E. read बुद्धिगुणाः for बुद्धिः। गुणाः.
17. P. reads अस्मात् for अस्याः.
18. P. reads पुनरस्याः for अस्याः.
26. N. om. अपि.

सिद्धा भवति विवेकख्यातिर्हानोपाय इति । न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते--

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥ २८ ॥**

५ योगाङ्गान्यष्टावभिधायिष्यमाणानि । तेषामनुष्ठानात्पञ्चपर्वणो विपर्ययस्याशुद्धिरूपस्य क्षयो नाशः । तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिः । यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते । यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्धते । सा खल्वेषा विवृद्धिः प्रकर्षमनुभवत्या विवेक-
१० ख्यातेः । आ गुणपुरुषस्वरूपविज्ञानादित्यर्थः । योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणम् । यथा परशुश्छेद्यस्य । विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य । नान्यथा कारणम् । कति चैतानि कारणानि शास्त्रे भवन्ति । नवैवेत्याह । तद्यथा--

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
१५ वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥ इति ।

---

तदेवं चतुरो व्यूहानुक्त्वा तन्मध्यपातितस्य हानोपायस्य विवेकख्यातेर्गोबोहनादिवत्प्रागसिद्धेरसिद्धस्य चोपायत्वाभावात्सिद्ध्युपायान्व क्तुमारभत इत्याह--सिद्धेति । तत्राभिधास्यमानानां साधनानां येन प्रकारेण विवेकख्यात्युपायत्वं तद्दर्शयति सूत्रेण--**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः** ।
२० योगाङ्गानि हि यथायोगं दृष्टादृष्टद्वारेणाशुद्धिं क्षिण्वन्ति । पञ्चपर्वणो विपर्ययस्येत्युपलक्षणं पुण्यापुण्ययोरपि जात्यायुर्भोगहेतुत्वेनाशुद्धिरूपत्वादिति । शेषं सुगमम् । नानाविधस्य कारणभावस्य दर्शनाद्योगाङ्गानुष्ठानस्य कीदृशं कारणत्वमित्यत आह--**योगाङ्गानुष्ठानमिति** । अशुद्ध्या वियोजयति बुद्धिसत्त्वमित्यशुद्धेर्वियोगकारणम् । दृष्टान्तमाह--**यथा परशुरिति** । परशुश्छेद्यं वृक्षं
२५ मूलेन वियोजयति । अशुध्या वियोजयद्बुद्धिसत्त्वं विवेकख्यातिं प्रापयति यथा धर्मः सुखम् । तथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्याह--**विवेकख्यातेस्त्वति** । नान्यथेति प्रतिषेधश्रवणात्पृच्छति--**कति चैतानीति** । उत्तरम्--**नवैवेति** । तानि दर्शयति कारिकया--**तद्यथा--उत्पत्तीति** ।

---

3. A. reads अविशुद्धि for अशुद्धि.
7. E. reads अशुद्धेः for अशुद्धिः.
10. B. F. read अयं सवितर्कः संप्रज्ञातः समाधिः । स्थूलान्तर्गतत्यागिविवेकयुक्तत्वात् after विज्ञानात् .

**तत्रोत्पत्तिकारणं मनो भवति ज्ञानस्य। स्थितिकारणं मनसः पुरुषार्थता, शरीरस्येवाहार इति । अभिव्यक्तिकारणं यथा रूपस्यालोकस्तथा रूपज्ञानम् । विकारकारणं मनसो विषयान्तरम् । यथाग्निः पाक्यस्य । प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य । प्राप्तिकारणं योगाङ्गानु-**
५ **ष्ठानं विवेकख्यातेः । वियोगकारणं तदेवाशुद्धेः । अन्यत्वकारणं यथा**

---

अत्रोदाहरणान्याह—**तत्रोत्पत्तिकारणमिति** । मनो हि विज्ञानमव्यपदेश्यावस्थातोपनीय वर्तमानावस्थामापादयदुत्पत्तिकारणं विज्ञानस्य । **स्थितिकारणं मनसः पुरुषार्थता** । अस्मिताया उत्पन्नं मनस्तावदवतिष्ठते न यावद्द्विविधं पुरुषार्थमभिनिर्वर्तयाति । अथ निर्वर्तितपुरुषार्थद्वयं स्थितिमपैति । तस्मा-
१० त्स्वकारणादुत्पन्नस्य मनसोऽनागतपुरुषार्थता स्थितिकारणम् । दृष्टान्तमाह—**शरीरस्येवेति** । प्रत्यक्षज्ञाननिमित्तमिन्द्रियद्वारा वा स्वतो वा विषयस्य संस्क्रियाभिव्यक्तिस्तस्याः **कारणं यथा रूपस्यालोकः । विकारकारणं मनसो विषयान्तरम्** । यथा हि मृकण्डोः समाहितमनसो वल्लकीविपञ्च्यमानपञ्चमस्वरश्रवणसमनन्तरमुन्मीलिताक्षस्य स्वरूपलावण्ययौवनसंपन्नामप्सरसं प्रम्लोचा-
१५ मीक्षमाणस्य समाधिमपहाय तस्यां सक्तं मनो बभूवेति । अत्रैव निदर्शनमाह—**यथाग्निः पाक्यस्य** तण्डुलादेः काठिन्यावयवसंनिवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य कारणम् । सत एव विषयस्य **प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्येति** । ज्ञायत इति ज्ञानम् । अग्निश्चासौ ज्ञानं चेत्यग्निज्ञानं तस्य । एतदुक्तं भवति—वर्तमानस्यैवाग्नेर्धूमस्य प्रत्ययकारणतया कारणमिति । औत्सर्गि-
२० की निरपेक्षाणां कारणानां कार्यक्रिया प्राप्तिः । तस्याः कुतश्चिदपवादोऽप्राप्तिः । यथा निम्नोपसर्पणस्वभावानामपां प्रतिबन्धः सेतुना । तथेहापि बुद्धिसत्त्वस्य सुखप्रकाशशीलस्य स्वाभाविकी सुखविवेकख्यातिजनकता प्राप्तिः । सा कुतश्चिदधर्मात्तमसो वा प्रतिबन्धान्न भवति । धर्माद्योगाङ्गानुष्ठानाद्वा तदपनयं तत्प्रतिबद्धवृत्ति स्वभावत एव तज्जनकतया तत्प्राप्नोति । यथा वक्ष्यति - निमित्तमप्रयो-
२५ जकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ( यो. सू. ४।३ ) इति ।

तदेवं विवेकख्यातिलक्षणकार्यापेक्षया प्राप्तिकारणमुक्तम् । अवान्तरकार्यापेक्षया तु तदेव वियोगकारणमित्याह—**वियोगकारणमिति** । अन्यत्वकारणमाह—**अन्यत्वकारणं यथा सुवर्णकारः सुवर्णस्य** । कटककुण्डलकेयूरादि-

---

1. B. F. read ज्ञानम् for ज्ञानस्य.
7. N. reads अवस्थाम् for अवस्थानः.
9. L. O. read विविधम् for द्विविधम्.
11. N. reads निमित्तितम् for निमित्तम्.
20. L. N. P. om. क्रिया.
24. L. reads वृत्तिः for वृत्ति.

**सुवर्णस्य सुवर्णकारः । एवमेकस्य स्त्रीप्रत्ययस्याविद्या मूढत्वे द्वेषो दुःखत्वे रागः सुखत्वे तत्त्वज्ञानं माध्यस्थ्ये । धृतिकारणं शरीरमिन्द्रियाणाम् । तानि च तस्य । महाभूतानि शरीराणाम् । तानि च परस्परं सर्वेषाम् । तैर्यग्यौनमानुषदैवतानि च परस्परार्थत्वादिति । एवं नव कार-**

५ भ्यो भिन्नाभिन्नस्य भेदविवक्षया कटकादिभिन्नस्याभेदविवक्षया कटकाद्यभिन्नस्य सुवर्णस्य कुण्डलादन्यत्वम् । तथा च कटककारी सुवर्णकारः कुण्डलादभिन्नात्सुवर्णादन्यत्कुर्वन्नन्यत्वकारणम् । अग्निरपि पाक्यस्यान्यत्वकारणं यद्यपि तथापि धर्मिणो धर्मयोः पुलाकत्वतण्डुलत्वयोर्भेदाविवक्षया धर्मयोरुपजनापायेऽपि धर्म्यनुवर्तत इति न तस्मादन्यत्वं शक्यं वक्तुमिति ... न्यत्वकारणमिति व्याख्येयम् । सुवर्णकार इत्यस्यासंगतेः । नाभिमन्यत्वकारणमुपन्यस्याध्यात्मिकमुदाहरति—**एवमेकस्येति** । अविद्या कामशास्त्रीयं कन्येत्यादिज्ञानम् । तन्मोहयोगात्स एव स्त्रीप्रत्ययो मूढो विषण्णो भवति चैत्रस्य, मैत्रस्य पुण्यवतो बत कलत्रमेतन्न तु मम भाग्यहीनस्येति । एवं सपत्नीजनस्य तस्यां द्वेषः स्त्रीप्रत्ययस्य दुःखत्वे ।
१५ एवं मैत्रस्य तस्या भर्तू रागस्तस्यैव स्त्रीप्रत्ययस्य सुखत्वे । तत्त्वज्ञानं त्वङ्मांसमेदोऽस्थिमज्जासमूहः स्त्र्याकारः श्वानर्वाणादिभिरशुचिरिति विवेकिनां माध्यस्थ्ये वैराग्ये कारणमिति । धृतिकारणं शरीरमिन्द्रियाणां विधारकम् । इन्द्रियाणि च शरीरस्य । सामान्या करणवृत्तिर्हि प्राणाद्या वायवः पञ्च । तदभावे शरीरपातात् । एवं मांसादिकार्याकारणानामपि परस्परं विधार्यविधारकत्वम् । एवं महाभूतानि पृथि-
२० व्यादीनि मनुष्यपशुपक्ष्यादिशरीराणाम् । तानि च परस्परम् । पृथिव्या हि गन्धरसरूपस्पर्शशब्दगुणायां पञ्च महाभूतानि परस्परं विधार्यविधारकभावेनावस्थितान्येवं चत्वारि तत्रापि त्रीणि द्वे च मातरिश्वनीति । तैर्यग्यौनमानुषदैवतान्यपि च विधार्यविधारकभावेनावस्थितानि । तन्वाधाराधेयभावरहितानां कुतस्तत्त्वमित्यत आह—**परस्परार्थत्वादिति** । मनुष्यशरीरं

1. B. F. read स्त्रिप्रत्ययस्य for स्त्रीप्रत्ययस्य.
2. D. reads तत् for तस्य.
2. D. E. read भूतानि for धानि.
2. D. E. read शरीर for शरीरम् .
3. B. F. read तेषाम् for तानि च तस्य.
3. C. om. शरीराणाम् । तानि.
4. C. om. तैर्यग्यौन° °र्थत्वादिति.
4. E. G. K. read यौन for योन.
5. P. om. अभेदविवक्षया कटकाद्यभिन्नस्य.
18. L. reads वृत्तिर्हि for वृत्तिर्हि.
19. P. reads इव for अपि after °कारणानाम्.

प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायो ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहाकायिका अजरामरा इति । ते भूतेन्द्रियवशिनो द्विगुणद्विगुणोत्तरायुषः ।

द्वितीये तपसि लोके त्रिविधो देवनिकायः—आभास्वरा महा-
५ भास्वराः सत्यमहाभास्वरा इति । ते भूतेन्द्रियप्रकृतिवशिनो द्विगुण-द्विगुणोत्तरायुषः सर्वे ध्यानाहाराः कल्पसहस्रायुष ऊर्ध्वरेतस ऊर्ध्वम-प्रतिहतज्ञाना अधरभूमिष्वनावृतज्ञानविषयाः ।

तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अच्युताः शुद्ध-निवासाः सत्याभाः संज्ञासंज्ञिनश्चेति । ते चाकृतभवनन्यासाः स्वप्र-
१० तिष्ठा उपर्युपरि स्थिताः प्रधानवशिनो यावत्सर्गायुषः ।

---

जनलोकमाह—प्रथम इत्युक्तक्रमेण । भूतेन्द्रियवशिन इति । भूतानि पृथिव्यादीनीन्द्रियाणि श्रोत्रादीनि यथा नियोक्तुमिच्छन्ति तथैव नियुज्यन्ते ।

उक्तक्रमापेक्षया द्वितीयं ब्रह्मणस्तपोलोकमाह—द्वितीय इति । भूतेन्द्रियप्रकृतिवशिन इति । प्रकृतिः पञ्च तन्मात्राणि तद्वशिनः । तदिच्छातो हि
५ तन्मात्राण्येव कायाकारेण परिणमन्त इत्यागमिनः । द्विगुणेति । आभास्वरेभ्यो द्विगुणायुषो महाभास्वराः । तेभ्योपि द्विगुणायुषः सत्यमहाभास्वरा इत्यर्थः । ऊर्ध्व-मित्यूर्ध्वं सत्यलोके प्रातिहतज्ञाना अवीचेस्तु प्रभृत्या तपोलोकं सूक्ष्मव्यवहि-ताद्वि सर्वं विजानन्तीत्यर्थः ।

तृतीयं ब्रह्मणः सत्यलोकमाह—तृतीय इति । अकृतो भवनस्य
१० गृहस्य न्यासो यैस्ते तथोक्ताः । आधाराभावादेव स्वप्रतिष्ठाः । स्वेषु शरीरेषु प्रतिष्ठा येषां ते तथोक्ताः । प्रधानवशिनः । तदिच्छातः सत्त्वरजस्तमांसि
१२ प्रवर्तन्ते यावत्सर्गायुषः । तथा च श्रूयते—

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

( कू. पु. पू. स. १२।२६९ ) इति ।
१५

---

2. B. F. read वितर्कध्यानसुखा ब्रह्मकायिका विचारध्यानसुखाः ब्रह्म-महाकायिका आनन्दध्यानसुखा अजरामरा अस्मिताध्यानसुखाः for ब्रह्मकायिका ब्रह्ममहाकायिका अजरामराः.

4–5. B. reads विश्वध्यानरता महाभास्वरास्तैजसध्यानरताः सत्यमहाभास्वराः प्राज्ञध्यानसुखाः for महाभास्वराः सत्यमहाभास्वराः.

6. B. C. F. G. K. om. कल्पसहस्रायुषः.

8–9. B. C. D. E. F. K. om. अच्युताः शुद्धनिवासाः सत्याभाः संज्ञा-संज्ञिनश्चेति.

9. C. reads सु for स्व.

12. N. P. read नियुञ्जते for नियुज्यन्ते.

16. N. P. om. भासुर for भास्वर.

तत्राच्युताः सवितर्कध्यानसुखाः, शुद्धनिवासाः सविचारध्यानसुखाः, सत्याभा आनन्दमात्रध्यानसुखाः संज्ञासंज्ञिनश्चास्मितामात्रध्यानसुखाः। तेऽपि त्रैलोक्यमध्ये प्रतितिष्ठन्ते। त एते सप्त लोकाः सर्व एव ब्रह्मलोकाः। विदेहप्रकृतिलयास्तु मोक्षपदे वर्तन्त इति न लोकमध्ये न्यस्ता इति। एतद्योगिना साक्षात्करणीयं सूर्यद्वारे संयमं कृत्वा ततोऽन्यत्रापि। एवं तावदभ्यसेद्यावदिदं सर्वं दृष्टमिति ॥ २६ ॥

## चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

---

तदेवं चतुर्णां देवनिकायानां साधारणधर्मानुक्त्वा नामविशेषग्रहणेन धर्मविशेषानाह—तत्रेति। अच्युता नाम देवाः स्थूलविषयध्यानसुखाः। तेन ते तृप्यन्ति। शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखाः। तेन ते तृप्यन्ति। सत्याभा नाम देवा इन्द्रियविषयध्यानसुखाः। तेन ते तृप्यन्ति। संज्ञासंज्ञिनो नाम देवा अस्मितामात्रध्यानसुखाः। तेन ते तृप्यन्ति। त एते सर्वे संप्रज्ञातसमाधिमुपासते। अथासंप्रज्ञातसमाधिनिष्ठा विदेहप्रकृतिलयाः कस्मान्न लोकमध्ये न्यस्यन्त इत्यत आह—**विदेहप्रकृतिलयास्त्विति**। बुद्धिवृत्तिमन्तो हि दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्तन्ते। न चैवं विदेहप्रकृतिलयाः सत्यपि साधिकारत्व इत्यर्थः। तदेतद्वासत्यलोकमा चावीचेर्योगिना साक्षात्करणीयं सूर्यद्वारे सुषुम्णायां नाड्याम्। न चैतावतापि तत्साक्षात्कारो भवतीत्यत आह—**एवं तावदन्यत्रापि** सुषुम्णाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु **यावदिदं सर्वं** जगद्दृष्टमिति। बुद्धिसत्त्वं हि स्वभावत एव विश्वप्रकाशनसमर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तदेव प्रकाशयति। सूर्यद्वारसंयमोद्घाटितं तु भुवनं प्रकाशयति। न चैवमन्यत्रापि प्रसङ्गः। तत्संयमस्य तावन्मात्रोद्घाटनसामर्थ्यादिति सर्वमवदातम् ॥ २६ ॥

चन्द्रे ताराव्यूहज्ञानम्। ध्रुवे तद्गतिज्ञानम्। नाभिचक्रे कायव्यूह-

---

3. G. reads सत्य for सप्त.
4. B. C. D. E. L. read सप्तलोकाः for एव ब्रह्मलोकाः.
9. O. reads ज्ञान for ध्यान.
14. N. P. read उप before न्यस्यन्ते.
17. O. reads द्वारेण for द्वारे.
18. N. om. उपदिष्ट.

चन्द्रे संयमं कृत्वा ताराणां व्यूहं विजानीयात् ॥ २७ ॥

## ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥

ततो ध्रुवे संयमं कृत्वा ताराणां गतिं विजानीयात् । ऊर्ध्वविमानेषु कृतसंयमस्तानि विजानीयात् ॥ २८ ॥

## नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥

नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् । वातपित्तश्लेष्माणस्त्रयो दोषाः । धातवः सप्त त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि । पूर्वं पूर्वमेषां बाह्यमित्येष विन्यासः ॥ २९ ॥

## कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥

जिह्वाया अधस्तात्तन्तुः । ततोऽधस्तात्कण्ठः । ततोऽधस्तात्कूपः । तत्र संयमात्क्षुत्पिपासे न बाधेते ॥ ३० ॥

## कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥

कूपादध उरसि कूर्माकारा नाडी । तस्यां कृतसंयमः स्थिरपदं लभते । यथा सर्पो गोधा चेति ॥ ३१ ॥

## मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥

शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिः । तत्र संयमं कृत्वा सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम् ॥ ३२ ॥

---

ज्ञानम् । कण्ठकूपे क्षुत्पिपासानिवृत्तिः । कूर्मनाड्यां स्थैर्यम् । तत्र तत्र जिज्ञासायां योगिनस्तत्र तत्र संयमः । एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः स्थैर्यहेतुश्च सूत्रपदैरुपदिष्टो भाष्येण च निगदव्याख्यातेन व्याख्यात इति न व्याख्यातः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

मूर्धज्योतिषि सिद्धदर्शनम् । मूर्धशब्देन सुषुम्ना नाडी लक्ष्यते तत्र संयम इति ॥ ३२ ॥

---

2. D. E. read तारा for तत्.
7. C. reads वसा after त्वक्, and om. अस्थि.
7. D. E. read मेदः after मज्जा.
9. A. reads वि before निवृत्तिः.
16. B. C. F. read प्रभास्वरत्वात् for प्रभास्वरम्.
20. N. P. read सूत्रैः for सूत्रपदैः.

**प्रातिभाद्वा सर्वम् ॥ ३३ ॥**

प्रातिभं नाम तारकम्। तद्विवेकजस्य ज्ञानस्य पूर्वरूपम्। यथोदये प्रभा भास्करस्य। तेन वा सर्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति ॥ ३३ ॥

५ **हृदये चित्तसंवित् ॥ ३४**

यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानं तस्मिन्संयमाच्चित्तसंवित् ॥ ३४ ॥

**सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३५ ॥**

१० बुद्धिसत्त्वं प्रख्याशीलं समानसत्त्वोपनिबन्धने रजस्तमसी वशी-

---

**प्रातिभाद्वा सर्वम्**। प्रतिभोहः। तद्भवं प्रातिभम्। प्रसंख्यानहेतुसंयमवतो हि तत्प्रकर्षे प्रसंख्यानोदयपूर्वलिङ्गं यदूहजं ज्ञानं तेन सर्वं विजानाति योगी। तच्च प्रसंख्यानसंनिधापनेन संसारात्तारयतीति तारकम् ॥ ३३ ॥

**हृदये चित्तसंवित्**। हृदयपदं व्याचष्टे—**यदिदमस्मिन्ब्रह्मपुरे**। बृहत्त्वा-
१५ दात्मा ब्रह्म। तस्य पुरं निलयः। तद्धि तत्र विजानाति स्वामिति। दहरं गर्तं तदेव पुण्डरीकमधोमुखं वेश्म मनसः। चित्तसंवेदनत्वे हेतुमाह—**तत्र विज्ञानं** तत्र संयमाच्चित्तं विजानाति स्ववृत्तिविशिष्टम् ॥ ३४ ॥

**सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम्**। यत्र प्रकाशरूपस्यातिस्वच्छस्य नितान्ताभिभूतरज-
२० स्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्यात्यन्तिकश्चैतन्याद्संकरस्तत्र कैव कथा रजस्तमसोर्जडस्वभावयोरित्याशयवान्सूत्रकारः सत्त्वपुरुषयोरित्युवाच। इममेवाभिप्रायं गृहीत्वा भाष्यकारोऽप्याह—**बुद्धिसत्त्वं प्रख्याशीलमिति**। न केवलं प्रख्याशीलमात्रम्। अपि तु विवेकख्यातिरूपेण परिणतम्। अतो नितान्तशुद्धप्रकाशतयात्यन्तसारूप्यं चैतन्येनेति संकर इत्यत आह—**समा-**
२५ **नेति**। सत्त्वेनोपनिबन्धनमविनाभावः संबन्धः। समानं सत्त्वोपनिबन्धनं ययो

---

1. A. reads प्रातिभं वा सर्वं सर्वनिमित्तानपेक्षम् for प्रातिभाद्वा सर्वम्.
2. B. F. read जन्तुन्याति तारकमिव ज्योतिर्हृदयेषु भाति after तारकम्.
9. B. F. G. L. read परार्थत्वात्; C. reads परार्थ for परार्थात्.
12. L. N. read उदयात् for उदय.
15. N. reads दहरान्तर्गतम् for दहरं गर्तम्.
19. L. reads सत्त्व before प्रकाश.
20. P. reads आत्मन्तिक for आत्यन्तिकः.

कृत्य सत्त्वपुरुषान्यताप्रत्ययेन परिणतम् । तस्माच्च सत्त्वात्परिणामिनो-त्यन्तविधर्मा विशुद्धोन्यश्चितिमात्ररूपः पुरुषः । तयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः पुरुषस्य दर्शितविषयत्वात् । स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद्दृश्यः ।

५ यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोन्यः पौरुषेयः प्रत्ययस्तत्र संयमात्पुरुषविषया प्रज्ञा जायते । न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते । पुरुष एव तं प्रत्ययं स्वात्मावलम्बनं पश्यति ।

---

रजस्तमसोस्ते तथोक्ते । वशीकारोभिभवः । असंकरमाह—तस्माच्चेति । च-कारोप्यर्थः । न केवलं रजस्तमोभ्यामित्यर्थः । परिणामिन इति वैधर्म्यमपरिणा-
• मिनः पुरुषादुक्तम् । प्रत्ययाविशेषः शान्तघोरमूढरूपाया बुद्धेश्चैतन्यबिम्बोद्ग्राहेण चैतन्यस्यं शान्ताद्याकाराध्यारोपश्चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पात्कम्पनारोपः । भोगहेतुमाह—दर्शितविषयत्वादिति । असकृद्व्याख्यातम् । ननु बुद्धिसत्त्वमस्तु पुरुषभिन्नम्, भोगस्तु पुंसः कुतो भिषत इत्यत आह—स भोगप्रत्ययो भोगरूपः प्रत्ययः सत्त्वस्यातः परार्थत्वाद्दृश्यो
५ भोग्यः । सत्त्वं हि परार्थम् । संहतत्वात् । तद्धर्मश्च भोग इति सोपि परार्थः । यस्मै च परस्मा असौ तस्य भोक्तुर्भोग्यः । अथ वानुकूलप्रतिकूलवेदनीयस्त सुखदुःखानुभवो भोगः । न चायमात्मानमेवानुकूलयति प्रतिकूलयति वा । स्वात्मनि वृत्तिविरोधात् । अतोनुकूलनीयप्रतिकूलनीयार्थो भोगः । स भोक्तात्मा तस्य दृश्यो भोग्य इति ।

• यस्तु तस्मात्परार्थाद्विशिष्ट इति । परार्थादिति पञ्चम्यन्यपदाध्याहारेण व्याख्याता । स्यादेतत् । पुरुषविषया चेत्प्रज्ञा हन्त भोः पुरुषः प्रज्ञायाः प्रज्ञेय इति प्रज्ञान्तरमेव तत्र तत्रेत्यनवस्थापात इत्यत आह—न च पुरुषप्रत्ययेनेति । अयमभिसंधिः—चित्या जडः प्रकाश्यते । न जडेन चितिः । पुरुषप्रत्ययस्त्वचिदात्मा कथं चिदात्मानं प्रकाशयेत् । चिदात्मा त्वपराधीनप्रकाशो जडं प्रका-
५ शयतीति युक्तम् । बुद्धिसत्त्वात्मनेत्याचिद्रूपताद्रात्म्येन जडत्वमाह । बुद्धिसत्त्वगतपुरुषप्रतिबिम्बालम्बनात्पुरुषालम्बनं न तु पुरुषप्रकाशनात्पुरुषालम्बनम् । बुद्धिसत्त्वमेव तु तेन प्रत्ययेन संक्रान्तपुरुषप्रतिबिम्बं पुरुषच्छायापन्नं चैतन्य-

---

10. L. reads उक्तप्रत्यय for उक्तम् । प्रत्यय-
11. N. reads क्षीन for शान्त-
20. L. reads परार्थत्वात् for परार्थाद् -
20. N. reads स्वार्थ for पद-
24. O. reads, न before कथंचित् -
26. L. reads दुर्पणवन्नालम्बनम् after आलम्बनम् -

तथा ह्युक्तम्–विज्ञातारमरे केन विजानीयात् ( बृ. २।४।१४ ) इति ॥३५॥

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३६ ॥**

प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम् । श्रावणाद्दि-
५ व्यशब्दश्रवणम् । वेदनाद्दिव्यस्पर्शाधिगमः । आदर्शाद्दिव्यरूपसंवित् ।
आस्वादाद्दिव्यरससंवित् । वार्तातो दिव्यगन्धविज्ञानमित्येतानि नित्यं
जायन्ते ॥ ३६ ॥

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥**

ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपसर्गाः । तद्दर्शनप्र-
१० त्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३७ ॥

---

मालम्बत इति पुरुषार्थः । अत्रैव श्रुतिमुदाहरति—तथा ह्युक्तमीश्वरेण विज्ञा-
तारमिति । न केनचिदित्यर्थः ॥ ३५ ॥

स च स्वार्थसंयमो न यावत्प्रधानं स्वकार्यं पुरुषज्ञानमभिनिर्वर्तयति तावत्तस्य
पुरस्तात्पा विभूतीराधत्ते ताः सर्वा दर्शयति—ततः प्रातिभश्रावणवेदनादर्शा-
१५ स्वादवार्ता जायन्ते । तदनेन योगजधर्मानुगृहीतानां मनःश्रोत्रत्वक्चक्षुर्जि-
ह्वाघ्राणानां यथासंख्यं प्रातिभज्ञानदिव्यशब्दाद्यपरोक्षहेतुभावा उक्ताः । श्रोत्रा-
दीनां पञ्चानां दिव्यशब्दाद्युपलम्भकानां तान्त्रिक्यः संज्ञाः श्रावणाद्याः । सुगमं
भाष्यम् ॥ ३६ ॥

कदाचिदात्मविषयसंयमे प्रवृत्तस्तत्प्रभावाद्भूरर्थान्तरसिद्धीरधिगम्य कृतार्थ-
२० मन्यः संयमाद्विरमेदत आह—ते समाधावुपसर्गा व्युत्थाने सिद्धयः ।
व्युत्थितचित्तो हि ताः सिद्धीरभिमन्यते । जन्मदुर्गत इव द्रविणकणिकामपि
द्रविणसंभारम् । योगिना तु समाहितचित्तेनोपनताभ्योऽपि ताभ्यो विरन्तव्यम् ।
अभिसंहिततापत्रयात्यान्तिकोपशमरूपपरमपुरुषार्थः स खल्वयं कथं तत्प्रत्यनी-
कासु सिद्धिषु रज्येतेति सूत्रभाष्ययोरर्थः ॥ ३७ ॥

---

1. B. F. read अथ सविचारः संप्रज्ञातः समाधिः समानसत्त्वोपनिबन्धने स्थूलस्वागादिनि after इति.
2. D. E. read प्रातिभालाभे श्रवण for प्रातिभश्रावण.
4. D. E. read प्रातिभालायात् for प्रातिभात्.
4. D. E. read श्रवणात् for श्रावणात्.
13. N. reads स्वकार्ये for स्वकार्यम्.
22. N. om. अपि ताभ्यः.

## बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥

लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः। तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति। ५ प्रचारसंवेदनं च चित्तस्य समाधिजमेव। कर्मबन्धक्षयात्स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति। निक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति। यथा मधुकरराजानं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुनिविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त इति ॥ ३८ ॥

## १० उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥

समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनम्। तस्य क्रिया पञ्च-

तदेवं ज्ञानरूपमैश्वर्यं पुरुषदर्शनान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्यं संयमफलमाह—बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरा- १५ वेशः। समाधिबलादिति। बन्धकारणविषयसंयमबलात्। प्राधान्यात्समाधिग्रहणम्। प्रचरत्यनेनास्मिन्वेति प्रचारः। चित्तस्य गमागमाध्वानो नाड्यः। तस्मिन्प्रचारे संयमात्संवेदनम्। तस्माच्च बन्धकारणशैथिल्याच्च तेन प्रतिबध्यते। अप्रतिबद्धमप्युन्मार्गेण गच्छन्न स्वशरीरात्प्रत्यूहं निष्क्रामति। न च परशरीरमाविशति।। तस्मात्प्रचारोपि ज्ञातव्यः। इन्द्रियाणि च चित्तानुसारीणि पर- २० शरीरे यथाधिष्ठानं निविशन्त इति ॥ ३८ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च। समस्तेन्द्रियवृत्तिर्जीवनम्। प्राणादिलक्षणा। प्राणाद्यो लक्षणं यस्याः सा तथोक्ता। इन्द्रियाणां वृत्तिर्बाह्याभ्यन्तरी च। बाह्या रूपाद्यालोचनलक्षणा। आभ्यन्तरी तु जीवनम्। स हि प्रयत्नभेदः शरीरोपगृहीतमारुतक्रियाभेदहेतुः सर्वकरण- २५ साधारणः। यथाहुः—

सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च। ( सां. का. २९ )

इति। तैरस्य लक्षणीयत्वादस्य प्रयत्नस्य क्रिया कार्यं पञ्चतयी। प्राण आ

16. P. om. वा after अस्मिन्.
26. P. reads सामान्या for सामान्य.
26. L. reads करणा for करण.

तयी। प्राणो मुखनासिकागतिराहृदयवृत्तिः। समं नयनात्समान आनाभिवृत्तिः। अपनयनादपान आपादतलवृत्तिः। उन्नयनादुदान आशिरोवृत्तिः। व्यापी व्यान इति। एषां प्रधानं प्राणः। उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च प्रायणकाले भवति। तां वशित्वेन
५ प्रतिपद्यते ॥ ३९ ॥

**समानजयाज्ज्वलनम् ॥ ४० ॥**

जितसमानस्तेजस उपध्मानं कृत्वा ज्वलयति ॥ ४० ॥

**श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥**

सर्वश्रोत्राणामाकाशं प्रतिष्ठा सर्वशब्दानां च। यथोक्तम्—

---

१० नासिकाग्राद्रा च हृदयादवस्थितः। अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने सममनुरूपं नयन्समानः। आ हृदयाद्रा च नाभेरस्यावस्थानम्। मूत्रपुरीषगर्भादीनामपनयनहेतुरपानः। आ नाभेरा च पादतलादस्य वृत्तिः। उन्नयनादूर्ध्वं नयनाद्रसादीनामुदानः। आ नासिकाग्राद्रा च शिरसो वृत्तिरस्य। व्यापी व्यानः। एषामुक्तानां प्रधानं प्राणः। तदुत्क्रमे सर्वोत्क्रमश्रुतेः "प्राणमुत्का-
१५ मन्तमनु सर्वे प्राणा उत्क्रामन्ति" (बृ. ४।४।२) इति। तदेवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवधारयति—उदानजयादिति। उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते। उत्क्रान्तिश्चार्चिरादिमार्गेण भवति प्रायणकाले। तस्मात्तामुत्क्रान्तिं वशित्वेन प्रतिपद्यते। प्राणादिसंयमान्तद्विजये भूतजयः। एताः क्रियाः स्थानविजयादिभेदात्प्रतिपत्तव्याः ॥ ३९ ॥
२० **समानजयाज्ज्वलनम्**। तेजसः शारीरस्योपध्मानमुत्तेजनम् ॥ ४० ॥

**स्वार्थसंयमादन्वाचयशिष्टं श्रावणाद्युक्तम्। संप्रति श्रावणाद्यर्थादेव संयमाच्छ्रावणादि भवतीत्याह—श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम्।** संयमविषयं श्रोत्राकाशयोः संबन्धमाधाराधेयभावमाह—**सर्वश्रोत्राणामहंकारिकाणामप्याकाशं कर्णशष्कुलीविवरं प्रतिष्ठा तदायतनं श्रोत्रम्। तदुपकारापकाराभ्यां
२५ श्रोत्रस्योपकारापकारदर्शनात्। शब्दानां च श्रोत्रसहकारिणां पार्थिवादिशब्दै-**

---

4. O. reads प्रयाण for प्रायण.
6. A. reads प्र before ज्वलनम्; D. E. read उज्ज्वलप्रायम् for ज्वलनम्.
7. G. reads ज्वलति for ज्वलयति.
16. K. L. O. P. read अवतारयति for अवधारयति.
19. L. reads विभुत्वम् एव ताः क्रिया for भूतजयः। एताः क्रियाः.
19. N. reads विभुत्वम् उदानजयादिषु for भूतजयः। एताः क्रियाः स्थानविजयादिभेदात्.

**तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवतीति । तच्चैतदाकाशस्य लिङ्गम् ।**

**अनावरणं चोक्तम् । तथाऽमूर्तस्याप्यन्यत्रानावरणदर्शनाद्विभुत्व-**

ग्रहणे कर्तव्ये कर्णशष्कुलीसुषिरवर्ति श्रोत्रं स्वाश्रयनभोगतासाधारणशब्दमपे-
५ क्षते । गन्धादिगुणसहकारिभिर्घ्राणादिभिर्बाह्यपृथिव्यादिवर्तिगन्धाद्यालोचनं
कार्यं दृष्टम् । आहंकारिकमपि घ्राणरसनत्वक्चक्षुःश्रोत्रं भूताधिष्ठानमेव, भूतो-
पकारापकाराभ्यां घ्राणादीनामुपकारापकारदर्शनादित्युक्तम् । तच्चेदं श्रोत्रमाहं-
कारिकमयःप्रतिममयस्कान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेन शब्देना-
कृष्टं स्ववृत्तिपरंपरया वक्तृवक्त्रमागतं शब्दमालोचयति । तथा च दिग्देशवर्ति-
१० शब्दप्रतीतिः प्राणभृन्मात्रस्य नासति बाधके प्रमाणीकृता भविष्यतीति । तथा च
पञ्चशिखस्य वाक्यम्—**तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भव-
तीति ।** तुल्यदेशानि श्रवणानि श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः । सर्वेषां
श्रवणान्याकाशवर्तीनीत्यर्थः । तत्र श्रोत्राधिष्ठानमाकाशं शब्दगुणतन्मात्रोत्पन्नं
शब्दगुणकं येन शब्देन सहकारिणा पार्थिवादीञ्शब्दान्गृह्णाति । तस्मात्सर्वेषा-
१५ मेकजातीया श्रुतिः शब्द इत्यर्थः । तदनेन श्रोत्राधिष्ठानत्वमाकाशस्य शब्दगुणत्वं
च दर्शितमिति । तच्चैकदेशश्रुतित्वमाकाशस्य लिङ्गम् । सा ह्येकजातीया शब्द-
व्यञ्जिका श्रुतिर्यदाश्रया तदेवाकाशशब्दवाच्यम् । न हीदृशीं श्रुतिमन्तरेण शब्द-
व्यक्तिः । न चेदृशी श्रुतिः पृथिव्यादिगुणः । तस्य स्वात्मनि व्यङ्ग्यव्यञ्जकत्वानु-

२० अनावरणं चाकाशलिङ्गम् । यद्याकाशं नाभविष्यदन्योन्यसं
मूर्तानि न सूचीभिरभ्यभेत्स्यन्त । ततश्च सर्वमेव सर्वमावृतं स्यात् । न च मूर्तद्र-
व्याभावमात्रमेवानावरणम् । अस्याभावस्य भावाश्रितत्वेन तदभावेऽभावात् । न च
चितिशक्तिस्तदाश्रया भवितुमर्हति । अपरिणामितयावच्छेदकत्वाभावात् । न च दि-
क्कालादयः पृथिव्यादिद्रव्यव्यतिरिक्ताः सन्ति । तस्मात्तादृशः परिणतिभेदो नभस
२५ एवेति सर्वमवदातम् । अनावरणं चाकाशलिङ्गं सिद्धं यत्र यत्रानावरणं तत्र
तत्र सर्वत्राकाशमिति सर्वगतत्वमप्याकाशस्य सिद्धमित्याह—**तथाऽमूर्तस्येति ।**

1. D. E. om. देश after एक.
3. E. om. अपि before श्रवस्थ. G. K. om. शब्दस्थ.
4. N. O. P. read नद्यं नभः स्वाश्रयगत for गतिश्चार्यं स्वाश्रयनभोगत.
5. O. P. read बाह्य for बाह्य.
13. N. reads शब्दगुणम् for शब्दगुण.
15. O. reads आकाश for आकाशस्य शब्द.
17. L. reads ईदृशी for ईदृशीम्.
22. O. reads तन्मात्रस्य after अभावात्.
24. N. O. P. read तन्मात्रस्य च for तस्मात्.
26. N. reads असिद्धम् for आकाशस्य सिद्धम्.

अपि प्रख्यातमाकाशस्य। शब्दग्रहणनिमित्तं श्रोत्रम् । बधिराबधिरयोरेकः शब्दं गृह्णात्यपरो न गृह्णातीति । तस्माच्छ्रोत्रमेव शब्दविषयम् । श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्तते ॥ ४१ ॥

५ **कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४२ ॥**

यत्र कायस्तत्राकाशम्।तस्यावकाशदानात्। कायस्य तेन संबन्धः प्राप्तिः। तत्र कृतसंयमो जित्वा तत्संबन्धं लघुषु वा तूलादिष्वापरमाणु समापत्तिं लब्ध्वा जितसंबन्धो लघुर्भवति । लघुत्वाच्च जले १० पादाभ्यां विहरति। ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति। ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४२ ॥

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥**

शरीराद्बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा ।

---

१५ श्रोत्रसद्भावे प्रमाणमाह—शब्दग्रहणेति । क्रिया हि करणसाध्या दृष्टा । यथा छिदादिर्वास्यादिसाध्या।तदिह शब्दग्रहणक्रिययापि करणसाध्यया भावितव्यम्। यच्च करणं तच्च श्रोत्रमिति । अथास्याश्चक्षुरादय एव कस्मात्करणं न भवन्तीत्यत आह—बधिराबधिरयोरिति । अन्वयव्यतिरेकाभ्यामवधारणम् । उपलक्षणं चैतत्।त्वग्वातयोश्चक्षुस्तेजसो रसनोदकयोर्नासिकापृथिव्योः संबन्धसंयमा- २० द्दिव्यत्वगाद्यप्यूहनीयम् ॥ ४१ ॥

कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्। कायाकाशसंबन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात्समापत्तिं चेतसस्तत्तस्तदनतां लब्ध्वेति । सिद्धिक्रममाह—जल इति ॥ ४२ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुमाह—बहिरकल्पि- २५ ता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः। विदेहामाह—शरीरादिति।

---

1. D. reads प्रख्यातमम् for प्रख्यातम् .
1. C. D. E. G. K. read अनुमितम् for निमित्तम्.
8–9. C. D. read परमाणुषु ; K. reads परमाणुभ्यः for परमाणु.
12. A. reads उपकल्पिता for अकल्पिता.
14. C. D. E. read महा before विदेहा.
24. K. L. read च after हेतुम्.

सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते । या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता । तत्र कल्पितया साधयन्त्यकल्पितां महाविदेहामिति यया परशरीराण्याविशन्ति योगिनः । ततश्च धारणातः प्रकाशात्मनो बुद्धि-
५ सत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूत-
जयः ॥ ४४ ॥

तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाकारादिभिर्धर्मैः स्थूल-

---

१० अकल्पिताया महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह—सा यद्वीति । वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन । महाविदेहामाह—या त्विति । उपायोपेयत्वे कल्पिताकल्पितयोराह—तत्रेति । किं परशरीरावेशमात्रमितो नेत्याह—ततश्चेति । ततो धारणातो महाविदेहाया मनःप्रवृत्तेः सिद्धेः । क्लेशश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः । तदेतद्रजस्तमोमूलं विगलितरज-
१५ स्तमसः सत्त्वमात्राद्विवेकख्यातिमात्रसमुत्पादात् । तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वमावृणोति । तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४३ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः । स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि । तेषु संयमान-
२० ज्जयः । स्थूलमाह—तत्रेति । पार्थिवाः पाथसीयास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासंभवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादयः । एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः । एतेषां पञ्च पृथिव्याम् । गन्धवर्जं चत्वारोऽप्सु । गन्धरसवर्जं त्रयस्तेजसि । गन्धरसरूपवर्जं द्वौ नभस्वति । शब्द एवाकाशे । त
२५ एत ईदृशा विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे । तत्र पार्थिवास्तावद्धर्माः—

1. D. E. L. read अवृत्ति for वृत्ति.
9. B. F. read पृथिव्यादयः शब्दादीनाम् for पार्थिवाद्याः शब्दादयः.
10. N. reads उपायं तत्प्रदर्शनाय च for य उपायस्तत्प्रदर्शनाय.
25. K. L. read अपि after तत्र.

**आम्रवणं ब्राह्मणसंघ इति ।**

**स पुनर्द्विविधो युतसिद्धावयवोऽयुतसिद्धावयवश्च । युतसिद्धावयवः समूहो वनं संघ इति । अयुतसिद्धावयवः संघातः शरीरं वृक्षः परमाणुरिति । अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः । एतत्स्वरूपमित्युक्तम् ।**

५ **अथ किमेषां सूक्ष्मरूपम् । तन्मात्रं भूतकारणं, तस्यैकोवयवः परमाणुः सामान्यविशेषात्माऽयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वतन्मात्राण्येतत्तृतीयम् ।**

**अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः ।**

१०

गर्गाणां गौरिति । अभेदविवक्षितमाह—**आम्रवणं ब्राह्मणसंघ इति** । आम्राश्च ते वनं चेति समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः ।

विधान्तरमाह—**स पुनर्द्विविधः । युतसिद्धावयवः समूहः** । युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति । सान्तराला हि तदवयवा वृक्षाश्च गावश्च । अयुतसिद्धावयवश्च समूहो वृक्षो गौः परमाणुरिति । निरन्तरा हि तदवयवाः सामान्यविशेषा वा साक्षाद्यो वेति । तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति—**अयुतसिद्धेति** । तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति—**एतत्स्वरूपमित्युक्तमिति** ।

१५

तृतीयं रूपं विवक्षुः पृच्छति—**अथेति** । उत्तरमाह—**तन्मात्रमिति** । तस्यैकोवयवः परिमाणभेदः परमाणुः, सामान्यं मूर्तिः, शब्दादयो विशेषास्तदात्मा, अयुतसिद्धा निरन्तरा येवयवाः सामान्यविशेषास्तभेदेष्वनुगतः समुदायः । यथा च परमाणुः सूक्ष्मं रूपमेवं सर्वतन्मात्राणि सूक्ष्मं रूपमिति । उपसंहरति—**एतदिति** ।

२०

अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः । अत एवान्वयशब्देनोक्ताः ।

२५

4. C. om. मद् after अवयव.
5. B. F. read परमाणु before स्वरूपम्.
6. G. reads तन्मात्रसूक्ष्मकारणम् for तन्मात्रं भूतकारणम्.
7. O. reads भेदावयव for अवयवभेद.
15. P. om. च after वृक्षाः.
17. N. P. read द्विविधम् for द्रव्यम्.
20. N. O. P. read परिणाम for परिमाण.
20. N. reads तद्वात्मानः for तदात्मा.

मथैषां पञ्चमं रूपमर्थवत्त्वम्। भोगापवर्गार्थता गुणेष्वेवान्वयिनी, गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत्। तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति। तत्र पञ्च भूतस्वरूपाणि जित्वा भूतजयी भवति। तज्जयाद्वत्सानुसारिण्य इव गावोस्य संकल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

**ततोणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ॥ ४५ ॥**

तत्राणिमा भवत्यणुः। लघिमा लघुर्भवति। महिमा महान्भवति। प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम्। प्राकाम्यमिच्छानभिघातः। भूमावुन्मज्जति निमज्जति यथोदके। वशित्वं भूतभौतिकेषु वशी भवत्यवश्यश्चान्येषाम्। ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे।

अथैषां पञ्चमं रूपमर्थवत्त्वं विवृणोति—**भोगेति**। नन्वेवमपि सन्तु गुणा अर्थवन्तः। तत्कार्याणां तु कुतोर्थवत्त्वमित्यत आह—**गुणा इति**। भौतिका गोघटादयः। तदेवं संयमविषयमुक्त्वा संयमं तत्फलं चाह—**सोष्विति**। भूतप्रकृतयो भूतस्वभावाः ॥ ४४ ॥

संकल्पानुविधाने भूतानां किं योगिनः सिध्यतीत्यत आह—**ततोणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च**। स्थूलसंयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह—**तत्राणिमा** महानपि भवत्यणुः। **लघिमा** महानपि लघुर्भूत्वेषीकतूल इवाकाशे विहरति। **महिमा**ल्पोपि नागनगगगनपरिमाणो भवति। **प्राप्तिः** सर्वे भावाः संनिहिता भवन्ति योगिनः। तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूपसंयमविजयात्सिद्धिमाह—**प्राकाम्यमिच्छानभिघातः**। नास्य रूपं भूतस्वरूपैर्मूर्त्यादिभिर्रुध्यते। भूमावुन्मज्जति निमज्जति च यथोदके। सूक्ष्मविषयसंयमजयात्सिद्धिमाह—**वशित्वम्**। भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रो भवति। तेषां त्ववश्यस्तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्यवशीकारः। तेन यानि यथावस्थापयति तानि तथावतिष्ठन्त इत्यर्थः। अन्वयविषयसंयमजयात्सिद्धिमाह—**ईशितृत्वम्**। तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन्यः प्रभव उत्पादो यश्चाप्ययो विनाशो

1. D. reads अपि for एव.
1. G. reads अन्वयिनः for एवान्वयिनी.
3. D. E. read संयमः for संयमात्.
3. C. om. तस्य रूपस्य.
9. B. F. read गरिमा गरीयान्भवति after महान्भवति.
17. N. reads संयमात् for संयमजयात्.
24. N. reads च यदयः; O. reads त्वयत्राः; for त्ववश्यः.

यत्र कामावसायित्वं सत्यसंकल्पता यथा संकल्पस्तथा भूतप्रकृतीनामवस्थानम् । न च शक्तोऽपि पदार्थविपर्यासं करोति । कस्मात् । अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु संकल्पादिति । एतान्यष्टावैश्वर्याणि ।

कायसंपद्वक्ष्यमाणा । तद्धर्मानभिघातश्च पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियां, शिलामप्यनुविशतीति । नापः स्निग्धाः क्लेदयन्ति । नाग्निरुष्णो दहति । न वायुः प्रणामी वहति । अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्यो भवति ॥ ४५ ॥

**रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ॥ ४६ ॥**

१० दर्शनीयः कान्तिमानतिशयबलो वज्रसंहननश्चेति ॥ ४६ ॥

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥**

---

यश्च व्यूहो यथावद्व्यवस्थापनं तेषामीष्टे । अर्थवत्त्वसंयमात्सिद्धिमाह—**यत्र कामावसायित्वं सत्यसंकल्पता** । विजितगुणार्थवत्त्वो हि योगी यद्यदर्थतया संकल्पयति तत्तस्मै प्रयोजनाय कल्पते । विषमप्यमृतकार्ये संकल्प्य भोजयञ्जीव-

१५ यतीति । स्यादेतत् । यथा शक्तिविपर्यासं करोत्येवं पदार्थविपर्यासमपि कस्मान्न करोति । तथा च चन्द्रमसमादित्यं कुर्यात्कुहूं च सिनीवालीमित्यत आह— **न च शक्तोपीति** । न खल्वेते यत्र कामावसायिनस्तत्रभवतः परमेश्वरस्याज्ञामतिक्रमितुमुत्सहन्ते । शक्तयस्तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानमिति । **एतान्यष्टावैश्वर्याणि** ।

२० **तद्धर्मानभिघात इति** । अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवदेतत्सूत्रोपबद्धसकलविषयसंयमफलवत्त्वज्ञापनाय । सुगममन्यत् ॥ ४५ ॥

कायसंपदमाह—**रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्** । वज्रस्येव संहननमवयवव्यूहो दृढो निबिडो यस्य स तथोक्तः ॥ ४६ ॥

२५ जितभूतस्य योगिन इन्द्रियजयोपायमाह—**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः** । ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च तेषु संयमस्तस्मादित्यर्थः । गृहीतिर्ग्रहणम् । तच्च ग्राह्याधीनानिरूपणमिति ग्राह्यं

---

2. D. E. read नस्मात् for कस्मात्.

6. B. D. E. F. read क्रिया for क्रियाम्; L. reads क्रियाशीलाम् for क्रियाम्, शिलाम्.

8. L. reads आवृतकायः सिध्यानाम् for आवृतकायः सिद्धानाम्.

9. A. reads स्वरूप for रूप.

9. A. C. read संहननानि for संहननत्वानि.

सामान्यविशेषात्मा शब्दादिर्ग्राह्यः । तेष्विन्द्रियाणां वृत्तिर्ग्रहणम् । न च तत्सामान्यमात्रग्रहणाकारम् । कथमनालोचितः स विषयविशेष इन्द्रियेण मनसा वानुव्यवसीयेतेति । स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्य-
५ मिन्द्रियम् । तेषां तृतीयं रूपमस्मितालक्षणोऽहंकारः । तस्य सामान्यस्येन्द्रियाणि विशेषाः । चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणा येषामिन्द्रियाणि साहंकाराणि परिणामः । पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति । पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं संयमस्तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

---

दर्शयति—सामान्यविशेषात्मेति । ग्राह्यमुक्त्वा ग्रहणमाह—तेष्विति । वृत्तिरालोचनं विषयाकारा परिणतिरिति यावत् । ये त्वाहुः—सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान्प्रत्याह—न चेति । गृह्यत इति ग्रहणम् । न सामान्यमात्रगोचरं ग्रहणम् । बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्तते । अन्यथान्धबधिराद्यभा-
५ वप्रसङ्गात् । तदिह यदि न विशेषविषयमिन्द्रियं तेनानालोचितो विशेष इति कथं मनसानुव्यवसीयेत । तस्मात्सामान्यविशेषविषयमिन्द्रियालोचनमिति । तदेतद्ग्रहणमिन्द्रियाणां प्रथमं रूपम् । द्वितीयं रूपमाह—स्वरूपं पुनरिति । अहंकारो हि सत्त्वभागेनात्मीयेनेन्द्रियाण्यजीजनत् । अतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषस्तदुभयमपि प्रकाशात्मकमित्यर्थः । तेषां तृतीयं रूपमिति । अहंकारो हीन्द्रियाणां कारणमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात्सामान्यमिन्द्रियाणामित्यर्थः । चतुर्थं रूपमिति । गुणानां हि त्रैरूप्यं व्यवसेयात्मकत्वं व्यवसायात्मकत्वं च । तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्च तन्मात्राणि भूतभौतिकानि निर्मिमते । व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साहंकाराणीन्द्रियाणी-
१५ त्यर्थः । शेषं सुगमम् ॥ ४७ ॥

---

3. D. E. read न for वाऽनु.
4. B. F. read परमाणुलक्षिभिन्नकार्यव्यवसायात्मकम् after द्रव्यम्.
6. C. reads पुनः after चतुर्थम्.
8. G. reads तत् for यत्.
8. B. F. L. read एव after पञ्चसु.
13. O. om. न before सामान्य.
22. N. reads व्यवसेयात्मकम् for व्यवसेयात्मकताम्.
22. P. reads व्यवसायात्मकम् for व्यवसायात्मकत्वम्.
24. P. reads विमिमते for निर्मिमते.

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥**

कायस्यानुत्तमो गतिलाभो मनोजवित्वम् । विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभो विकरणभावः । सर्वप्रकृतिविकारवशित्वं प्रधानजय इति । एतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते ।
५ एताश्च करणपञ्चकस्वरूपजयादधिगम्यन्ते ॥ ४८ ॥

**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥**

निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्व-
१० भावाधिष्ठातृत्वम् । सर्वात्मानो गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं

---

पञ्चरूपेन्द्रियजयात्सिद्धीराह—**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च** । विदेहानामिन्द्रियाणां करणभावो विकरणभावः । देशः काश्मीरादिः । कालोऽतीतादिः । विषयः सूक्ष्मादिः । सान्वयेन्द्रियजयात्सर्वप्रकृतिविकारवशित्वं प्रधानजयः । ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः ।
१५ स्यादेतत् । इन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु । प्रधानादीनां तत्कारणानां किमायातमित्यत आह—**एताश्चेति** । करणानामिन्द्रियाणां पञ्च रूपाणि ग्रहणादीनि तेषां जयात् । एतदुक्तं भवति—नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य । तदन्तर्गतं च प्रधानादीति ॥ ४८ ॥

त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात्पारंपर्येण च स्वसिद्ध्युपसं-
२० हारसंपादितश्रद्धाद्वारेण यदर्थास्तस्याः सत्त्वपुरुषान्यताख्यातेरवान्तरविभूतीर्दर्शयति—**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च** । निर्धूतरजस्तमोमलतया वैशारद्यम् । ततः परा वशीकारसंज्ञा । रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत् । तदुपशमे तु तद्वश्यं योगिनो वशिनः । तस्मिन्वश्ये योगिनः सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावा-
२५ धिष्ठातृत्वम् । एतदेव विवृणोति—**सर्वात्मान इति** । व्यवसायव्यवसेयात्मानो

---

3. D. E. read अपि after वृत्तिलाभः.
4. B. D. read प्रतीकाः उच्यते for प्रतीका उच्यन्ते.
5. G. K. read पञ्चरूप for पञ्चकस्वरूप.
7. A. om. च.
10. D. reads गुण for गुणा व्यवसाय.
13. N. P. read सायन for सान्वय.

**क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपस्थिता इत्यर्थः । सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थ इति । एषा विशोका नाम सिद्धिर्यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४९ ॥**

## तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥

**यदास्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं विवेकप्रत्ययो धर्मः सत्त्वं च हेयपक्षे न्यस्तं पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादिति । एवमस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति । तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते । तदेतेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानामप्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यम् । तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥ ५० ॥**

---

जडप्रकाशरूपा इत्यर्थः । तदनेन क्रियैश्वर्यमुक्तम् । ज्ञानैश्वर्यमाह—**सर्वज्ञातृत्वमिति** । अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां संज्ञामाह—**एषा विशोकेति** । क्लेशाश्च बन्धनानि च कर्माणि । तानि क्षीणानि यस्य स तथा ॥ ४९ ॥

संयमान्तराणां पुरुषार्थाभासफलत्वाद्विवेकख्यातिसंयमार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह—**तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्** । यदास्य योगिनः क्लेशकर्मक्षय एवं ज्ञानं भवति । किंभूतमित्याह—**सत्त्वस्यायं विवेकप्रत्ययो धर्मः** । शेषं तत्र तत्र व्याख्यातत्वात्सुगमम् ॥ ५० ॥

---

1. C. reads सर्वात्मना for सर्वात्मनाम्.
6. B. C. D. E. F. om. धर्मः.
10. B. om. न before भुङ्क्ते.
11. D. E. read प्रलये befor अप्रतिप्रसवे; B. C. F. K. read प्रतिप्रसवं for अप्रतिप्रसवं.
13. B. E. read अयं सानन्दानुगतः संप्रज्ञातः समाधिर्विचारात्मकान्तःकरणात्मगादिति after इति.
18. P. reads फलमत्त्वात् for फलत्वात्.
18. L. reads संयमस्य इत्य for संयम.

## स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥

चत्वारः खल्वमी योगिनः प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति । तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रथमः । ५ ऋतंभरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कर्तव्यसाधनादिमान् । चतुर्थो यस्त्वतिक्रान्तभावनीयः । तस्य चित्तप्रतिसर्ग एकोऽर्थः । सप्तविधास्य प्रान्तभूमिप्रज्ञा ।

---

संप्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसंभवे तन्निराकरणकारणमुपदिशति—स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् । १० स्थानानि येषां सन्ति ते स्थानिनो महेन्द्रादयः । तैरुपनिमन्त्रणं तस्मिन्सङ्गश्च स्मयश्च न कर्तव्यः । पुनरनिष्टप्रसङ्गात् । तत्र यं देवाः स्थानैरुपमन्त्रयन्ते तं योगिनमेकं निर्धारयितुं यावन्तो योगिनः संभवन्ति तावत एवाह—चत्वार इति । तत्र प्रथमकल्पिकस्य स्वरूपमाह—तत्राभ्यासीति । प्रवृत्तमात्रं न पुनर्वशीकृतं ज्योतिर्ज्ञानं परचित्तादिविषयं यस्य स तथा । द्वितीयमाह—ऋतंभरप्रज्ञ इति । १५ यत्रेदमुक्तम्—"ऋतंभरा तत्र प्रज्ञा" ( यो. सू. १।४८ ) इति । स हि भूतेन्द्रियाणि जिगीषुः । तृतीयमाह—भूतेन्द्रियजयीति । तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि । तमेवाह—सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात्परचित्तादिज्ञानादिषु कृतरक्षाबन्धो यतस्तेभ्यो न च्यवते भावनीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्यपर्यन्तेषु कर्तव्यसाधन- २० वान् । पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वात् । चतुर्थमाह—चतुर्थ इति । तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः ।

---

1. A. reads स्थाम्युप for स्थान्युप.
1. B. C. D. E. F. om. नि.
1. D. E. read सङ्गस्थापा for सङ्गस्मया.
3. B. G. K. read प्राथम for प्रथम.
5. B. reads प्रातिभ for ऋतंभर.
5. C. reads भावेषु before भावितेषु.
6. B. reads कृतकर्तव्य; L. reads कृतकर्तव्यः for कर्तव्य.
6. L. om. च:.
10. N. O. P. om. नि after उप.
11. O. reads तयोरकरणमुपदिशति for न कर्तव्यः.
13. K. reads प्राथम for प्रथम.
21. N. reads सर्गः for प्रतिसर्गः.

तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते भो इहास्यतामिह रम्यतां कमनीयोऽयं भोगः कमनीयेयं कन्या रसायनमिदं जरामृत्युं बाधते वैहायसमिदं यानममी कल्पद्रुमाः पुण्या मन्दाकिनी सिद्धा ५ महर्षय उत्तमा अनुकूला अप्सरसो दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति । एवमभिधीयमानः सङ्गदोषान्भावयेद्घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथंचिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः । तस्य चैते १० तृष्णायोनयो विषयवायवः प्रतिपक्षाः । स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति । स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत् ।

सङ्गमकृत्वा स्मयमपि न कुर्यादेवमहं देवानामपि प्रार्थनीय इति । १५ स्मयादयं सुस्थितंमन्यतया मृत्युना केशेषु गृहीतमिवात्मानं न भावयिष्यति । तथा चास्य छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति । ततः पुनरनिष्टप्रसङ्गः । एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति । भावनीयश्चार्थोऽभिमुखीभविष्यतीति ॥ ५१ ॥

---

२० तदेतेषु योगिषूपनिमन्त्रणाविषयं योगिनमवधारयति—तत्र मधुमतीमिति । प्रथमकल्पिके तावन्महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति । तृतीयोऽपि तैर्नोपनिमन्त्रणीयः । भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः । चतुर्थोऽपि परवैराग्यसंपत्तेरासङ्गशङ्का दूरोत्सारितैवेति पारिशेष्याद्द्वितीय एव ऋतंभरप्रज्ञस्तदुपनिमन्त्रणविषय इति । वैहायसमाकाशगामि । अक्षयमविनाशि । अजरं सदाभिनवम् ।

२५ स्मयकरणे दोषमाह—स्मयादयमिति । स्मयात्सुस्थितंमन्यो नानित्यतां भावयिष्यति । न तस्यां प्रणिधास्यतीत्यर्थः । सुगममन्यत् ॥ ५१ ॥

---

7. B. F. L. read अपरम् for अमर.
14. D. reads संगमं कृत्वा for संगमकृत्वा.
15. B. F. read भावयति for न भावयिष्यति.
16–7. O. reads प्रमादोपलब्धविवरः क्लेशात् for प्रमादो लब्धविवरः क्लेशान्.
22. N. reads चतुर्थः for चतुर्थे.
23. L. reads निमन्त्रणीयः after द्वितीय एव.

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥

यथापकर्षपर्यन्तं द्रव्यं परमाणुरेवं परमापकर्षपर्यन्तः कालः क्षणः । यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसंपद्येत स कालः क्षणः । तत्प्रवाहाविच्छेदस्तु क्रमः । क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्ताहोरात्रादयः । स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते ।

क्षणस्तु वस्तुपतितः क्रमावलम्बी । क्रमश्च क्षणानन्तर्यात्मा । तं

उक्ता कचित्काचित्संयमात्सर्वज्ञता । सा च न निःशेषज्ञता । अपि तु प्रकारमात्रविवक्षया, यथा सर्वैर्व्यञ्जनैर्भुक्तमिति । अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमिति गम्यते न तु निःशेषैरिति । अस्ति च निःशेषवचनः सर्वशब्दो यथोपनीतमन्नं सर्वमशितं प्राशकेनेति । तत्र हि निःशेषमिति गम्यते । तदिह निःशेषज्ञतालक्षणस्य विवेकजज्ञानस्य साधनं संयममाह—**क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्** । क्षणपदार्थं निदर्शनपूर्वकमाह—**यथेति** । लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्यन्तः परमाणुर्यथा तथापकर्षपर्यन्तः कालः क्षणः । पूर्वापरभागविकलकालकलेति यावत् । तमेव क्षणं प्रकारान्तरेण दर्शयति—**यावता वेति** । परमाणुमात्रं देशमतिक्रामेदित्यर्थः । क्रमपदार्थमाह—**तत्प्रवाहेति** । तत्पदेन क्षणः परामृश्यते । न चेदृशः क्रमो वास्तवः । किं तु काल्पनिकः । तस्य समाहाररूपस्यायुगपदुपस्थितेषु वास्तवत्वेन विचारासहत्वादित्याह—**क्षणतत्क्रमयोरिति** । अयुगपत्क्षाविक्षणधर्मत्वात्क्रमस्य क्षणसमाहारस्यावास्तवत्वात्क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः प्रतिक्षण एव व्युत्थितदर्शना भ्रान्ता ये कालमीदृशं वास्तवमभिमन्यन्त इति ।

तत्किं क्षणोऽप्यवास्तवो नेत्याह—**क्षणस्तु वस्तुपतितो** वास्तव इत्यर्थः । क्रमस्यावलम्बनमवलम्बः । सोऽस्यास्तीति क्रमेणावलम्ब्यते वैकल्पिकेनेत्यर्थः । क्रमस्य क्षणावलम्बनत्वे हेतुमाह—**क्रमश्चेति** । क्रमस्यावास्तवत्वे हेतुमाह—

---

1. A. D. E. read संयम्य before संयमात्.
6. D. E. G. om. अपि.
7. C. reads अवस्तु स्वरूप इवावभासते after भासते.
8. D. E. read क्रमाहुलवान् for क्रमावलम्बी.
17. N. reads अतिक्रम्य for अतिक्रामेत्.
19. P. reads अवस्थितेषु for उपस्थितेषु.

**कालविदः काल इत्याचक्षते योगिनः। न च द्वौ क्षणौ सह भवतः। क्रमश्च न द्वयोः सहभुवोः। असंभवात् पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यं क्षणस्य स क्रमः। तस्माद्वर्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति। तस्मान्नास्ति तत्समाहारः। ये तु भूतभाविनः क्षणास्ते परि-**
5 **णामान्विता व्याख्येयाः। तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति। तत्क्षणोपारूढाः खल्वमी सर्वे धर्माः। तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणम्। ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५२ ॥**

**तस्य विषयविशेष उपक्षिप्यते—**

**जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः**
10 **प्रतिपत्तिः ॥ ५३ ॥**

**तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः गौरियं वडवेयमिति। तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं कालाक्षी गौः स्वस्तिमती गौरिति। द्वयोरामलकयोर्जातिलक्षणसारूप्याद्देशभेदोऽन्यत्वकर इदं पूर्वमिदमुत्तरमिति। यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश**

15 म चेति। चो हेत्वर्थे। यस्तु [illegible] प्रत्याह—**क्रमश्च न द्वयोरिति**। कस्मादसंभव इत्यत आह—**पूर्वस्मादिति**। उपसंहरति—**तस्मादिति**। तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणा नेत्याह—**ये त्विति**। अन्विताः साम्येन समन्वागता इत्यर्थः। उपसंहरति—**तेनेति**। वर्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्यादिति ॥ ५२ ॥

20 यद्यप्येतद्विवेकजं ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते तथाप्यतिसूक्ष्मत्वा-त्स्थमं तस्य विषयविशेष उपक्षिप्यते— **जातिलक्षणदेशैरन्यतानवच्छेदा-त्तुल्ययोस्ततः प्रतिपत्तिः**। [illegible] तुल्या जातिर्गोत्वम्। तुल्यश्च देशः पूर्वादिः। [illegible] परमिति। द्वयोरामलकयोस्तुल्यामलकत्वजातिः वर्तुलत्वादि [illegible]
25 शभेदः परमिति। **यदा तु** योगिज्ञानं जिज्ञासुना केनचित्**पूर्वामलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेश उपावर्त्यते** उत्तरदेशमामलकं ततोऽपसार्य निधाय वा

8. D. E. read पूर्वं for पूर्वोत्तर.
9. A. reads क्षण for [illegible].
12. D. E. read नस for तुल्यदेश.
13. C. reads परम् before देशभेद.
14. C. reads अपि for अन्य.
15. N. om. न after क्रमश्च.
18. P. reads सामान्येन for साम्येन.
23. L. O. read पूर्वत्वादिः for पूर्वादिः.
26. O. reads उपावर्तते for उपावर्त्यते.

**उपावर्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः । असंदिग्धेन च तत्त्वज्ञानेन भवितव्यमित्यत इदमुक्तं ततः प्रतिपत्तिर्विवेकजज्ञानादिति ।**

**कथम् । पूर्वामलकसहक्षणो देश उत्तरामलकसहक्षणाद्देशाद्भिन्नः ।**
५ **ते चामलके स्वदेशक्षणानुभवभिन्ने । अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति । एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरस्य परमाणोस्तद्देशानुपपत्तावुत्तरस्य तद्देशानुभवो भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति ।**

---

१० तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः प्राज्ञस्य लौकिकस्य विप्रमाणनिपुणस्यासंदिग्धेन च तत्त्वज्ञानेन भवितव्यम् । विवेकजज्ञानवतो योगिनः संदिग्धत्वानुपपत्तेः । अत उक्तं सूत्रकृता—**ततः प्रतिपत्तिः** । तत इति व्याचष्टे—**विवेकजज्ञानादिति** ।

क्षणतत्क्रमसंयमाज्जातं ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलका-
१५ न्तराद्विवेचयतीति पृच्छति—**कथमिति** । उत्तरमाह—**पूर्वामलकसहक्षणो देशः** पूर्वामलकेनैकक्षणो देशः । तेन सह निरन्तरपरिणाम इति यावत् । उत्तरामलकसहक्षणाद्देशादुत्तरामलकनिरन्तरपरिणामाद्भिन्नः । भवतु देशयोर्भेदः किमायातमामलकभेदस्येत्यत आह—**ते चामलके स्वदेशक्षणानुभवभिन्ने** । स्वदेशसहितो यः क्षणस्तस्यामलकस्य कालकला स्वदेशेन सहोत्तराधर्मरूपपरिणाम-
२० लक्षिता सा स्वदेशक्षणः । तस्यानुभवः प्राप्तिर्वा ज्ञानं वा । तेन भिन्ने आमलके । ययोरामलकयोः पूर्वोत्तराभ्यां देशाभ्यामौत्तराधर्यपरिणामक्षण आसीत्तयोर्देशान्तरौत्तराधर्यपरिणामक्षणविशिष्टत्वमनुभवन्संयमी ते भिन्ने एव प्रत्येति । संप्रति तद्देशपरिणामेऽपि पूर्वभिन्नदेशपरिणामाद्विशिष्टस्य चैतद्देशपरिणामक्षणस्य संयमतः साक्षात्करणात् । तदिदमुक्तम्—**अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे**
२५ **हेतुरिति** । अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोरपीदृशस्य भेदो योगीश्वरबुद्धिगम्यः श्रद्धेय इत्याह—**एतेनेति** ।

---

1. B. C. F. G. L. read उपावर्तते for उपावर्त्यते.
1. F. reads देशत्वम् for देशत्वे.
6. D. E. L. read जातिक्षण for जातिलक्षण.
7. B. reads परस्य परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षण-साक्षात्करणादुत्तरस्य परमाणोस्तद्देशोपपत्तौ for परमाणोस्तद्देशानुपपत्तौ.
7. F. reads उपपत्तौ for अनुपपत्तौ.
11. N. O. P. om. तत्त्व.
22. N. reads लक्षण for क्षण before विशिष्टत्व.

अपरे तु वर्णयन्ति—येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति । तत्रापि देशलक्षणभेदो मूर्तिव्यवधिजातिभेदश्चान्यत्वे हेतुः । क्षणभेदस्तु योगिबुद्धिगम्य एवेति । अत उक्तं मूर्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वमिति वार्षगण्यः ॥ ५३ ॥

५ **तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥**

**अपरे तु वर्णयन्ति** । वर्णनमुदाहरति—**य इति** । वैशेषिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्याहुः । तथा हि—योगिनो मुक्तांस्तुल्यजातिदेशकालान्यवधिरहितान्परस्परतो भेदेन प्रत्येकं तत्त्वेन च प्रतिपद्यन्ते । तस्मादस्ति क-
१० श्चिदन्त्यो विशेष इति । तथा च स एव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति । तदेतद्दूषयति—**तत्रापीति** । जातिदेशलक्षणान्युदाहृतानि । मूर्तिः संस्थानम् । यथैकं विशुद्धावयवसंस्थानोपपन्नमपमार्य तस्मिन्नेव देशेऽन्यस्य द्रष्टुः कुत्सितावयवसंनिवेश उपावर्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः । शरीरं वा मूर्तिः । तत्संबन्धेनात्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृश-
१५ तादृशेन भेद इति सर्वत्र भेदप्रत्ययस्यान्यथासिद्धेर्नान्त्यविशेषकल्पना । व्यवधिर्भेदकारणम् । यथा कुशपुष्करद्वीपयोर्देशान्तररूपयोरिति । यतो जातिदेशादिभेदा लोकबुद्धिगम्या अत उक्तं—**क्षणभेदस्तु योगिबुद्धिगम्य एवेति** । एवकारः क्षणभेदमवधारयति न योगिबुद्धिगम्यत्वम् । तेन भूतचरदेहसंबन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति । यस्य तूक्ता भेदहेतवो न
२० सन्ति तस्य प्रधानस्य भेदो नास्तीत्याचार्यो मेने । यस्मादुक्तं "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" ( यो. सू. २।२२ ) इति । तदाह—**मूर्तिव्यवधीति** । उक्तभेदहेतूपलक्षणमेतत् । जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्यर्थः ॥ ५३ ॥

तदेवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति—
२५ **तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्** । विवेकजं

---

2. F. reads व्यवधिः for व्यवधि.
3. F. reads व्यवधिः for व्यवधि.
5. A. reads विषयक्रमम् for विषयमक्रमम् .
6. L. reads विवेकज for विवेकजम् .
8. L. reads मुक्ता न for मुक्तान्.
8–9. N. reads कालानव्यवधि for कालान्व्यवधि.
11. N. reads काल after देश.

तारकमिति स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः । सर्वविषयत्वान्नास्य किंचिदविषयीभूतमित्यर्थः । सर्वथाविषयमतीतानागतप्रत्युत्पन्नं सर्वं पर्यायैः सर्वथा जानातीत्यर्थः । अक्रममित्येकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः । एतद्विवेकजं ज्ञानं परिपूर्णम् । अस्यैवांशो योगप्रदीपो मधुम[illegible]वदस्य [illegible]परिसमाप्तिरिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा—

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥

---

ज्ञानमिति लक्ष्यनिर्देशः । शेषं लक्षणम् । संसारसागरात्तारयतीति तारकम् ।
१० पूर्वस्मात्संयमजाद्विशेषयति—सर्वथाविषयमिति । पर्याया अवान्तरविशेषाः । अत एव विवेकजं ज्ञानं परिपूर्णम् । नास्य काचित्किंचित्कथंचित्कदाचिदगोचर इत्यर्थः । आस्तां तावज्ज्ञानान्तरम् । संप्रज्ञातोऽपि तावदस्यांशः । तस्मादतः परं किं परिपूर्णमित्याह—अस्यैवांशो योगप्रदीपः संप्रज्ञातः । किमुपक्रमः किमवसानश्चासावित्याह—मधुमतीमिति । ऋतंभरा प्रज्ञैव मधु । मोदकारणत्वात् ।
१५ यथोक्तं प्रज्ञाप्रासादमारुह्येति । तद्वती मधुमती धियोऽवस्था । तामुपादाय यावदस्य परिसमाप्तिः समस्ता प्रान्तभूमिः प्रज्ञा । अत एव विवेकजं ज्ञानं तारकं [illegible]याते । एतदुक्तं योगप्रदीपस्य [illegible] ॥ ५४ ॥

तदेव परंपरया कैवल्यस्य [illegible] सत्त्वपुरुषान्यताज्ञानं साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति—प्राप्तेति । विवेकजं ज्ञानं भवतु
२० मा वा भूत् । [illegible] कैवल्य[illegible]इत्यर्थः । सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति । इतः सूत्रगतानि । ईश्वरस्य पूर्वोक्तैः संयमज्ञान-

---

3. D. G. read क्रमम् for अक्रमम्.

4. G. reads परिपूर्णस्य for परिपूर्णम् । अस्य.

8. A. om. इति.

12. N. om. किम्.

15. N. O. om. धियोऽवस्था.

15–6. L. reads मधुमदा सा धियोऽवस्थामुपादाय यावदस्यापरि for धियोऽवस्था । तामुपादाय यावदस्य परि-

16. O. reads अपरिसमाप्तिः for परिसमाप्तिः.

यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रतीतिमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति, तदा पुरुषस्योपचरितभोगाभावः शुद्धिः । एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा । न
५ हि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति । सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं ज्ञानं चोपक्रान्तम् । परमार्थतस्तु ज्ञानाददर्शनं निवर्तते । तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः । क्लेशाभावात्कर्मविपाकाभावः । चरिताधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य दृश्यत्वेन पुनरुपतिष्ठन्ते । तत्पुरुषस्य कैवल्यम् । तदा पुरुषः स्वरूपमात्रज्योतिरमलः
१० केवली भवति ॥ ५५ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे व्यासभाष्ये
विभूतिपादस्तृतीयः ॥ ३ ॥

---

क्रियाशक्तिमतोऽनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकजज्ञानभागिन इतरस्य वानुत्पन्नज्ञानस्य न विभूतिषु काचिदपेक्षास्तीत्याह—न हीति । ननु
१५ यद्यनपेक्षिता विभूतयः कैवल्ये, व्यर्थस्तर्हि तासामुपदेश इत्यत आह— सत्त्वशुद्धिद्वारेणेति । इत्थंभूतलक्षणे तृतीया । नात्यन्तमसतवः कैवल्ये विभूतयः किं तु न साक्षादित्यर्थः । ज्ञानं विवेकजमुपक्रान्तम् । यत्र पारंपर्येण कारणं तदौपचारिकं न तु मुख्यम् । परमार्थतस्तु ख्यातिरेव मुख्यमित्यर्थः । ज्ञानादिति प्रसंख्यानादित्यर्थः ॥ ५५ ॥

२० अथान्तरङ्गाण्यङ्गानि परिणामाः प्रपञ्चिताः ।
संयमाद्भूतसंयोगस्तासु ज्ञानं विवेकजम् ॥ इति पदार्थसंग्रहश्लोकः ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां
तत्त्ववैशारद्यां विभूतिपादस्तृतीयः ॥ ३ ॥

---

2. C. om. तदा.
6. G. reads दर्शनम् for अदर्शनम्.
7. L. reads विपाकाभावात् for विपाकाभावः.
9. B. F. read चितिशक्तिर्भोक्तृशक्तिर्विकारिकायामस्मितायां स्थितापि भिन्ना दृश्यते भोक्तृभावयुक्तत्वात्सास्मिता भवति after कैवल्यम्.
10. B. F. read अयं सास्मितः संप्रज्ञातः समाधिः सत्त्वपुरुषशुद्धिमाध्य आनन्दत्यागादित्यर्थः. after भवति.
14. L. N. read उत्पन्न for अनुत्पन्न
21. O. P. read भूमि for भूत.

## वाचस्पतिकृतटीकायुतव्यासभाष्यसमेतानि पातञ्जलयोगसूत्राणि ।

---

### ( तत्र चतुर्थः कैवल्यपादः । )

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥**

देहान्तरिता जन्मना सिद्धिः । ओषधिभिरसुरभवनेषु रसायने-
५ नेत्येवमादिः । मन्त्रैराकाशगमनाणिमादिलाभः । तपसा संकल्प-
सिद्धिः कामरूपी यत्र तत्र कामग इत्येवमादिः । समाधिजाः सिद्धयो
व्याख्याताः ॥ १ ॥

---

तदेवं प्रथमद्वितीयतृतीयपादैः समाधितत्साधनतद्विभूतयः प्राधान्येन व्युत्पा-
दिताः । इतरत्तु प्रासङ्गिकमौपोद्घातिकं चोक्तम् । इहेदानीं तद्धेतुकं कैवल्यं व्युत्पा-
१० दनीयम् । न चैतत्कैवल्यभागीयं चित्तं परलोकं च परलोकिनं विज्ञानातिरिक्तं
चित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्तारमात्मानं च प्रसंख्यानपरमकाष्ठां च विना
व्युत्पाद्य शक्यं वक्तुमिति तदेतत्सर्वमत्र पादे व्युत्पादनीयमितरच्च प्रसङ्गादुपो-
द्घाताद्वा । तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्धारयितुकामः पञ्च-
तयीं सिद्धिमाह—**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः** । व्याचष्टे-
१५ **देहान्तरितेति** । स्वर्गोपभोगभागीयात्कर्मणो मनुष्यजातीयाचरितात्कुतश्चिन्नि-
मित्ताल्लब्धपरिपाकात्कचिद्देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिराणि-
माद्या भवतीति । ओषधिसिद्धिमाह—**असुरभवनेष्विति** । मनुष्यो हि कुतश्चिन्नि-
मित्तादसुरभवनमुपसंप्राप्तः कमनीयाभिरसुरकन्याभिरुपनीतं रसायनमुपयुज्या-
जरामरणत्वमन्याश्च सिद्धीरासादयति । इहैव वा रसायनोपयोगेन यथा मा-
२० ण्डव्यो मुनी रसोपयोगाद्विन्ध्यवासीति । मन्त्रसिद्धिमाह—**मन्त्रैरिति** । तपःसि-
द्धिमाह—**तपसेति** । संकल्पसिद्धिमाह—**कामरूपीति** । यदेव कामयतेऽणि-
मादि तदेकपदेऽस्य भवतीति । यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तदेव
शृणोति मनुते वेति । आदिशब्दाद्दर्शनादयः संगृहीता इति ॥ १ ॥

---

5. B. F. read गमनमनावरणमेवस्तु ततः क्षेत्रिकवदणिमादिसिद्धिः for गमनाणिमादिलाभः.
8. P. om. तत् before विभूतयः.
15. P. reads स्वर्गं for स्वर्ग.

कुतश्चैतत्—

**तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥**

तदेतच्चित्तमसंख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य ५ भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वाद्गृहवत्। संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यम्। न सुखचित्तं सुखार्थं न ज्ञानं ज्ञानार्थम्। उभयमप्येतत्परार्थम्। यश्च भोगेनापवर्गेण चार्थेनार्थवान्पुरुषः स एव परो न परः सामान्यमात्रम्। यत्तु किंचित्परं सामान्यमात्रं स्वरूपेणोदाहरे-

---

चित्तातिरिक्तात्मसद्भावे हेत्वन्तरमवतारयति—कुतश्चेति। तदसंख्येय- १० वासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्। यद्यप्यसंख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते न तु पुरुषम्। तथा च वासनाधीना विपाकाश्चित्ताश्रयतया चित्तस्य भोक्तृतामावहन्ति, भोक्तुरर्थे च भोग्यमिति सर्वं चित्तार्थं प्राप्तं, तथापि तच्चित्तमसंख्येयवासनाविचित्रमपि परार्थम्। कस्मात्। संहत्यकारित्वादिति सूत्रार्थः। व्याचष्टे—तदेतदिति। स्यादेतत्। चित्तं संहत्यापि १५ करिष्यति स्वार्थं च भविष्यति कः खलु विरोध इति यदि कश्चिद्ब्रूयात्तं प्रत्याह—संहत्यकारिणेति। सुखचित्तमिति भोगमुपलक्षयति। तेन दुःखचित्तमपि द्रष्टव्यम्। ज्ञानमित्यपवर्ग उक्तः। एतदुक्तं भवति—सुखदुःखे चित्तं प्रतिकूलानुकूलात्मके नात्मनि संभवतः। स्वात्मनि वृत्तिविरोधात्। न चान्योऽपि संहत्यकारी साक्षात्परंपरया वा सुखदुःखे विदधानस्ताभ्यामनुकूल- २० नीयः प्रतिकूलनीयो वा। तस्माद्यः साक्षात्परंपरया वा न सुखदुःखयोर्व्याप्रियते स एवाभ्यामनुकूलनीयः प्रतिकूलनीयो वा। स च नित्योदासीनः पुरुष एवमपवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात्स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वम्। न बाह्यविषयादस्मादपवर्गसंभवोऽस्ति। विदेहप्रकृतिलयानामपवर्गा-

---

2. A. D. E. G. L. read चित्तम् for चित्रम्.
2. A. reads सह for संहत्य.
5. B. F. read अपवर्गार्थेन for अपवर्गार्थं न.
5. C. om. न स्वार्थम्.
6. B. F. L. read सुखम् for सुख after न.
10. L. reads चित्तम् for चित्रम्.
16. L. O. read सुखम् for सुख.
16. L. reads दुःखम् for दुःख.
20. N. reads न before व्याप्रियते.
22. L. reads व्रज्यते for वृज्यते.

द्वैनाशिकस्तत्सर्वं संहत्यकारित्वात्परार्थमेव स्यात्। यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

## विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २५ ॥

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते। तस्यात्मभावभावना स्वाभाविकी प्रवर्तते। यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद्येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्रात्मभावभावना कोऽहमासं कथमहमासं किंस्विदिदं कथंस्विदिदं के भविष्यामः कथं वा भविष्याम

---

संभवात्। तस्माज्ज्ञानमपि पुरुषार्थमेव न तत्स्वार्थं नापि परमात्मार्थम्। संहतपरार्थत्वे चानवस्थाप्रसङ्गादसंहतपरार्थसिद्धिरिति ॥ २४ ॥

तदेवं कैवल्यमूलबीजं युक्तिमयमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृतपुरुषान्तराद्व्यावृत्तमाह—**विशेषदर्शिन आत्मभावभावनानिवृत्तिः**। यस्यात्मभावे भावनास्ति तस्याध्यात्मयोगोपदेशानन्तरमुत्पन्नस्य तत्परिपाकाच्चित्तसत्त्वपुरुषयोर्विशेषदर्शनादात्मभावभावना निवर्तते। यस्यात्मभावभावनैव नास्ति नास्तिकस्य तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्पारलौकिकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावनानिवृत्तिरिति सूत्रार्थः। नन्वात्मभावभावनायाश्चित्तवर्तिन्याः कुतोऽवगम इत्यत आह—**यथा प्रावृषीति**। प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्तितमस्तीत्यनुमीयते। तस्य चात्मभावभावनावश्यमेव स्वाभाविकी वस्त्वभ्यासं विनापि प्रवर्तते। अनधिकारिणमागमिनो वचनेन दर्शयति—**यस्याभावादिदमिति**। पूर्वपक्षो नास्ति कर्मफलं परलोकिनोऽभावात्परलोकाभाव इति। तत्र रुचिः। अरुचिश्च निर्णये पञ्चविंशतितत्त्वविषये। आत्मभावभावना

---

3. A. reads वि before निवृत्तिः.

7. C. D. E. read स्वभाव; G. reads स्वभावम् for स्वभावं.

7. C. om. मुक्त्वा. D. E. read मुक्तम् for मुक्त्वा.

11. L. reads सहतम् for संहत.

14. L. O. read उपदेशात् for उपदेशान्.

इति । सा तु विशेषदर्शिनो निवर्तते । कुतः । चित्तस्यैवैष विचित्रः परिणामः पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति । ततोऽस्यात्मभावभावना कुशलस्य विनिवर्तत इति ॥ २५ ॥

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥**

तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति ॥ २६ ॥

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहारोहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा ममेति वा जानामीति वा न जानामीति वा । कुतः । क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

---

प्राग्व्याख्याता । विशेषदर्शिनः परामर्शमाह—**चित्तस्यैवेति** । अस्य विशेषदर्शनकुशलस्यात्मभावभावना विनिवर्तत इति ॥ २५ ॥

अथ विशेषदर्शिनः कीदृशं चित्तमित्यत आह—**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्** । निगदव्याख्यातम् ॥ २६ ॥

स्यादेतत् । विशेषदर्शनं चेद्विवेकनिष्ठं, न जातु चित्तं व्युत्थितं स्यात् । दृश्यते चास्य भिक्षामटतो व्युत्थितमित्यत आह—**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः** । **प्रत्ययेति** । प्रतीयते येन स प्रत्ययश्चित्तसत्त्वम् । तस्माद्विवेकश्चितेः । तेन निम्नस्य । जानामीति साक्षान्मोक्षो विविच्य दर्शितः । न जानामीति मोहः । तन्मूलावहंकारममकारावहमस्मीति वा ममेति वा दर्शितौ । क्षीयमाणानि च तानि बीजानि चेति समासः । **पूर्वसंस्कारेभ्यो** व्युत्थानसंस्कारेभ्यः ॥ २७ ॥

स्यादेतत् । सत्यपि विवेकविज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते कस्तर्हि हानहेतुरेतेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह—**हानमेषां क्लेशवदुक्तम्** । अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः

---

2. C. reads अपि विद्यायाम् for अविद्यायाम्.
3. B. F. read अयमानन्त्यानुगतः संप्रज्ञातः समाधिर्विवेके सर्वार्थचित्तप्रकृतिलयगतत्वादिति for इति.
4. A. reads प्रभावम् for प्राग्भारम्.
6. B. F. om. जज्ञान.
8. C. om. प्रत्यय.
8. D. E. read विवेकप्रत्यय for प्रत्ययविवेक.
10. B. F. L. om. न जानामीति वा.
10. L. O. P. read मोक्षो विविच्य दर्शितो for मोक्षो विविच्य दर्शितः.

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति। ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते ॥ २८ ॥

**प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥**

यदायं ब्राह्मणः प्रसंख्यानेप्यकुसीदस्ततोपि न किंचित्प्रार्थयते। तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयादस्य प्रत्ययान्तराण्युत्पद्यन्ते। तदास्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

**ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥**

---

प्रत्ययान्तरं प्रसुवते न तु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति। यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते। तत्कस्य हेतोः। तद्धि ते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति। एवं व्युत्थानसंस्कारा अपीति। अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्याः। विवेकसंस्काराश्च निरोधसंस्कारैः। निरोधसंस्काराणां त्ववाह्यविषयत्वं दर्शितम्। निरोधोपायः प्रायश्चिन्तनीय इत्यत आह—**ज्ञानसंस्कारास्त्विति**। परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसंख्यानमुक्त्वा प्रसंख्याननिरोधोपायमाह—**प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः**। ततः प्रसंख्यानात्र किंचित्सर्वभावाधिष्ठातृत्वादि प्रार्थयते। प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदोषदर्शनेन विरक्तः सर्वथा विवेकख्यातिरेव भवति। एतदेव विवृणोति—**तत्रापीति**। यदा व्युत्थानप्रत्यया भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिः। यतस्तस्य न प्रत्ययान्तराणि भवन्ति, ततः सर्वथा विवेकख्यातिरिति। तदास्य धर्ममेघः समाधिर्भवति। एतदुक्तं भवति—प्रसंख्याने विरक्तस्तन्निरोधमिच्छन्धर्ममेघं समाधिमुपासीत। तदुपासने च सर्वथा विवेकख्यातिर्भवति। तथा च तं निरोद्धुं पारयतीति ॥ २९ ॥

तस्य च प्रयोजनमाह—**ततः क्लेशकर्मनिवृत्तिः**। कस्मात्पुनर्जीवन्नेव

---

10. A. reads नि before निवृत्तिः.
11. N. P. read विज्ञानस्य for विवेकज्ञानस्य.
15. O. reads च वाह्य for त्ववाह्य.

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति । कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति । क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान्विमुक्तो भवति । कस्मात् । यस्माद्विपर्ययो भवस्य कारणम् । न हि क्षीणविपर्ययः कश्चित्केनचित्क्वचिज्जातो दृश्यत ५ इति ॥ ३० ॥

## तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति । आवरकेण तमसाभिभूतमावृतमनन्तं ज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्तितमुद्घाटितं १० ग्रहणसमर्थं भवति । तत्र यदा सर्वैरावरणमलैरपगतं भवति तदा भवत्यस्यानन्त्यम् । ज्ञानस्यानन्त्याज्ज्ञेयमल्पं संपद्यते । यथाकाशे

---

विद्वान्विमुक्तो भवति । उत्तरं—यस्मादिति । क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम् । न चासति निदाने निदानी भवितुमर्हति । यथाहात्र भगवानक्षपादः—वीतरागजन्मादर्शनात् ( गौत० सू० ३।१।२५ ) इति ।

१५ अथैवं धर्ममेघे सति कीदृशं चित्तमित्यत आह—तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् । आव्रियते चित्तसत्त्वमेभिरित्यावरणानि मलाः क्लेशकर्माणि । सर्वे च त आवरणमलाश्चेति सर्वावरणमलाः । तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य ज्ञायतेऽनेनेत्यनया व्युत्पत्त्यानन्त्यादपरिमेयत्वाज्ज्ञेयमल्पम् । यथा हि शरादि घनपटलमुक्तस्य चण्डार्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात्प्रकाश्या घटा- २० दयोऽल्पाः प्रकाशन्त एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति । तदेतदाह—सर्वैरिति । एतदेव व्यतिरेकमुखेन स्फोरयति—आवरकेण तमसाभिभूतमिति । क्रियाशीलेन रजसा प्रवर्तितमत एवोद्घाटितम् । प्रदेशादपनीतं तम इत्यर्थः । अत एव सर्वान्धर्माञ्ज्ञेयान्मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते । नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रश-

---

1. D. reads समूलकाः संकर्षिताः for समूलकाषं कषिताः.

6. A. om. मल.

6–7. A. om. ज्ञेयमल्पम्.

8. G. om. आवरकेण before तमसा.

9. D. E. read अनन्तज्ञानं सर्वम् for अनन्तं ज्ञानसत्त्वम्.

17–8. P. reads ज्ञानस्य चित्तसत्त्वस्य for चित्तसत्त्वस्य ज्ञानस्य.

खद्योतः । यत्रैवमुक्तम्—

अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् ।

अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत् ॥ इति ॥ ३१ ॥

**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥३२॥**

५ तस्य धर्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते । न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

अथ कोऽयं क्रमो नामेति ।

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥३३॥**

१० क्षणानन्तर्यात्मा परिणामस्यापरान्तेनावसानेन गृह्यते क्रमः ।

---

महेतुः । अथ सत्यप्यस्मिन्कस्मान्न जायते पुनर्जन्तुरित्यत आह—**यत्रैवमुक्तमिति** । कारणसमुच्छेदादपि चेत्कार्यं क्रियते हन्त भो मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः । तथा चानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थः स्यात्—**अविध्यदन्धो मणिमिति** । आवयदुग्रथितवान् । प्रत्यमुञ्चत्पिनद्धवान् ।

१५ अभ्यपूजयत्स्तुतवानिति ॥ ३१ ॥

ननु धर्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थानसमाधिसंस्कारान्सक्लेशकर्माशयान् । गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्त इत्यत आह—**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्** । शीलमिदं गुणानां यद्धर्मा यं

२० प्रति कृतार्थास्तं प्रति न प्रवर्तन्त इति भावः ॥ ३२ ॥

अत्रान्तरे परिणामक्रमं पृच्छति—**अथ कोऽयमिति** । **क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः** । परिणामक्रमः क्षणप्रतियोगी क्षणः प्रतिसंबन्धी यस्य स तथोक्तः । क्षणप्रचयाश्रय इत्यर्थः । न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुम् । न चैकस्यैव क्षणस्य क्रमः । तस्मात्क्षणप्रचया-

२५ श्रयः परिशिष्यते । तदिदमाह—**क्षणानन्तर्येति** । परिणामक्रमे प्रमाणमाह—**परिणामस्येति** । नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते । सोऽयं परिणामस्यापरान्तः पर्यवसानम् । तेन हि परिणामस्य क्रमः । ततः प्रागपि पुराणतायाः सूक्ष्मसूक्ष्मतरसूक्ष्मतमस्थूलस्थूलतरस्थूलतमत्वादीनां पौर्वा-

---

3. F. reads देहेन्द्रियान्तःकरणशून्या विवेकख्यातिः सैव तदन्वयेन मणिविन्धनादिकमकरोदित्यर्थः । after अभ्यपूजयदिति.
17. N. reads धर्माशयान् for कर्माशयान्.
22. L. reads क्रमक्षण for क्रमः क्षण.
24. N. om. तस्मात्क्षण-.
24–5. N. P. read प्रचय आश्रयः for प्रचयाश्रयः.
27. P. reads अन्तः for अपरान्तः.

न ह्यननुभूतक्रमक्षणा पुराणता वस्त्रस्यान्ते भवति। नित्येषु च क्रमो दृष्टः।

द्वयी चेयं नित्यता कूटस्थनित्यता परिणामिनित्यता च। तत्र कूटस्थनित्यता पुरुषस्य। परिणामिनित्यता गुणानाम्। यस्मिन्परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम्। उभयस्य च तत्त्वानभिघाता-
५ न्नित्यत्वम्। तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानो नित्येषु धर्मिषु गुणेष्वलब्धपर्यवसानः। कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय कल्पित इति।

---

१० पर्यमनुमीयते। एतदेव व्यतिरेकमुखेन दर्शयति—न हीति। अननुभूतोऽनुभूतः क्रमक्षणो यया सा तथोक्ता। नन्वेष क्रमः प्रधानस्य न संभवति तस्य नित्यत्वादित्यत आह—नित्येषु चेति। बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रतिजानीते।

तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति—
१५ द्वयीति। ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यम्। परिणामि सदैव स्वरूपात्प्रच्यवमानं कथं नित्यमित्यत आह—यस्मिन्निति। धर्मलक्षणावस्थानामुदयव्ययधर्मत्वं धर्मिणस्तु तत्त्वादविघात एवेति। अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वत्र क्रमस्य नेत्याह—तत्र गुणधर्मेषु बुद्ध्यादिष्विति। यतो लब्धपर्यवसानो धर्माणां विनाशात्। प्रधानस्य तु परिणामक्रमो न लब्धपर्यवसानः।
२० ननु प्रधानस्य धर्मरूपेण परिणामादस्तु परिणामक्रमः। पुरुषस्य त्वपरिणामिनः कुतः परिणामक्रम इत्यत आह—कूटस्थेति। तत्र बद्धानां चित्ताव्यतिरेकाभिमानात्तत्परिणामेन परिणामाध्यासः। मुक्तानां चास्तिक्रियामुपादायावास्तवोऽपि परिणामो मोहकल्पितः शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्तिक्रियामुपारूढ इति।

---

1. G. reads अनुभूत for अननुभूत.
1. B. C. F. L. read क्षणान्तर for क्षणा.
5. B. om. बुद्ध्यादिषु.
6. B. F. om. धर्मिषु.
7. B. F. read प्रतिष्ठः for प्रतिष्ठेषु.
8. D. E. read शब्दे शब्दे for शब्दपृष्ठे.
11. P. reads क्रमः for क्रमक्षणः.
15. O. reads नित्यपरिणामि for नित्यम्। परिणामि.
17. N. om. धर्मत्वम्.
23. O. P. read तत्पृष्टः for तत्पृष्ठः.

**अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्तमानस्यास्ति क्रमसमाप्तिर्न वेति । अवचनीयमेतत् । कथम् । अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यति मृत्वा जनिष्यत इति । ॐ भो इति ।**

५ **अथ सर्वो जातो मरिष्यतीति मृत्वा जनिष्यत इति । विभज्य वचनीयमेतत् । प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यत इतरस्तु जनिष्यते । तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनधिकृत्य श्रेयसी देवानृषींश्चाधिकृत्य नेति । अयं त्ववचनीयः प्रश्नः संसारोऽयमन्तवानथानन्त इति ।**

---

१० गुणेष्वलब्धपर्यवसानः परिणामक्रम इत्युक्तम् । तदसहमानः पृच्छति— **अथेति । स्थित्येति ।** महाप्रलयावस्थायाम् । **गत्येति ।** सृष्टौ । एतदुक्तं भवति— यद्यानन्त्यान्न परिणामसमाप्तिः संसारस्य, हन्त भोः कथं महाप्रलयसमये सर्वेषामात्मनां सहसा समुच्छिद्येत, कथं च सृष्ट्यादौ सहसोत्पद्येत संसारः । तस्मादेकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारस्य

१५ क्रमेणेति प्रधानपरिणामक्रमपरिसमाप्तिः । एवं च प्रधानस्याप्यनित्यत्वप्रसङ्गः । न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात् । तथा सत्यनादित्वव्याहतेः सकलशास्त्रार्थभङ्गप्रसङ्ग इति भावः । उत्तरमाह—**अवचनीयमनुत्तराहमेतत् ।** एकान्तत एतस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति—**अस्ति प्रश्न इति । सर्वो जातो मरिष्यतीति ।** प्रश्नोत्तरम्—**ॐ भो इति । सत्यं भो**

२० इत्यर्थः ।

अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयं प्रश्नमाह—**अथ सर्व इति । विभज्य** वचनीयतामाह—**विभज्येति ।** विभज्य वचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह—**तथा मनुष्येति । अयं त्ववचनीय** एकान्ततः । न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो

२५ वक्तुम् । यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं वा नैकान्ततः शक्यमवधारयितुम् । यथा जातमात्रस्य मरणमेकान्ततः । विभज्य पुनः शक्यावधारण-

3. G. K. om. मृत्वा जनिष्यते.
5. G. K. om. जातो मरिष्यतीति.
6. B. F. read विवेक before ख्यातिः.
18. N. O. read एव तस्य for एतस्य.
25. L. reads वानेकान्ततः for वा नैकान्त

कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येत्यन्यतरावधारणे दोषः। तस्माद्व्याकरणीय एवायं प्रश्न इति ॥ ३३ ॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तम् । तत्स्वरूपमवधार्यते—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं**
५ **स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मकानां गुणानां तत्कैवल्यं स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसं-

---

मित्याह—**कुशलस्येति** । अयमभिसंधिः—क्रमेण मोक्षे सर्वेषां मोक्षात्संसारोच्छेद इत्यनुमानम् । तच्चागमसिद्धमोक्षाश्रयम् । तथा चाभ्युपगतमोक्षप्रतिपादकागम-
१० प्रमाणभावः कथं तमेवागमं प्रधानाविकारनित्यतायामप्रमाणी कुर्यात् । तस्मादागमबाधितविषयमेतदनुमानं न प्रमाणम् । श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरंपराया अनादित्वमनन्तत्वं चेति । अपि च सर्वेषामेवात्मनां संसारस्य न तावद्युगपदुच्छेदः संभवी । न हि पण्डिततरूपाणामप्यनेकजन्मपरंपराभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा । किं पुनः प्राणभृन्मात्रस्य
१५ स्थावरजङ्गमादेरेकदाऽकस्माद्भवितुमर्हति । न च कारणायौगपद्ये कार्ययौगपद्यं युज्यते । क्रमेण तु विवेकख्यातावसंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदोऽनन्तत्वाज्जन्तूनामसंख्येयत्वाद्वेति सर्वमवदातम् ॥ ३३ ॥

कैवल्यस्वरूपावधारणपरस्य सूत्रस्यावान्तरसंगतिमाह—**गुणाधिकारेति** ।
**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिति-**
२० **शक्तिरिति** । कृतकरणीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयस्तेषां कार्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते मनोऽस्मितायामस्मिता लिङ्गे लिङ्गमलिङ्ग इति । योऽयं गुणानां कार्यकारणात्मकानां प्रतिसर्गस्तत्कैवल्यम् । यं कंचित्पुरुषं प्रति प्रधानस्य मोक्षः स्वरूपप्रतिष्ठा वा पुरुषस्य मोक्ष इत्याह—**स्वरूपेति** । अस्ति हि महाप्रलयेऽपि
२५ स्वरूपप्रतिष्ठा चितिशक्तिः । न चासौ मोक्ष इत्यत आह—**पुनरिति** । सोऽत्र

---

6–7. E. reads करणात्मनाम् for कारणात्मकानाम् .

24. O. P. read पुरुषस्य वा for वा पुरुषस्य.

बन्धात्पुरुषस्य चितिशक्तिरेव केवला तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे व्यास-
भाष्ये कैवल्यपादश्चतुर्थः ॥ ४ ॥

५ इतिशब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

मुक्त्यर्हचित्तं परलोकमेयज्ञसिद्ध्ये धर्ममेघः समाधिः ।
द्वयी च मुक्तिः प्रतिपादितास्मिन्पादे प्रसङ्गादपि चान्यदुक्तम् ॥ १ ॥
निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि ॥
१० कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥ २ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां
कैवल्यपादश्चतुर्थः ॥ ४ ॥

## समाप्तमिदं पातञ्जलयोगदर्शनं सटीकभाष्ययुतम् ॥

---

2. F. reads असंप्रज्ञातः संप्रज्ञातः समाधिश्चितिशक्तिः केवलविवेकतानुगम्येन स्थिता सैवात्र व्याख्यातिरित्यर्थः । after कैवल्यमिति.

समाप्तानि वाचस्पतिमिश्रविरचितटीकासंवलितश्रीव्यास-
भाष्यसमेतानि पातञ्जलयोगसूत्राणि ॥

॥ श्रीगणेशाय नमः ॥

# योगसूत्रवृत्तिः

## ( नागोजीभट्टकृता )

नत्वा पतञ्जलिं देवं योगे वृत्तिं लिखाम्यहम्।
छायया व्यासभाष्यस्य तद्गूढार्थप्रकाशिकाम् ॥ १ ॥

५ नन्वेतेन योगः प्रत्युक्तः ( ब्र. सू. २।१।३ ) इति व्याससूत्रेणास्य शास्त्रस्य प्रत्याख्यानात्किमेतच्छास्त्रविचारेणेति चेन्न। 'सांख्यज्ञानेन योगमार्गेण वा न निःश्रेयसमधिगम्यत इति'इति तद्भाष्यमुपादाय 'उपनिषद्बोध्यस्य तत्त्वज्ञानस्य योगापेक्षास्त्येव, न जातु योगशास्त्रोक्तयमनियमादि बहिरङ्गोपायमन्तरङ्गं च धारणाध्यानसमाध्यादिमन्तरौपनिषदात्मसाक्षात्कार उदेति ' इति मिश्रग्रन्थेन
१० समाधानात्। श्रुतिविरुद्धं प्रधानादिसत्यत्वे तु नास्य तात्पर्यमिति मिश्रोक्तेश्च। तत्प्रकरण एव ' द्वैतिनो हि ते सांख्या योगाश्च नात्मैकत्वदर्शिन ' इति भाष्यमुपादाय ' ये प्रधानादिनिरूपणमात्रतात्पर्यकतया तच्छास्त्रं व्याचक्षत इत्यर्थ ' इति मिश्रैरुक्तम्। तथा तत्प्रकरण एव भाष्ये ' सर्वाणि तर्कस्मरणान्यनेतेन प्रतिवक्तव्यानि। ननु तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेदुपकु-
१५ र्वन्तु। फलपर्यवसायि तत्त्वज्ञानं तु वेदान्तवाक्यजमेव। नावेदविन्मनुते ( तै. ब्रा. ३। १२।९।७ ), तं त्वौपनिषदं पुरुषं पृच्छामि ( बृ. ३।९।२६ ) इत्यादिवाक्येभ्य ' इत्युक्तम्। अत एव

मुक्तिर्योगात्तथा योगात्सम्यग्ज्ञानं महीयते ॥,
तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥ ( गी. ६।४६ )।

२० इत्यादिस्मृतिषु योगो मोक्षहेतुतयोक्तः। स किंस्वरूपः किमुपायः किंद्वारा

---

3. B. reads योग for योगे.
5. A. om. शास्त्रस्य after अस्य.
6. A. reads च for वा.
9. A. B. read ध्यानधारणा for धारणाध्यान.
10. B. C. read विरुद्धं प्रधानादिसत्त्वम् for विरुद्धे प्रधानादिसत्यत्वे तु नास्य तात्पर्यम्.
18. A. reads तर्कस्योपकरणानि for तर्कस्मरणानि.
19. A. reads ज्ञानिनः for ज्ञानिभ्यः.

च ज्ञानमोक्षयोः कारणमित्याविजिज्ञासुशिष्यावधानाय भगवान्पतञ्जलिस्त-दनुशासनारम्भं प्रतिजानीते—

## अथ योगानुशासनम् ॥ १ ॥

अत्राथशब्द आरम्भरूपाधिकारार्थः स्वरूपेण दध्यादिवन्मङ्गलमपि । योगो-५नुशास्यते विविच्य बोध्यतेऽनेनेति योगानुशासनं शास्त्रम् । अनेन हिरण्य-गर्भाद्युपदिष्टस्यैव योगस्य विविच्य बोधनमत्र ध्वनयता प्रामाण्यमस्य सूचितम् । एवं च योगानुशासनं शास्त्रमधिकृतं वेदितव्यमित्यर्थः ॥ १ ॥

तत्र योगलक्षणमाह—

## योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

१० अत्र सर्वशब्दाग्रहणात्संप्रज्ञातयोगस्यापि लक्ष्यत्वं बोधितं सर्वचित्तवृत्ति-निरोधरूपासंप्रज्ञातस्य चेत्युभयस्यैव लक्षणम् । युजसमाधौ (धा. पा.४) इत्यनु-शासनाविद्ं लभ्यम् । समाधिश्च वृत्तिनिरोध एव । अङ्गभूतसमाधिस्त्वग्रे वक्ष्यते।

नन्वेवं यत्किंचिद्वृत्तिनिरोधः संप्रज्ञात इति लभ्यम् । तच्चायुक्तम् । सर्वभूमिषु युक्तौ तत्सत्त्वात् । तथा हि । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति पञ्च चित्त-१५स्यावस्थाः । चित्तं हि सात्त्विकराजसतामसगुणयुक्तम् । सत्त्वरजस्तमआत्म-कत्वात् । तत्र तत्त्वज्ञानादयः सात्त्विकाः । प्रवृत्त्यादयो राजसाः । निद्राद्य-स्तामसाः । एते हि सत्त्वादिद्रव्याश्रितत्वाद्गुणा उच्यन्ते । सत्त्वादीनि तु द्रव्या-ण्यपि रज्ज्वारम्भकतन्तुवदेव गुणा उच्यन्ते । तत्र सत्त्वप्रधानमपि चित्तं यदा स्वोपसर्जनरजस्तमःसंसर्गादणिमाद्यैश्वर्यशब्दादिविषयानुरक्तं तदा २०क्षिप्तावस्थमित्युच्यते । यथा दैत्यदानवादीनाम् । तदेव यदाभिभूतरजस्क-तमसानुविद्धं तत्संसर्गादधर्माज्ञानावैराग्यानैश्वर्यनिद्रादिमद्भवति तदा मूढाव-स्थम् । यथा रक्षःपिशाचादीनाम् । तदेव यदा प्रक्षीणतमस्करजोमात्रासंसर्गा-त्सर्वविषयाकारवृत्तिमद्धर्मज्ञानवैराग्यैश्वर्यप्रियं तदा विक्षिप्तावस्थम् । यथा हिरण्यगर्भादिदेवानाम् । ऐश्वर्यमप्रतिहतेच्छत्वम् । तद्विपरीतमनैश्वर्यम् । तत्र २५विक्षिप्तं क्षिप्ताद्विशिष्टम् । सत्त्वाधिक्येन समाधावपि चित्तं रजोमात्रयान्तरा-न्तरा विषयान्तरवृत्तिमत्त्वात् । आस्वपि यत्किंचिद्वृत्तिनिरोधसत्त्वाद्तिव्याप्ति-रिति चेन्न । 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इत्युत्तरसूत्रसाहित्येनास्य लक्षण-त्वात् । द्रष्टुरात्यन्तिकस्वरूपावस्थितिहेतुचित्तवृत्तिनिरोधत्वस्यैव लक्षणत्वात् । यद्वा क्लेशकर्मादिपरिपन्थिचित्तवृत्तिनिरोधत्वं लक्षणम् । प्रलयकालीनस्य सम-

---

19. A. reads शब्दादि for शब्दादि.
20. B. C. bm. आदि.
20. A. reads रजस्कम् for रजस्क.

प्रसुषुप्तिकालिकस्य निरोधस्य व्यावृत्तय आत्यन्तिकेति । उक्तासु च तिसृषु
भूमिषु सन्नपि निरोधो बहुलविक्षेपशेषभूतत्वान्न स्वरूपावस्थितिहेतुर्नापि
क्लेशादिपरिपन्थीति नातिव्याप्तिः । एकाग्रं तु यदा विक्षेपहेतुरजस्तमो-
लेशेनापि रहितं बुद्ध्यात्मरूपयोः सत्त्वपुरुषयोरन्यताख्यातिरूपविवेकख्याति-
५ मात्रवृत्तिकं तदोच्यते । यत्र वर्तमानः समाधिः परमार्थभूतं वस्तु साक्षा-
त्कारयति, अविद्यादिपञ्चक्लेशान्क्षिणोति, कारणोच्छेदाच्च धर्माधर्मरूपाणि बुद्धि-
पुरुषयोर्बन्धकारणान्यदृष्टोत्पादाक्षमाणि करोति, असंप्रज्ञातं प्रत्यासन्नं करोति ।
अयमेव संप्रज्ञातः समाधिः । सम्यक्प्रज्ञायते साक्षात्क्रियते ध्येयमस्मिन्नित्यर्थात् ।
अयं च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इति चतुर्धाग्रे
१० ( १।१७ ) वक्ष्यते । एतेष्वेव क्रमेण मधुमती मधुप्रतीका विशोका संस्कार-
शेषा भूमिरिति च संज्ञा वक्ष्यन्ते । अस्यैव पराकाष्ठा धर्ममेघसमाधिरित्युच्यते ।
अस्यैव परं प्रसंख्यानमिति तान्त्रिकी संज्ञा । अत्र च संप्रज्ञाते धर्मादिषु संसा-
रहेतुत्वदोषदर्शनात्सात्त्विकीं वृत्तिमुपादाय रजस्तमोरूपेतरवृत्तिनिरोधे विवेक-
ख्यातिनिष्ठा । ततो विवेकख्यातेरप्यनात्मत्वसाक्षात्करणात्तत्रापि वैराग्ये सर्व-
१५ वृत्तिनिरोधरूपोऽसंप्रज्ञातः समाधिः । तथा हि— चितिशक्तिः पुरुषाख्या
प्रकाशरूपं द्रव्यं पूर्वधर्मापाये धर्मान्तरोत्पत्तिरूपपरिणामरहिताऽत एव कूटस्थ-
नित्याऽक्रियत्वेन बुद्धिवद्विषयदेशागमनादसंचाररूपाऽप्रतिसंक्रमवत्यत एवासक्ता
बुद्ध्या निवेदितविषया सुखदुःखमोहात्मकत्वरूपाशुद्धिरहिता पूर्णत्वरूपानन्त-
त्ववती । विवेकख्यातिस्तु सत्त्वगुणकार्यत्वात्तद्गुणात्मिका परिणामिन्यत एव
२० विवेकाकारधारिणी दीपशिखावद्विषयेषु संचरणशीला गुणाशुद्धिमती परि-
च्छिन्ना चेति तस्यामनात्मत्वादिदोषदर्शनात्तत्फलसिद्ध्यर्थं तस्यामप्यलंप्रत्ययरूप-
वैराग्यवच्चित्तं तामपि निरुणद्धि परवैराग्येण हेतुना सा स्वयमेव लीयते तदा
निरुद्धावस्थमित्युच्यते सुषुप्तौ जाग्रदादिदर्शनवत् । शर्करास्वादेनैव गुडदोषा-
भिव्यक्तेर्विवेकख्यातेर्दोषदर्शने पुरुषदर्शनोपयोगः । किं च यावद्बुद्धिदोषालिप्तत्वे-
२५ नात्मा न गृह्यते तावच्चित्ते परमप्रियात्मन्यभ्रमाद्दोषदर्शनेऽपि न वृत्तिविषयवैरा-
ग्योत्पत्तिः । निरोधश्चात्र चित्तस्य वृत्तिसंस्कारशेषावस्थारूपः । अभावस्याधि-
करणावस्थाविशेषमात्ररूपत्वात् । सा चावस्था संस्कारपरिणामधारा । तत्काले
संस्कारतारतम्यस्यैव चित्ते स्वीकारात् । न तु वृत्त्यभावमात्रम् । तत्त्वे संस्कार-
स्योत्तरोत्तरसंस्कारसौक्ष्म्यानुभवाजनकत्वानुपपत्तेः । निवृत्त्याख्ययत्नवत्कभि-

---

1. B. C. read न before निरोधस्य.
4. B. reads अन्यथा for अन्यता.
4. A. om. रूपविवेकख्याति.
27. B. C. read तत्तत् for तत्.
28–9. B. om. संस्कारस्योत्तरोत्तर.
29. A. reads सूक्ष्म for सौक्ष्म्य.

ज्ञावपदार्थो निरोध इत्यन्ये । अत एवायं निर्बीज इत्युच्यते । बीजस्य संस्कारस्य तत्त्वज्ञानपर्यन्तस्याशेषतो दाहात् । अत एवास्य स्वरूपावस्थिति-हेतुत्वं क्लेशादिपरिपन्थित्वं च । एतेनासंप्रज्ञातेपि निर्विकल्पकमात्मज्ञानं स्वरूपसद्बुद्धिरूपं तिष्ठतीत्यपास्तम् । संप्रज्ञात एव निर्विकल्पकात्मज्ञानस्य वक्ष्य-
५ माणत्वात् । संप्रज्ञातस्य तु स्वरूपावस्थानहेतुत्वं ज्ञानद्वारैतद्द्वारा च बोद्धव्यम् । ननु विषयान्तरसंचाररूपप्रतिबन्धकनिवृत्तिरूपतया संप्रज्ञातस्य ज्ञानहेतुतायास्त-दङ्गानां च ज्ञानहेतुताया वक्ष्यमाणत्वेन ज्ञानेनैव मोक्षस्य ' तस्य तावदेव चिरम् ' (छा. ६।१४।२) इत्यादिश्रुतिसिद्धतया सिद्धावसंप्रज्ञातो व्यर्थ इति चेन्न । ज्ञाने जातेपि प्रारब्धकर्मणा देहधारणस्यावश्यकत्वेन तदानीमपि बाह्या-
१० भ्यन्तरवृत्तिभिर्दुःखस्य जायमानत्वेन तद्धानार्थं तदुपयोगात् । ज्ञानेन तु प्रारब्ध-कर्मोपभोगोत्तरमेव मोक्षः । अन्यथा जीवन्मुक्तिप्रतिपादकश्रुत्यसंगतिः स्यात् । असंप्रज्ञातयोगस्त्वखिलसंस्कारदाहकतया भोगसंस्कारास्यसहकार्यभावेन तस्य फलादातृतया प्रारब्धकर्माप्यतिक्रम्य शीघ्रमोक्षदायक इति विशेषात् । न हि भोगसंस्कारस्य निःशेषतो दाहे प्रारब्धकर्मापि फलायालम् । इष्टकारणाभावात् ।
१५ ' योगाग्निर्दग्धकर्मा च योऽचिरात् ' इत्युक्तेस्तत्र संकोचे मानाभावाच्च । ' ज्ञानाग्निः सर्वकर्माणि ' ( भ. गी. ४।३७ ) इत्यादौ त्वगत्या संकोचः । तस्य तावदेव चिरम् (छा. ६।१४।२) इति ज्ञानिविषयकश्रुतेर्जीवन्मुक्तिश्रुतेश्च । अर्धभुक्तमारब्धकर्मणामपि नाशः कर्मविपाकोक्तप्रायश्चित्तादिनेव । तदुक्तम्—

नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम् ।

२० इति । बले प्रारब्धातिक्रमेण शीघ्रमोक्षहेतुः । किं च सर्ववृत्तिनिरोधं विना न मोक्षः । आत्यन्तिकदुःखनिवृत्तिर्हि सः । दुःखं च पुरुषस्य चित्तवृत्त्यौपाधिकम् । उपाधिनिवृत्त्यैव चौपाधिकनिवृत्तिः । अत्यन्तवृत्तिनिरोधेनैव च चित्तस्य प्रलयः ।

मुक्तिर्हित्वाऽन्यथा भावं स्वरूपेण व्यवस्थितिः ।

२५ इति स्मृतेरात्यन्तिकस्वरूपावस्थानस्यैव मोक्षत्वादित्याहुः । केचित्तु प्रारब्ध-नाशेपि संस्काराणां सत्त्वेन विदेहादिवत्प्राग्बन्धपराभवायाखिलसंस्कारदाह-कासंप्रज्ञातोपेक्षित एवेत्याहुः । सुषुप्तावपि निद्रारूपा वृत्तिरस्त्येवेति न तत्रा-तिव्याप्तिः । तदोक्तविशेषणाभावाच्च ॥ २ ॥

नन्वसंप्रज्ञातावस्थे चित्ते विषयाकारवृत्तिविषयकबोधस्वरूपः पुरुषः केन
३० रूपेण तिष्ठति किं व्युत्थानवत्प्रकाशरूप एव किं तु वृत्त्याख्यदृश्याभावान्न पश्यति, अथ वा दृशाविषये दीपवत्स्वरसतीत्याशङ्कायामाह—

## तदा द्रष्टुः स्वरूपेवस्थानम् ॥ ३ ॥

17. A. reads ज्ञान for ज्ञानि.

तदेत्यनेन योग्यताबलात्सर्ववृत्तिनिरोधः परामृश्यते । तदाऽसंप्रज्ञातयोग-
काले द्रष्टुश्चितिशक्तेः पुरुषस्य स्वरूपे निर्विषयचैतन्यमात्र आरोपितशान्तघोर-
मूढरहिते प्रकाशेऽवस्थानमित्यर्थः । यथा जपापाये स्फटिकस्यालोहिते स्वस्वरूपे-
ऽवस्थानम् । एवं च तदा वृत्त्यात्मकदुःखाभावः पुरुषार्थ इति बोध्यम् । पुरुषस्य
५ चैतदेव स्वरूपं न बुद्धिवृत्तिविषयबोधः । तस्यौपाधिकत्वात् । उपाधिनिवृत्ता-
वप्युपहितानिवृत्तेर्न तन्नाशप्रसङ्गः । तत्र चरमासंप्रज्ञातशेषसंस्कारक्षयाच्चित्तेन
सह वृत्तीनां निरोध औपाधिकरूपनिवृत्तावात्यन्तिकं स्वरूपावस्थानं मोक्ष इति
दिक् ॥ ३ ॥

ननु व्युत्थानदशायामप्यात्मैवंरूप एव । तदा दुःखित्वाद्यङ्गीकारे परि-
१० णामित्वापत्तिः । तथा रूपं च नानुभूयते कुत इत्यत आह—

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

इतरत्र व्युत्थाने चित्तेन सह द्रष्टुर्वृत्तौ तदवच्छेदेन सारूप्यमित्यर्थः ।
व्युत्थाने हि बिम्बप्रतिबिम्बरूपयोर्बुद्धिवृत्तिपुरुषवृत्त्योः सारूप्यम् । तदुक्तं
भाष्ये– व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुष इति । वृत्तयश्च दीपस्य
१५ शिखा इव भङ्गुराश्चित्तस्यावस्थापरिणामा द्रव्यरूपास्त्रिगुणकार्यत्वात्सुखदुःख-
मोहाश्रयतया शान्तघोरमूढाख्याः स्वसंयुक्तार्थाकारास्तद्विलक्षणाश्च पुरुषस्यापि ।
तस्य दर्शितविषयत्वात् । विषयदर्शनं च स्ववृत्त्यारूढविषयस्य प्रतिबिम्बरूपेण
चित्याधानम् । एवं च तत्प्रतिबिम्बान्येव पुरुषस्य वृत्तयः । प्रतिबिम्बनमपि
तासु स्वीयत्वाभिमान एव । नैतावता तस्य कूटस्थत्वहानिः । एवं च तादृशवृत्ति-
२० सारूप्याच्चितिरपि दुःखादिमतीवाकर्त्र्यपि कर्त्रीवाभोक्त्र्यपि भोक्त्रीव यत्प्रवाति
स एव पुरुषस्य दुःखाद्यनवहरणरूपो दुःखभोगः । तादृशदुःखहानमेव चास्य
मोक्षः । इदमेव वृत्त्योः सारूप्यमभिप्रेत्य पञ्चशिखाचार्यैरुक्तम् 'एकमेव दर्शनं
ख्यातिरेव दर्शनम्' इति । ख्यातिर्बुद्धिवृत्तिः पुरुषस्य दर्शनं तदेव दर्शनं ज्ञानम् ।
अत एकमेव दर्शनमिति भ्रमो लोकानामिति तदर्थः । वस्तुत इदं चित्तस्य
२५ दर्शनमपरं पुरुषस्य दर्शनं चैतन्यरूपम् । तत्तु न लोकप्रत्यक्षगोचरः । अपि त्वाग-
मानुमानगोचर एवेति भावः । यत्त्वहं सुखीत्यादिप्रत्ययान्मनःसंयोगेन निमि-
त्तेनात्मन एव पारमार्थिकी वृत्तिरित्याहुस्तन्न । परिणामित्वापत्तेः । मनः-
संयोगात्मनोरुभयोः कारणतामपेक्ष्य मनस्त्वेनैव हेतुत्वे लाघवाच्च । अहं

---

7. B. reads आत्यन्तिक for आत्यन्तिकम्.
21. A. reads सुख for दुःख after पुरुषस्य.
21. A. reads अस्माकम् for अस्य.
23. A. reads इदं पुरुष for पुरुषस्य.
23. C. reads दर्शनवदेव for दर्शनं तदेव.

कर्ताहं सुखीत्यादिप्रत्ययास्त्वहं गौर इत्यादिभ्रमशतान्तःपातित्वेन न प्रमाणभूताः ।

> प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
> यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ ( गी. १३।२९ )

५ इत्यादिस्मृतिविरोधाच्च । ननु सविषयवृत्तिस्फुरणं चेतनसंबन्धादेव भवतु । संबन्धश्च दूरस्थवनस्पत्योरिव दोषवशाज्जायमानो यो बुद्धिपुरुषयोरेकताभ्रमः सुख्यहं जानामीत्याकारस्तद्विषयत्वम् । अतः परस्परप्रतिबिम्बकल्पना व्यर्थेति चेन्न । विभोश्चैतन्यस्य सर्वसंबन्धात्सर्वदा सर्ववस्तुभानवारणाय चेतने बुद्धिवृत्तितद्विषयमात्रग्राहकत्वाय च प्रतिबिम्बस्वीकारात् । न चाज्ञानं ज्ञानप्रति-
१० बन्धकं चैतन्ये कल्पनीयम् ।

> दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ।

इति स्मृतिविरोधात् । तस्मादर्थभानस्य कादाचित्कत्वाद्यथार्थाकारतैवार्थग्रहणं वाच्यम् । बुद्धिवृत्तौ तथा दृष्टत्वात् । सा च तत्प्रतिबिम्बनं विनानुपपन्ना । यद्यप्यर्थाकारता बुद्धौ परिणामरूपा न प्रतिबिम्बरूपा । स्वभावौ विषयाभावेन
१५ तत्प्रतिबिम्बासंभवात् । तथापि पुरुषे प्रतिबिम्बरूपैव । विद्यमानवृत्तिमात्रग्राहके पुंसि तेनैवोपपत्तेः ।

> संलक्ष्यते यथा रक्तः केवलः स्फटिको जनैः ।
> रञ्जकाद्युपधानेन तद्वत्परमपूरुषः ॥

इति स्मृतेश्च । संस्कारशेषाया बुद्धेस्तु न प्रतिबिम्बः । वृत्त्यतिरेकेण प्रति-
२० बिम्बनासामर्थ्यात् । अतो नासंप्रज्ञातयोगानुपपत्तिः । एवं बुद्धावपि चित्प्रतिबिम्ब आवश्यकः । अन्यथा चैतन्यभानानुपपत्तिः । साक्षात्स्वदर्शने कर्तृकर्मविरोधात् । एवं च बुद्ध्यारूढस्यैवात्मनो घटादिवज्ज्ञेयत्वम् । अयमेव चिच्छायापत्तिश्चिदाकारतेति चोच्यते । उभावपि प्रतिबिम्बश्च बिम्बाकारो बुद्धेः परिणाम एव । स च साक्षिभास्यः । जलादावपि सूर्याद्याकारबुद्धिपरिणाम एव सूर्यादि-
२५ प्रतिबिम्बः । एवं चितिप्रतिबिम्बोपि वृत्त्याकारो बुद्धिपरिणाम एव सोयमभिमानात्मको द्विविधोपि । एतेनारूपत्वात्प्रतिबिम्बासंभव इति परास्तम् । अस्मादेव परस्परप्रतिबिम्बरूपाद्दोषादेकताभ्रमोहं कर्ता सुखी जानामीत्यादिरूपः । यच्चैतन्ये बुद्धिवृत्त्याकारतारूपं बुद्धिवृत्तिसारूप्यमेतदेव चैतन्यस्यार्थोपरक्तवृत्ति-

---

14. O. om. यद्यपि.
14. A. om. न प्रतिबिम्बरूपा.
20. A. reads असंप्रज्ञाते for असंप्रज्ञात.
20–1. A. om. एवं बुद्धा॰ नुपपत्तिः.
22. A. om. च.

भानम् । तदाकारश्च घटमहं जानामीत्यादिः । वृत्त्यंशस्य दोषविशेषवशात्प्रमोषेऽयं घट इत्यप्याकारः । यद्यपि चित्प्रतिबिम्बेनैव तत्प्रतिबिम्बविशिष्टाया वृत्तेर्विषयाकारत्वेनैव वृत्तिप्रकाशनं वक्तुं शक्यते तथापि जानामीत्येवं बुद्धिवृत्तौ भासमानं प्रतिबिम्बचैतन्यं स्वज्ञेयं न संभवति । कर्तृकर्मविरोधात् । अतस्तत्र
५ बिम्बचैतन्यत्वेन भानावश्यकत्वे सर्वत्र तथैव कल्पनं युक्तम् । ननु चित्तवृत्तीनां प्रतिनियततत्तत्पुरुषमात्रबोध्यत्वे किं नियामकमिति चेन्न । बुद्धिपुरुषयोः प्रतिनियतानादिस्वस्वामिभावसंबन्धस्य नियामकत्वात् । तथा हि । यथायस्कान्तमणेः स्वस्मिन्नेवायःसंनिधीकरणाच्छल्यनिष्कर्षास्यमुपकारं कुर्वन्स्वामिनः स्वं भवति भोगसाधनत्वादेवं चित्तमप्ययःसदृशविषयस्य स्वस्मिन्संनिधीकरणेन
१० दृश्यत्वलक्षणमुपकारं कुर्वन्पुरुषस्य स्वं भवति स्वामिनो भोगसाधनत्वात् । अतो न परचित्तवृत्तिसारूप्यम् । परस्य तयोः स्वस्वामिसंबन्धाभावात् । अयमेव भोक्तृभोग्यभावः । न चास्य प्रलयेऽभावात्कथमनादित्वम् । स्वभुक्तवृत्तिवासनावत्त्वस्यैव बुद्धौ पुरुषस्वत्वरूपत्वात् । इदमेव च तस्य भोग्यत्वम् । एवं चानयोश्चित्तपुरुषयोरनादिरेवायं संबन्धः । प्रलयेऽपि कारणावस्थतया चित्तं तिष्ठत्येव ।
१५ अन्यथा धर्माधर्मसंस्कारादीनामाश्रयं विना प्रलयेऽवस्थानानुपपत्तेः । सृष्टिकाले च पुनस्तादृशवासनाविशिष्टमेव तत उत्पद्यते तत्पुरुषसंबद्धमेव । वर्षापगमे मृद्भावमुपगतोऽपि मण्डूकः पुनर्वर्षाकाले तथैव प्रादुर्भवति यथा तद्वत् ॥ ४ ॥

चित्तस्य कल्यादिलक्षणबहुवृत्तिकत्वे सत्यपि निरोद्धव्या वृत्तयः पञ्चप्रकारा एवेत्याह—

## वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥

यैः प्रमाणादिलक्षणव्यापारैश्चित्तं जीवति ते तद्वृत्तय उच्यन्ते द्विजादीनां याजनादिवत् । वृत्तय इत्युक्तावयवभेदसमूहपरमिति बहुवचनम् । स च समूहो वक्ष्यमाणपञ्चप्रकारावयवक इत्यर्थः । तत्र क्लिष्टावदक्लिष्टा अपि निरोद्धव्या एव । तत्राक्लिष्टा उपादाय क्लिष्टानां निरोधः । तासां परवैराग्ये-
५ णेति क्रमः ।

सत्त्वेनान्यतमे हन्यात्सत्त्वं सत्त्वेन चैव हि ।

इति स्मृतेः । तत्र सर्वासां वृत्तीनां त्रिगुणात्मकत्वेऽपि दुःखाख्यक्लेशफलिका विषयाकारवृत्तयः क्लिष्टाः । यतो विषयाकारवृत्तिजन्यतृष्णया तत्साधनार्थं

3. A. reads च for एव.
3. A. reads एव for एवम्.
5. A. om. बिम्ब.
8. A. om. शल्य.
11. B. reads परस्परयोः for परस्य तयोः.
13. A. reads सत्त्व for स्वत्व.

यतमानस्य परपीडानुग्रहाभ्यां धर्माधर्मोत्पत्तौ दुःखधारा भवति । यास्त्वविद्याकाम-कर्मादिरूपकारणनाशकत्वात्सत्त्वादिगुणारम्भा विवेकख्यातितत्साधनसंबद्धास्ता अक्लेशफलकत्वादक्लिष्टाः । तत्राद्यास्तामस्यः । अन्त्याः सात्त्विक्यः । क्लिष्टाक्लिष्टमिश्रा राजस्यस्त्वत्रैवान्तर्भूताः । तथा हि । क्लिष्टप्रवाहे पतिता आक्लिष्टा अक्लिष्टशब्देनैव गृहीता भवति । एवमक्लिष्टच्छिद्रेषु क्लिष्टाः क्लिष्टशब्देनैव गृहीता भवन्ति । ताभ्यां क्लिष्टाक्लिष्टा एव संस्काराः संस्कारश्च पुनर्वृत्तय इत्येवं संसारानर्थबीजं जीवभ्रामकं चक्रमनिशमावर्तते । तस्य च स्तम्भने प्रलये च निरोध एवोपायः । यतो निरोधावस्थं चित्तं क्रमेण समाप्यमानाधिकारमात्माविभागेन निर्दुःखतया तिष्ठति व्युत्थानपर्यन्तं संप्रज्ञाते । असंप्रज्ञाते त्वभ्यासपाटवेनाखिलसंस्कारैः सहात्यन्तिकं लयं गच्छतीति दिक् ॥ ५ ॥

ताश्च पञ्चप्रकारा वृत्तय आह—

## प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

स्पष्टम् । वृत्तयश्चैतैः प्रकारैः पञ्चप्रकारत्वात्पञ्चावयविका एवेति सिद्धम् ॥६॥

तत्र प्रमाणान्याह—

## प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

अनधिगततत्त्वबोधः प्रमा । अविसंवादिज्ञानं वा प्रमा । तत्करणं प्रमाणमिति सामान्यलक्षणम् । तत्रेन्द्रियरूपसंचारमार्गेण चित्तं बाह्यवस्तूपरागात्सर्ववस्तुवासनावत्त्वेन तद्रूपाकारतया परिणमते । स च परिणाम इन्द्रियेण सहैव । चित्तस्य शङ्खपैत्याद्याकारतायां नयनादिगतपित्ताद्यन्वयात् । एतावतैव चक्षुरादीनां करणत्वोपचारः । तत्र तद्विषया उपरक्तवस्त्वाकारा सामान्यविशेषात्मनो न तु सामान्यमात्ररूपस्य नापि विशेषमात्ररूपस्य नाप्युभयवतोऽवयविरूपस्यार्थस्य सामान्योपसर्जना विशेषावधारणप्रधाना या चित्तस्य परिणामभूता प्रभावद्द्रव्यरूपा वृत्तिः सा प्रत्यक्षं प्रमाणम् । अर्थस्येत्यनेन विपर्ययव्यावृत्तिः । विशेषावधारणप्रधानेत्यनेनानुमानागमयोर्व्यावृत्तिः । उपरक्तवस्त्वाकारेत्यनेन स्मृतिव्यावृत्तिः । तस्य च वृत्तिरूपकरणस्य फलं पुरुषनिष्ठश्चित्तवृत्तिविषयकस्तया वृत्त्या विशिष्टो बोधः । पुरुषार्थमेव करणानां प्रवृत्तेः । स च बोधो विषयदेशे

1. B. reads यजमानस्य for यतमानस्य.
4. B. C. read मिश्र for मिश्रा.
5. B. reads क्लिष्टशब्देन for अक्लिष्टशब्देन.
21–2. C. reads सामान्योपसर्जनावयविरूपस्यार्थस्य for अवयवि॰पसर्जना.
22. B. C. read प्रभाव for प्रभावत्.
26. A. C. read मनिशिष्टः for विशिष्टः.

एव । विभुत्वात् । वृत्तिपुरुषयोर्विशेषः क्षीरेक्ष्वादिमाधुर्यस्येव विवेकिनामनुभव-गोचरः । यद्यपि पुरुषस्वरूप एव बोधस्तथापि परेषां गगने श्रोत्रमितिवद्गगनकार्यं श्रोत्रमितिवच्च विशिष्टाविशिष्टभेदेन पुरुषनिष्ठ इति फलमिति चेत्याद्युपपाद्यम् । वृत्तेः करणत्वं च फलायोगव्यवच्छिन्नकारणत्वरूपम् । चक्षुरादीनां वृत्त्याख्यप्रमा-
५ करणत्वं च व्यापारवत्कारणत्वरूपम् । तदुक्तमाभियुक्तैः—

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च ।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते ।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात् ॥
१० साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूत्रितम् ।

इति । वृत्तेस्तदाकारचैतन्यस्य च साक्षात्परंपरया वा बुध्यात्मकत्वेन कार्य-कारणयोः सामानाधिकरण्यं बोध्यम् । एवमनुमेयसाध्यविशिष्टपक्षस्य साध्यव-त्त्वेन तुल्यजातीयेषु सपक्षेष्वनुवृत्तो विजातीयविपक्षेभ्यो व्यावृत्तस्तस्यैव पक्षे सं-बद्धो यो हेतुस्तद्विषयज्ञानजन्या सामान्यावधारणप्रधाना वृत्तिरनुमानम् । प्र-
१५ त्यक्षव्यावृत्तस्वरूपकथनं सामान्येत्यादि । यथा चन्द्रतारकं गतिमत्, देशान्तर-संयोगात् । अन्वये दृष्टान्तश्चैत्रः । व्यतिरेके त्वमाविरगतिर्विन्ध्यः । एवं भ्रमप्रमा-दविप्रलिप्साकरणापाटवादिदोषराहित्यरूपाप्तत्वविशिष्टेन वक्त्रा दृष्टोऽनुमितः श्रुतो वार्थः परस्य स्वबोधसदृशबोधोत्पत्त्यर्थं यः शब्देनोपदिश्यते तत्र शब्दज्ञा-नात्तदर्थाकारा श्रोतुर्वृत्तिरागमः । यस्य शब्दस्य दृष्टानुमितार्थकत्वाभावेनाश्र-
२० द्धेयार्थो वक्ता स आगमश्चैत्यं वन्देतेत्यादिः शब्दरूपप्रमाणवृत्तिजननासमर्थः । मूलभूतवेदे दृष्टानुमितार्थत्वनिर्णयान्मूलकमन्वादागमः प्रमाणमेव । इतरप्र-माणानि त्वेष्वेवान्तर्भवन्तीति निरूपितं सांख्यसूत्रवृत्तौ ॥ ७ ॥

विपर्ययं लक्षयति—

## विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

१ विपर्यय इति लक्ष्यम् । मिथ्याज्ञानमिति लक्षणम् । मिथ्येत्यस्य विवरण-मतद्रूपप्रतिष्ठमिति । अतद्रूपोऽस्वसमानाकारो यो बाह्यो विषयस्तत्प्रतिष्ठं तद्वि-शेष्यकमित्यर्थः । भ्रमस्थले ज्ञानाकारस्यैव सद्रूपस्याऽनिर्वचनीयस्य वा विषयं समारोपात् । अनुभवासिद्धसंनिकृष्टज्ञानाकारं विहायासंनिकृष्टदूरस्थरजता-रोपे मानाभावात् । तथा दृष्टमधुना नास्तीति स्वरूपतो बाधानुभवानुपपत्तेश्च ।

---

12. D. O. read अनुमेयस्य for अनुमेय.
22. A. reads विवृत्तौ for वृत्तौ.
27-line 5 on Page 228. O. om. भ्रमस्थले॰ नास्त्यत्वात्.

केचित्तु मिथ्यात्वे हेतुगर्भविशेषणमतद्रूपेत्यादि । न विद्यते तद्रूपस्य ज्ञानाकारस्य प्रतिष्ठा चिरस्थितिर्यत्र । अग्रेतनबाधज्ञानबाध्यत्वादित्यर्थमाहुः । मिथ्यात्वञ्चाद्धभोजिवत्तद्रूपप्रतिष्ठमित्यस्य तद्रूपाप्रतिष्ठमित्यर्थः । यज्ज्ञानप्रतिभासिरूपं तद्वत्त्वं तत्प्रतिष्ठा तदाश्रयत्वं तदभाववद्विशेष्यकमित्यर्थ इत्याहुः । ननु
५ कुतो न स प्रमाणमिति चेन्न । सदर्थविषयतया बलवता प्रमाणज्ञानेन बाध्यत्वात् । यथा सद्विषयेणैकचन्द्रदर्शनेन प्रमाणेन द्विचन्द्रदर्शनस्य बाध्यत्वम् । एतेनोत्तरेणोपजातविरोधिना ज्ञानेन न पूर्वं बाधनीयम् । किं तु पूर्वेणैवानुपजातविरोधिना परमित्यपास्तम् । किं च यत्र पूर्वापेक्षा परोत्पत्तिस्तत्रैवम् । इह तु स्वकरणादन्योन्यानपेक्षे ज्ञाने जायेते । तेनोत्तरस्य पूर्वमनुपमृद्योदयमना-
१० सादयतस्तद्बाधात्मैवोदयो न तु पूर्वस्योत्तरबाधात्मा । तस्य तदानीमप्रसक्तेः । तस्मादनुपजातविरोधिता बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्व इति दिक् । सेयं विपर्ययवृत्तिरेवाविद्याऽस्मितारागद्वेषाभिनिवेशरूपपञ्चपर्वाऽविद्या संसारानर्थबीजम् । एतत्पञ्चकस्यैव क्लेशसंज्ञा । रागादीनां मिथ्याज्ञानत्वाभावेपि तद्रूपाविद्यानुगतत्वात्तत्त्वम् । अत एव तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञा
१५ इति सर्वथा हेयाः । न च मोहास्मितयोः पर्यायत्वे मोहस्य वृत्तिरूपत्वात्कथं शान्तघोरमूढत्वं वृत्तीनाम् । धर्मधर्मिणोरभेदेनात्र वृत्तीनां विपर्ययादिरूपत्वव्यवहारात् । वस्तुतो वृत्तयो विपर्ययादिमत्य एवेति दिक् । अविद्याद्यश्चाग्रे चित्तमलमसंज्ञेन वक्ष्यन्ते ॥ ८ ॥

विकल्पं लक्षयति—

२० **शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

शब्दश्च तज्जन्यज्ञानं च ते अनुपातिनी यस्य सः । एवं च बाधाबाधकालाविशेषेण सदैव तदुभयजनको वस्तुशून्यः प्रत्ययो विकल्प इत्यर्थः । शब्दज्ञानजन्य इत्यर्थ इति मिश्राः । इदमेव भाष्यसंमतम् । स न प्रमाणान्तर्भूतः । वस्तुशून्यत्वात् । नापि विपर्ययान्तर्भूतः । ज्ञानस्य याथार्थ्ये सति यादृशस्तथाथा-
२५ र्थ्यनिबन्धनो व्यवहारः शब्दप्रयोगरूपस्तादृशव्यवहारस्येतोपि दर्शनात् । विपर्ययस्तु नैवम् । बाधोत्तरमिदं रजतमिति शब्दप्रत्यययोरभावात् । एवं च विपर्ययलक्षणे शब्दज्ञानानानुपातित्वं विशेषणं देयम् । यथा चैतन्यं पुरुषस्य स्वरूपमिति । अन्यथा चितेरेव पुरुषत्वाद्भेदनियतसंबन्धरूपस्य षष्ठ्यर्थस्याप्रतीत्यापत्तिः । भवति च चैत्रस्य गौरिति यथार्थशब्दवदत्रापि षष्ठ्यर्थे वृत्तिः । तस्यास्ततो
३० विवेकिनामपि बोधश्च । एवं प्रतिषिद्धवस्तुधर्मा निष्क्रियः पुरुष इति । शास्त्रेण प्रतिषिद्धा वस्तुधर्माः सुखादयो यत्रेति क्रियारहित इति च तदर्थः । अन्यथाऽभावस्याधिकरणमात्ररूपत्वेनाधाराधेयभावानुपपत्तिः । एवं तिष्ठति बाणः स्था-

---

4. A. reads रजतत्वम् for तद्वत्त्वम्.

स्याति स्थित इति । अत्र गतिनिवृत्तिरभावरूपत्वाद्वाणवृत्तित्वेन कल्पिता, तत्रापि भावरूपता, तत्रापि पूर्वापरभाव इति कल्पनापरम्परा । पूर्वापरीभूतकर्मप्रचयस्यैकफलावच्छिन्नस्यावगतेः । एवमनुत्पत्तिधर्मा पुरुष इत्यत्रोत्पत्तिधर्मस्याभावमात्ररूपः पुरुषेऽवगम्यते न तु पुरुषान्वय्यनुत्पत्तिरूपो धर्मोऽस्ति । शब्देन त्वनुत्पत्तिधर्मो
५ यस्येत्यर्थकेन विकल्पितः स धर्मः प्रतीयते । तन्मूलकश्चायं व्यवहारः । पुरुषस्य सर्वधर्मशून्यत्वात् । एवं खपुष्पशशशृङ्गादयोऽपि विकल्पा एव । वैशेषिकाणां त्वसावाहार्यज्ञानविशेषरूप इति दिक् ॥ ९ ॥

निद्रां लक्षयति—

## अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

१० निद्राया वृत्तित्वस्फुटीकरणाय पुनर्वृत्तिपदम् । तस्या वृत्तित्वे वादिनां विप्रतिपत्तेः । जाग्रत्स्वप्नवृत्तीनामभावस्य यः प्रत्ययः कारणं चित्तसत्त्वरजसोराच्छादकस्तमोद्रव्यरूपस्तदालम्बना तद्विषया स्वपिमीत्याकारा वृत्तिरित्यर्थः । तामेव बुध्यमानः पुरुषः सुषुप्तस्थानोऽन्तःप्रज्ञ इत्युच्यते श्रुतिभिः । ननु सा वृत्त्यभाव एवास्तु किं तस्या वृत्तित्वकल्पनेनेति चेन्न । जागरे स्मरणविशेषदर्शनेन
१५ तस्या वृत्तिरूपत्वकल्पनात् । तथा हि । यस्यां सत्त्वसचिवतमस आविर्भावः सा सात्त्विकी निद्रा । तदुत्थितो ह्येवं स्मरति सुखमहमस्वाप्समिति । ततस्तदभिनयति निर्मलं मे मनः प्रज्ञां सूक्ष्मार्थवृत्तिप्रतिबिम्बग्राहिणीं करोतीति । यदा रजःसचिवतमस आविर्भावस्तदा राजसी निद्रा । तदुत्थितो ह्येवं स्मरति दुःखमहमस्वाप्समिति । तदभिनयत्यकर्मण्यं मे मनो भ्रमत्यनवस्थितमिति ।
२० तमःसचिवतमसा तामसी निद्रा । तदुत्थित एवं स्मरति गाढं मूढोऽहमस्वाप्समिति । तदभिनयति गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसमत्यन्तं मुषितमिव परैरपहृतमिव कर्मानिच्छु चेति । तदिदमस्वाप्समिति स्मरणमसत्यनुभवे न स्यात् । ननु वृत्तिं विनापि स्वापस्य साक्षिभास्यत्वेनैव स्मरणमस्त्विति चेन्न । तद्विषयस्मृतेश्चित्ताश्रितत्वाभावापत्तेः । अन्येनान्यदृष्टास्मरणात् । साक्षिणि तु स्मरणम-
२५ संभवि । संस्काराभावात् । स्मृत्याख्यपरिणामासंभवाच्च । अत एव ।

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । (कैव. १५।१८)

इति श्रुत्या सुषुप्तेऽपि भोग्यसत्तोक्ता । न च न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् (बृ. ४।३।२३) इति सुषुप्तश्रुतिविरोधः । तया हि तदानीं ज्ञानाभाव एवावगम्यत इति वाच्यम् । अर्धमसमग्रभेदेन सुषुप्तिर्द्वैविध्यात् । अर्धपरा

10. A. reads स्पष्टी for स्फुटी.
12. A. C. read स्वपामि for स्वपिमि.
17. C. reads प्रज्ञा for प्रज्ञाम्.
17. C. reads ग्राहिणी for ग्राहिणीम्.
24. A. reads तत् for तु.

द्याया श्रुतिरन्यपरा द्वितीयेत्यविरोधः । तथाप्यावरकतमोमात्रगोचरा वृत्तिरस्त्येव । अत एव तत्रापि सुखमहमस्वाप्सं न किंचिदवेदिषमिति स्मृतिः । इतरवृत्त्युत्थदुःखाभावादेव च सुखमिति परामर्शः ।

जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।

इति स्मृतेश्च । सैषा निद्रावृत्तिरपीतरवृत्तिवत्सुखदुःखमोहात्मकतया समाधिप्रतिपक्षेति समाधौ निरोद्धव्येति बोध्यम् । यत्तु त्वङ्मनोयोगरूपकारणाभावात्सुषुप्तौ ज्ञानसामान्याभाव इति तन्न । इन्द्रियाद्युत्पत्तेः प्रागेव हिरण्यगर्भस्य ज्ञानोत्पत्त्या ज्ञानसामान्ये तस्य हेतुत्वाभावात् । गाढतमोरूपदोषेणेतरसर्ववृत्त्यभावस्यास्माभिरप्यङ्गीकारात् ॥ १० ॥

अथ स्मृतिं लक्षयति —

## अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥

पूर्वमनुभूतौ यौ विषयौ वृत्तितदारूढार्थविषयरूपौ तयोरसंप्रमोषोऽस्तेयमनपहरणं धर्मधर्म्यभेदान्नद्वती तदुभयविषया वृत्तिः स्मृतिरित्यर्थः । एवं च स देवदत्त इत्येव स्मरणाकारः । तत्ता च पूर्वानुभूततैव । यद्यपि समूहालम्बनात्मकनानापदार्थानुभवेपि दृश्यते कस्यचिदेव स्मरणं तथाप्यनुभवबलाद्विषयांशाप्रमोषस्वीकारोस्तु न तु वृत्त्यंशप्रमोषः । विषयोद्बोधकस्य नियमेन वृत्त्यंशोद्बोधकत्वात् । तथा हि । वृत्तिग्राह्यविषयं ज्ञानं चैतन्यरूपं विषयवृत्त्युभयाकारमतिबिम्बवत्स्वबिम्बाश्रये तज्जातीयमेव संस्कारमारभते । तादृशस्य च संस्कारस्याभिव्यञ्जककालाद्युद्बुद्धस्य स्वसमानाकारग्राह्यग्रहणोभयविषयकस्मृतिजनकत्वात् । समानाकारत्वेनैवानुभवसंस्कारस्मृतीनां कार्यकारणभावात् । एतेन स्मृतिर्ग्राह्यविषयैव वृत्तिविषयसंस्कारे मानाभावादिति प्रलपितमपास्तम् । ननु समानप्रकारकानुभवस्य स्मृतिं प्रति कारणत्वम् । प्रकृते च तव मतेऽयं घटो घटमहं जानामीत्यनुभवो विषयप्रकारकज्ञानविशेष्यकः । स्मृतिस्त्वयं स घट इत्याकारा विषयविशेष्यिका ज्ञानप्रकारिकेति तादृशानुभवेन नेदृशं स्मरणमिति चेन्न । लाघवेन समानाकारत्वेनैव कार्यकारणभावात् । न तु प्रकारतानिवेशोपि । गौरवात् । तदुक्तं भाष्ये ग्रहणाकारपूर्वा बुद्धिर्ग्राह्याकारपूर्वा स्मृतिरिति । पूर्वशब्दो विशेष्यपरः । बुद्धिरनुभवः । सा च द्विविधा भावितत्वेन सूचितस्मर्तव्यार्था

1. B. C. om. हि.
14. A. reads अनुभूता for अनुभूतता.
16. A. om. अपि after अनुभवे.

यथा स्वप्ने । तद्भिन्ना च यथा जाग्रत्समये । सर्वोऽपि स्वप्न एतज्जन्मनि जन्मान्तरे वा पूर्वदृष्टविषय एवेति बोध्यम् । सर्वाश्चैताः स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनां प्रभावाज्जायन्त इति स्मृतेरन्त उपन्यासः । सर्वाश्चैता वृत्तयश्चित्तद्रव्यस्य विषयाकारा द्रव्यरूपाः परिणामाः सुखदुःखमोहगुणिका रूपादिमत्यो भार्या इव पुरुषस्य भोग्याः । अतो निरोद्धव्याः । न च सुखात्मकत्वेनोपादेया एव किं न स्युः । सुखानुशयी सुखविषयो रागः, दुःखानुशयी द्वेषः, मोहः पुनरविद्येत्यग्रे वक्ष्यमाणत्वेन सुखस्यापि रागजनकत्वेन दुःखतया क्लेशत्वात् । आसां च निरोधे संप्रज्ञातासंप्रज्ञातयोगौ भवतः ॥ ११ ॥

अथासां निरोधे क उपाय इत्यत आह—

## अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

प्रयाजादीनामपूर्वरूपव्यापारभेदादिव चित्तस्थितिदोषदर्शनज्ञानप्रसादरूपव्यापारभेदाभ्यां समुच्चिताभ्यां तन्निरोध इत्यर्थः । यथा कदाचिन्नदी समुद्राभिमुखं वहति कदाचित्तद्वैपरीत्येन भूम्यभिमुखी तथैषा चित्तनद्युभयतो वहति मोक्षाय संसाराय च । तत्र यदा कैवल्याभिमुखी विवेकविषयनिम्ना तदा मोक्षार्था । यदा तु संसाराभिमुख्यविवेकविषयनिम्ना तदा संसारार्था । तत्र वैराग्येण विषयमार्गगं स्रोतः क्रमेण खिलीक्रियते शोषं प्राप्यते विवेकदर्शनाभ्यासेन च विवेकमार्गगं स्रोत उद्घाट्यते बलवत्क्रियते येन कैवल्यसागरे सा लीयत इत्युभयाधीनश्चित्तवृत्तिनिरोध इति भावः । उक्तं च गीतायाम्—

> असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
> अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ( गी. ६।३५ )

इति ॥ १२ ॥

तत्राभ्यासं लक्षयति—

## तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

तत्र तयोर्मध्ये वृत्त्यन्तरशून्यस्य चित्तस्य या हर्षशोकादितरङ्गरहितैकाग्रवृत्तिधारा सा स्थितिः । स्थिताविति च विषयसप्तमी । तदर्थो यो यत्नो वीर्योत्साहपरपर्यायः सोऽभ्यास इत्यर्थः । उक्तस्थितिसंपादनेच्छया श्रद्धावीर्यस्मृतिप्रज्ञादिरूपवक्ष्यमाणतत्साधनानुष्ठानविषयो यत्न इति यावत् ॥ १३ ॥

नन्वनादिव्युत्थानसंस्कारेण प्रतिबन्धात्कथमभ्यासस्तां संपादयेदत आह—

## स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥

स त्वभ्यासस्तु दीर्घकालं नैरन्तर्येण तपोब्रह्मचर्यविद्याश्रद्धादिसंपादितत्वरूपसत्कारवांश्च यथा भवति तथाऽऽसेवितः कृतो दृढभूमिः । व्युत्थानसंस्कारेण सहसानभिभूतस्थितिविषयो भवतीत्यर्थः ॥ १४ ॥

---

11. B. O. read दर्शनम् for दर्शन.

अथ वैराग्यं लक्षयति—

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥**

अपरवैराग्यं चतुर्विधं यतमानसंज्ञा व्यतिरेकसंज्ञैकेन्द्रियसंज्ञारूपवितृष्णात्रय-
५ रूपं वशीकारसंज्ञा च । तत्र वैराग्यसाधनानामर्जनरक्षणक्षयहिंसाद्यनन्तदोष-
दर्शनानां ज्ञानपूर्वमनुष्ठानमाद्या । विरक्तिर्दोषदर्शनादिति स्मृतेः । जितान्येतानी-
न्द्रियाण्येतानि जेतव्यानीति व्यतिरेकावधारणा द्वितीया । बाह्येन्द्रियविषयेषु
रागद्वेषादिक्षये सति मानापमानादिविषयकरागद्वेषापसारणं तृतीया । एत-
त्त्रितयाभ्यासेन हि विषयसंयोगेपि दोषदर्शनमप्रतिबद्धं जायते । वैराग्या-
१० द्दोषदर्शनमिति स्मृतेः । चतुर्थलक्षणमिदम् । रागाभावमात्रं तु न वैराग्यम् ।
रोगादिनिमित्तकारुचौ तत्रत्यरागाभावात् । उक्तवैराग्यत्रयमपि न निरोधहेतुः ।
तद्वैराग्यानन्तरमपि विषयसांनिध्येन चित्तक्षोभतः सौभर्यादेर्योगानिष्पत्तेः । स्त्रियो-
न्नपानमैश्वर्यमिति दृष्टविषये वितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तिरूपानुश्र-
विकविषये वितृष्णस्य पूर्वोक्तत्रिविधवैतृष्ण्याभ्यासवतो दिव्यादिव्यविषयसं-
१५ निधानेपि विषयदोषदर्शिनश्चित्तस्य दोषसाक्षात्काररूपप्रसंख्यानस्य बलवत्त्वा-
द्धेयोपादेयत्वबुद्धिशून्यत्वरूपा वशीकारसंज्ञा तद्वैराग्यमित्यर्थः । अनुश्रूयते गुरो-
रित्यनुश्रवो वेदः । तद्बोधित आनुश्रविकः । स्थूलदेहविरहेपि लिङ्गदेहेनैव
भोगभाजो महदाद्युपासका देवा विदेहाः । तद्भावो वैदेह्यम् । ये तु प्रकृतावा-
त्मत्वोपासनया सावरणब्रह्माण्डाद्बहिर्भूतं प्रकृत्याख्यावरणं लिङ्गदेहेन सह गता-
२० स्तेषां भावः प्रकृतिलयत्वम् । विदेहास्तु सावरणब्रह्माण्डान्तर्गता इति भेदः ।
ते च मलिनाल्पैश्वर्यभोगाः । प्रकृतिलयास्तु तेषामधीशाः स्वसंकल्पमात्र-
निर्मितसत्त्वप्रधाननिर्मलविषयभोगास्त ईश्वरकोटय उच्यन्ते । प्रलयकालीन-
प्रकृतिलयास्तु नेह गृह्यन्ते । तेषां भोगाभावात् । एतदपरं वैराग्यम् । उत्तरसूत्रे
परग्रहणात् ॥ १५ ॥

२५ परं वैराग्यमाह—

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥**

तद्वैराग्यमात्मसाक्षात्काराभ्यासाद्धेतोरुत्पद्यमानं सकलगुणेषु वैतृष्ण्यं
परं श्रेष्ठं वैराग्यमित्यर्थः । किमस्य श्रेष्ठत्वमिति चेत्–शृणु । पूर्वं विषयदोषदर्शना-
द्विषयेष्वेव वैराग्यं न तु ज्ञाने । यद्यपि ज्ञानेपि विनाशित्वादिदोषदर्शनं तदास्ति
३० तथापि तत्र नालंबुद्धिरूपं वैराग्यमविद्यानिवृत्त्याख्यतत्प्रयोजनेऽपेक्षासत्त्वा-

15. A. reads चित्त for चित्तस्य.
19. B. O. read भूतप्रकृत्याख्यावरण for भूतं प्रकृत्याख्यावरणम्.

त्। दृष्टानुश्रविकदोषदर्शी तेभ्यो विषयेभ्यो विरक्तः पुरुषसाक्षात्काराभ्यासादपरिणामित्वादिज्ञानरूपपुरुषविवेकेन स्थूलरूपव्यक्तसूक्ष्मरूपाव्यक्तधर्मकेभ्यः सत्त्वादिगुणेभ्यो विरक्तो भवति। एवं द्विविधं परस्पराभिन्नं वैराग्यम्। ततः समूलाविद्यानिवृत्तौ यदुत्तरं ज्ञानप्रसादरूपं वैराग्यं तच्छ्रेष्ठम्। यद्यपि सूत्रे वैतृष्ण्यं तृष्णाभावरूपमुक्तं तथाप्यभावस्याधिकरणावस्थाविशेषरूपत्वेन चित्तसंपद्दशावस्थैव तृष्णाभावः। यद्वा ज्ञानप्रसादेन वैतृष्ण्यगतविशेषानुमानाल्लिङ्गलिङ्गिनोरभेदोपचाराद्वाऽप्य एवमुक्तम्। यस्मिन्नुदये सति निष्पन्नात्मज्ञानो योगी "प्रापणीयं ज्ञानं प्राप्तमविद्यादयः क्षेतव्याः क्लेशाः क्षीणा देहाद्देहान्तरसंचाराख्यो भवसंक्रमो धर्माधर्मकार्यभूतो विच्छिन्नो न पुनर्भविता यस्याविच्छेदाज्जननमरणधारा" इति मन्यते स ज्ञानप्रसादो ज्ञानस्यैव परकाष्ठा 'दुःखात्मिका विवेकख्यातिरपि शाम्यतु' इत्येवंरूपा तत्परं वैराग्यं यस्य नान्तरीयकं नियतं फलं कैवल्यमिति दिक्॥ १६ ॥

अथाभ्यासवैराग्यरूपोपायद्वयेन निरुद्धराजसतामसवृत्तेः कतिप्रकारः संप्रज्ञातयोग इत्याशङ्कायामाह—

## वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः ॥ १७ ॥

साक्षात्काररूपवितर्कादिभिरनुगमात्संप्रज्ञातो वितर्कादिभूमिभेदैश्चतुष्प्रकार इत्यर्थः। अत्र भाष्ये वितर्कविकलः सविचार इत्येव प्रयोगाद्रूपानुगमादिति सूत्रपाठः प्रामादिकः। वस्तुतस्तु चतुर्थोऽस्मितामात्र इत्युक्तं न तु सास्मिता इति। तेन मात्रार्थकरूपशब्दघटितः पाठो युक्त इति। तत्र वितर्कश्चित्तस्य स्थूल आलम्बन आभोगः स्वरूपसाक्षात्कारः। तथा हि यन्निजं शरीरं वा चतुर्भुजादिकं वा स्थूलं षड्विंशतितत्त्वसंघातमाश्रित्य प्रथमं भावना प्रवर्तते तदालम्बनं स्थूलम्। अदृष्टजातीयचैतन्यपर्यन्तेषु विवेकेन पूर्वं चिन्तनासंभवात्। योगबलादेव हि तानि पश्चात्साक्षात्क्रियन्ते। एवं च स्थूलभूतेन्द्रिययोरदृष्टाश्रुतामतविशेषसाक्षात्कारः सवितर्कः। वितर्को विपरीततर्कणम्। तत्र शब्दार्थज्ञानविकल्पादित्यग्रे स्फुटीभविष्यति। सवितर्कनिर्वितर्कौ चास्य वितर्कस्यावान्तरभेदौ वक्ष्यति। अदृष्टाश्रुतादीनां साक्षात्कारो योगबलादेवेत्युक्तम्। विचारस्तु तत्रैवालम्बने भूतेन्द्रियकारणत्वेनानुगता ये पञ्चतन्मात्राहंकारमहत्प्रकृतिरूपा उत्तरोत्तरसूक्ष्मा अर्थास्तदाकारत्वात्सूक्ष्मचित्तस्याभोगः सूक्ष्मगता-

---

2. A. reads सूक्ष्माख्य for सूक्ष्मरूप.
6. B. reads विशेषण for विशेष.
18. A. C. read सास्मित for सास्मिता.
20. A. reads निज for निजम्.
21. A. reads स्थूल for स्थूलम्.

शेषविशेषसाक्षात्कारस्तदनुगतः सविचारः। सूक्ष्मवस्तुपर्यन्तं विशेषेण चरणं विचारः। सविचारनिर्विचारौ चास्य विचारस्थावान्तरभेदौ वक्ष्यति। आनन्दस्तु तत्रैवालम्बने चित्तस्य सूक्ष्मभूम्यारोहात्सत्त्वप्रकर्षेण जायमाने ह्लादाख्यसुखविशेषे आभोगः साक्षात्कारः स आनन्दविषयत्वादानन्दः। तदनुगतः सानन्दः।
५ अत्राहं सुखीत्यानन्दगोचरैव वृत्तिः। यत्त्वानन्दशब्देन तद्वानिन्द्रियवर्ग इति तन्न। ततः सूक्ष्मपञ्चतन्मात्रादियोगानन्तरं पुनः स्थूलारोहस्यानौचित्यात्। एवमग्रेऽस्मितापदस्याहंकारपरतया व्याख्यानमपि चिन्त्यम्। अस्मिता तु केवलपुरुषविषया संवित्साक्षात्कारोऽस्मीत्येतावन्मात्राकारा देहादिभिन्नोऽस्मीत्येतावन्मात्राकारा वा। अस्य जीवात्मपरमात्मविषयकत्वेन द्वैविध्यं वक्ष्यते। विविक्तचे-
१० तनाकारस्यैवास्मिताशब्देनोपलक्षणात्तदनुगतः सास्मित इति। सोपाधिकेश्वरसंप्रज्ञातस्तु सविचारे प्रवेशमर्हति। क्वचित्त्वानन्दं विचारे प्रवेश्य त्रेधा विभाग एवोक्तः। तत्र पूर्वपूर्वभूमिकात्यागेनोत्तरोत्तरभूम्यारोह एकत्रैवालम्बने कार्यः। अन्यथा पूर्वपूर्वोपासनात्यागदोषापत्तेः। चित्तचाञ्चल्यदोषापत्तेश्च। वितर्कादिक्रम औत्सर्गिकः। एकदा चित्तस्य परमसूक्ष्मे प्रवेशासंभवात्।

१५ स्थूले विनिर्जितं चित्तं ततः सूक्ष्मे निवेशयेत्।

इति स्मृतेः। धानुष्कादौ तथा दृष्टत्वाच्च। तत्र स्थूलादिविषयरागे उत्तरभूमौ चित्तसमाधानासंभवः। अतः स्थूलादिसाक्षात्कारे तत्र तत्र दोषदृष्ट्योत्तरोत्तरभूम्यारोहः। यदि तु कस्यचिदीश्वरप्रसादादाद्यावेवोत्तरभूम्यारोहो भवति तेन पूर्वभूमिकाभ्यासस्तत्सिद्धिकामनां विना न कार्यः। तासिद्धयश्चैतदन्यसिद्धयोऽपि
२० भवन्तीत्यन्ये। जपादिजन्याद्ध्रुवादीनां चतुर्भुजादिसाक्षात्काराद्यं सवितर्को विलक्षणः। तेषां हि तपोऽभ्यासादितुष्टः परमेश्वरः स्वयं शरीरं निर्माय पुरः प्रकटीभूय वागादिव्यवहारं चक्रे। योगिनस्तु योगबलेन श्वेतद्वीपादिस्थमेव तच्छरीरमन्यत्र स्थिताः पश्यन्ति तद्गतं बाह्याभ्यन्तरमतीतादिकं गुणादि च पश्यन्तीति। न च स्थूले प्रथम आलम्बने कथं सूक्ष्मदृष्टिर्यथार्था। सर्वेषां षड्विंशतितत्त्वकार्य-
२५ तया कार्यकारणयोश्चाभेदेन तद्रूपत्वात्। तथापि कार्यरूपताऽस्थिरा। तदपेक्षया कारणरूपता सत्या। यद्यपि सुखदुःखमोहा अपि सर्वत्र तथापि सुखरागेणैव संसारादात्मदर्शनप्रतिबन्धाच्च तदेवाशेषतो द्रष्टव्यमित्यानन्दमात्रे तदुपदेशः, येन तत्रापि दोषदर्शनेन योगजासिद्धिष्वपि वैराग्यं भवत्वित्याशयेन। अस्मिता चरमभूमिका। तदुत्तरं ज्ञातव्याभावात्। तत्रापि पूर्वं जीवात्मविषयाऽस्मिता।
३० ततः परमात्मविषया। सूक्ष्मतरत्वात्। जीवस्वरूपज्ञानं हि प्रत्यक्षम्। तत्रापरिच्छिन्नकूटस्थत्वादिज्ञानस्यैव तत्साक्षात्कारत्वात्। तत्रान्त्यः कौर्मे उक्तः—

---

3. A. reads प्रकर्षेऽ for प्रकर्षेण.

यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम् ।
मामेकं स महायोगी भाषितः पारमेश्वरः ॥

इति ।

यत्र साक्षात्प्रपश्यन्ति विमुक्ता विश्वमीश्वरम् ।

५इति च । कारणरूपेण विभुत्वेन च सर्वत्रानुगमादस्मिताया अचेतनघटाद्यालम्बनेष्वपि संभव इति दिक् । एवं च पूर्वपूर्वभूमिषूत्तरोत्तरभूमिविषयस्यापि चिन्तनादाद्यचतुष्टयानुगतः । उत्तरोत्तरभूमौ च पूर्वपूर्वपरित्यागाद्द्वितीयस्यानुगतः । तृतीयो द्व्यनुगतः । चतुर्थस्त्वस्मितामात्र इति । तत्राद्ये तमयःपिण्डवदेकीभावेन सर्वेषां भानम् । अत्र सामान्यतो विचारादित्रयविषयग्राहकतामात्रेण तदनुगत-

१०त्वमुक्तम् । अतो न सांकर्यम् । चत्वारोऽप्येते सालम्बनाः सबीजा योगा इत्युच्यन्ते ध्येयरूपालम्बनयोगादिति दिक् ॥ १७ ॥

अथासंप्रज्ञातस्य क उपायः किं च स्वरूपमित्याकाङ्क्षायामाह—

## विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥

वृत्त्यापि विरम्यतामिति प्रत्ययो विरामप्रत्ययः परवैराग्यम् । तस्याभ्यासा-

१५दौत्सुक्यादजायत इत्युपायकथनम् । तदभ्यासः पूर्वो यस्येति विग्रहः । संस्कारशेष इति स्वरूपकथनम् । अन्य इति लक्ष्यम् । असंप्रज्ञात इत्यर्थः । सर्ववृत्तिविलये संस्कारशेषो निरोधश्चित्तस्य यत्र स समाधिरसंप्रज्ञातः । तस्योक्तं परं वैराग्यमुपायः । सालम्बनो ह्येकाग्रतारूपोऽभ्यासो वृत्तिरूपत्वेन विरोधित्वात्तदुत्पत्तये समर्थ इति परवैराग्याख्यश्चिन्तनीयवस्तुरहितो विरा-

२०मप्रत्यय एवाखिलध्येयवैराग्यरूपो ध्येयार्थशून्येन तेन साधनतयाश्रीयते । एवं हि कृतवैराग्याभ्यासं चित्तं निर्विषयं वृत्तिरूपकार्याकरणादभावप्राप्तमिव भूतवद्भवति । अत एवोऽसंप्रज्ञातो जन्मबीजकर्मशून्यत्वात्स इत्युच्यते ॥ १८ ॥

सोयं पूर्वाचार्यैरुपायप्रत्ययो भवप्रत्ययश्चेति द्विधोक्तः । तत्राद्यो योगिनामेवेति बहुवक्तव्य इति सूचीकटाहन्यायेनान्त्यं प्रथमं निरूपयति—

## २५ भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

भवो जन्म । तदेव प्रत्ययः कारणं यस्येत्यर्थः । तत्र स्थूलशरीरनैरपेक्ष्येण बुद्धिवृत्तिमन्तो महदादयो देवाः । तेषां साधनानुष्ठानं विनैवासंप्रज्ञात एतद्देहपातानन्तरं तत्तत्त्वे प्रादुर्भावरूपजन्मनिमित्तको भवति तत्तत्स्थानसादृश्येनौत्पत्तिकाज्ज्ञानात् । ते हि देवेनैव प्रलये कल्पान्तिमसर्गकालेऽपि स्वसंस्कारमात्रशेषेण निरोधा-

2. B. reads परमेश्वरः for पारमेश्वरः.
18. B. reads पर for परम्.
21. B. O. read निर्बिजम् for निर्विषयम्.

वस्येन चित्तेन कैवल्यपदमिव प्राप्नुवन्तो व्युत्थानकाले देवभावयोग्यं देवभावप्रापकसंस्कारफलमैश्वर्यभोगं प्रारब्धकर्मयन्त्रिता अतिवाहयन्ति ततो मुच्यन्ते। तथेश्वरोपासनया प्रकृतिदेवतोपासनया वा ब्रह्माण्डावरणानि भित्त्वा लिङ्गशरीरेण सह प्रकृत्यावरणं गतास्ते प्रकृतिलयाः। तेऽप्यसमाप्तकार्यत्वात्साधिकारे
५ चेतस्युपासनाबलेन प्रकृतिलीने संस्कारमात्रशेषतया कैवल्यपदमिवानुभवन्ति तावद्यावदधिकारशेषवशाच्चित्तं व्युत्थितं न भवति व्युत्थानोत्तरं च ते तत्रैव भोगेनाधिकारसमाप्तौ मुच्यन्ते। यत्तु

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकाश्च शतं पूर्णं सहस्रं त्वाभिमानिकाः॥
१० बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः॥

इति तत्त्विन्द्रियाद्युपासकानामनुत्पन्नज्ञानानां कर्मदेवानां तत्तत्पदावस्थितिकालपरिच्छेदकम्। न तु तेषामसंप्रज्ञातसमाधिकालपरिच्छेदकम्। इन्द्रियाद्युपासकानां तत्तदभिमानिसूर्यादिपदप्राप्तेरन्यत्र श्रवणात्। संप्रज्ञातस्य तु न
१५ भवप्रत्ययरूपो विशेषः। धारणाध्यानसमाधीनां संप्रज्ञातेऽन्तरङ्गत्वेन तेषां निष्पत्तौ तत्रैव जन्मनि संप्रज्ञातावश्यंभावादिति दिक्॥ १९॥

अथ द्वितीयमसंप्रज्ञातं तदधिकारिणं चाह—

## श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्॥ २०॥

इतरेषां विदेहप्रकृतिलयातिरिक्तानां देवानां वा मनुष्याणां वा न जन्म-
२० मात्रादसंप्रज्ञातो भवति किं तु श्रद्धादिपञ्चकेभ्य एवेत्यर्थः। तत्पञ्चकसंपत्तिमन्तो हि योगिनः। तत्र श्रद्धा योगे प्रीतिर्मे भूयादित्यभिलाषरूपश्चेतसः संप्रसादः। सा हि कल्याणी समर्था मातेव योगप्रतिबन्धसहस्राणितिरस्कारेण योगिनं पाति। ततः श्रद्धायुक्तस्य तस्य विवेकार्थिनो वीर्यं धारणारूपं भवति। ततः प्राप्तधारणस्य स्मृतिर्ध्यानमुपतिष्ठते। तदुपस्थितावनाकुलं चित्तं क्रमेण समाधिमा-
२५ क्रवति। एवं धारणाद्यङ्गत्रयात्संप्रज्ञातयोगवत आत्मतत्त्वसाक्षात्काररूपो विवेक उपजायते। येन यथार्थं वस्तु सम्यग्जानाति। ततस्तत्साक्षात्काररूपाभ्यासात्तद्विषयवैराग्ये सत्यसंप्रज्ञातः समाधिरिति भावः। ते योगिनस्त्रिविधा मृदूपायो

---

1. B. reads पदमिव कैवल्यम् for कैवल्यपदमिव.
17. A. reads असंप्रज्ञातसमाधिम् for असंप्रज्ञातम्.
18. C. reads पूर्वः for पूर्वकः.
22. B. reads याति for पाति.
26. B. C. read यथार्थ for यथार्थम्.
26. A. C. om. रूप.

मध्योपायोऽधिमात्रोपाय इति । उपायः श्रद्धादिः । तस्याधिमात्रतातिप्रमाणता । इतरे प्रसिद्धे । ते प्रत्येकं त्रिविधा मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग इति नव । संवेग उपायानुष्ठाने शैघ्र्यम् । यत्तु वैराग्यमिति तन्न । उपायकार्यवैराग्यस्योपायमृदुत्वादिकं विहाय स्वातन्त्र्येण मृदुत्वाद्यसंभवात् । संवेगशब्दस्य तदवाचकत्वाच्च ॥ २० ॥

तेषु मध्येऽधिमात्रोपायानां क्षेपीयसी सिद्धिः । तां दर्शयति—

## तीव्रसंवेगानामासन्नः ॥ २१ ॥

समाधिनिष्पत्तिस्तत्फललाभश्च भवतीति शेषः ॥ २१ ॥

## मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥

तीव्रत्वस्यापि मृद्वादिभेदेन त्रैविध्यात्ततोऽप्यासन्नादपि विशेषस्तरतमरूपो भवति तीव्रत्वविशेषादित्यर्थः । एवं चाधिमात्रोपायस्य मृदुतीव्रसंवेगस्यासन्नः । ततोऽपि मध्यतीव्रसंवेगस्यासन्नतरः । ततोऽप्याधिमात्रतीव्रसंवेगस्यासन्नतमः । समाधिलाभस्तत्फलं चेति शेषः ॥ २२ ॥

ननु किमयमेवोपाय आसन्नतमः समाधावथोपायान्तरमप्यस्तीत्याशङ्कायामस्तीत्याह—

## ईश्वरप्रणिधानाद्वा ॥ २३ ॥

पूर्वसूत्रस्थं विशेष इत्यनुवर्तते । प्रणिधानमत्र तद्वाचकप्रणवजपस्तदर्थभावनमिति वक्ष्यमाणो भावनाविशेष एव । तेन जीवात्मसंप्रज्ञातवतः पुरुषस्य पूर्वोपायैनैवासंप्रज्ञात आसन्नतमः । परमात्मविषयकसंप्रज्ञातवतस्तु तद्भावेऽप्यासन्नतमः स इति तात्पर्यम् । एवं चातितीव्राभ्यासनैरपेक्ष्यंणायं श्रेष्ठ आयोऽनुकल्प इति बोध्यम् । अत एव श्रुत्यादिषु बहुशो ब्रह्मज्ञानमेवोपदिश्यते मोक्षहेतुत्वेन । कचिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति । नन्वैश्वरस्य संप्रज्ञातस्य कुतस्तदनपेक्षत्वमिति चेन्न । श्रुतिवाक्यैर्ब्रह्मण आत्मताज्ञाने तत्र प्रेमलक्षणभक्तितो जायमानाद्ब्रह्मात्मताचिन्तनरूपाद्वक्ष्यमाणात्प्रणिधानादभिमुखीकृत ईश्वरस्तं ध्यायिनमस्य समाधिमोक्षावासन्नतमौ भवेतामित्यभिध्यानमात्रेणासन्नतमासंप्रज्ञातसिद्ध्यानुगृह्णातीति भावः । अत्रापि वैराग्यं सहकारितयापेक्षितमेवेति बोध्यम् ॥ २३ ॥

अथ प्रधानपुरुषातिरिक्ततत्त्वसत्त्वे मानाभावः । उपाधिशुद्धस्य कस्यचिज्जीवस्यैवेश्वरत्वेन श्रुत्यादौ व्यवहारसंभवादिति सांख्याक्षेपे उत्तररूपं तद्व्यतिरिक्तेश्वरलक्षणमाह—

---

6. A. C. om. क्षेपीयसी सिद्धिः । तां दर्शयति
14. C. om. अपि.
29. A. reads उत्तररूपसूत्रम् for उत्तररूपम्.

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥**

पुरुषविशेष एवेश्वरो नातिरिक्तः । तदुपाधिश्च प्रधानमेवेति भावः । अविद्या-अस्मितारागद्वेषाभिनिवेशाः क्लेशाः । कुशलाकुशलसाधनधर्माधर्मौ कर्माणि । तत्फलं जात्यायुर्भोगरूपो विपाकः । भोगोत्र शब्दादिवृत्तिः । विपाककारणी-५ भूता वासना आशयाः । करमजातिनिर्वर्तकस्य कर्मणः प्राग्भवीयकरभभोगभावितवासनाभिव्यक्तिं विना करभोचितभोगाजनकत्वेन वासनानां विपाककारणत्वात् । एतैरपरामृष्ट इत्यर्थः । यद्यपि जीवोपि स्वतस्तदपरामृष्ट एव तेषां चित्तधर्मत्वात्तथापि पुरुषयोद्धृनिष्ठजयपराजययोस्तत्स्वामिनि राजनीव चित्तफलभोक्तृत्वरूपचित्तस्वामित्वात्तत्र व्यपदिश्यन्ते । तत्फलभोक्तृत्वं तत्फलसुखदुः-१० खादिवृत्तिप्रतिबिम्बवत्त्वात् । तावतैव तत्र क्लेशादिमत्त्वव्यवहारो विदुषाम् । समवायेन पुरुषे सुखादिबुद्धिस्त्वविद्या । ईश्वरस्त्वीदृशेन भोगेनापरामृष्ट एव पुरुषविशेषः । विवेकग्रहणे सत्त्वस्यैव स्वोपाधिसुखसाक्षितारूपो भोगस्तु तत्राप्यस्त्येव ।

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।

इति स्मृतेः । अभिमानपूर्वकसुखाद्यनुभवरूपो मुख्यो भोगस्तु तस्यानभ्युप-१५ गम्योभिचाकशीति ( मु. ३।१।१ ) इति श्रुत्या प्रतिषिध्यते । एकशरीरस्थत्वेन जीवभोग्यदुःखाद्भिभोक्तृत्वं च प्रतिषिध्यते । अपरामृष्टत्वं तत्परामर्शशून्यता । एतेनाथास्तु मोक्षो ज्ञानात्मेति वाक्येन ज्ञानस्यापि कैवल्यमोक्षादिशब्दार्थत्वात्कैवल्यं ज्ञानं प्राप्ताः केवलानां जीवन्मुक्तानां स्वामिनः केवलिनो हिरण्यगर्भादयः सन्ति, एत एवेश्वराः सन्त्वित्यपास्तम् । ते हि पूर्वस्थितान्येव प्रकृतिलयसंबन्धी-२० न्यष्टप्रकृतिष्वभिमानरूपाणि प्राकृताख्यानि विदेहसंबन्धीनि वैकारिकाख्यानि शब्दादिविषयरागरूपाणि गृहस्थसंबन्धीनि दानाध्ययनादिष्वभिष्वङ्गरूपाणि दक्षिणाख्यानि त्रीणि बन्धनानिच्छित्त्वा कैवल्यं प्राप्ता इति तेषु तत्परामर्शशून्यत्वाभावात् । यथा च मुक्तानां पूर्वा बन्धकोटिः प्रज्ञायते प्रकृतिलयानां चेतराषि बन्धकोटिः संभाव्यते नैवमीश्वरस्येति तस्य तत्परामर्शशून्यत्वम् । अतः स २५ सदैव मुक्तः सदैवेश्वरश्च । तदुक्तम्—

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ।
कर्मात्मा पुरुषो योसौ मोक्षबन्धैः स युज्यते ॥

---

4. B. reads तत्फल for तत्फलम्.
5. B. reads आशयः for आशयाः.
12. B. reads सोपाधि for स्वोपाधि.
12. A. O. read तत्र for तत्र.
22. A. reads दाक्षिण for दक्षिण.
24. A. reads परामर्ष for परामर्श.
26. A. reads नित्यः for नित्यम्.

इति । निर्गुणत्वं गुणाभिमानशून्यत्वम् ।

परस्तु निर्गुणः प्रोक्तो ह्यहंकारयुतोपरः ।

इति नारदीयात् । सदैवेश्वरत्वं सदैवाप्रतिहतेच्छायुक्तत्वम् । ईश्वरोपाधि-
सत्त्वस्य नित्यज्ञानेच्छासुखादिमत्त्वात् । तादृशस्यापि विसदृशपरिणामाभावरू-
पसाम्यावस्थोपपत्तेः प्रलयेपि प्रधानस्य साम्यावस्थत्वमप्युपपन्नम् । द्विपरार्धान्ते
तस्य लयोपि स्वकार्याकरणरूप एव । आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किं-
चन मिषत् ( ऐ. १।१ ) इति श्रुत्या प्रलयेपि तस्यार्थप्रवृत्त्वासिद्धेश्च । तस्मात्त-
दुपाधेर्ज्ञानादिलक्षणा वृत्तिः प्रलयेप्यास्ति । तद्वृत्तिं विनैव तस्य ज्ञातृत्वाङ्गीकारे
दृष्टानुसारत्यागापत्तिः । ज्ञानशक्तिरहं परेति प्रकृत्यभिमानिदेवतावाक्यविरोधश्च ।
तत्परेणेरितं विषमत्वं प्रयाति ( मै. ५।२ ) इति श्रुतावीश्वरयत्नेनैव
गुणवैषम्यश्रवणाच्च ।

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले महेश्वरः ॥

इति स्मृत्या वैषम्यहेतुक्षोभजनकेच्छाया अपि तस्य स्मरणाच्च । प्रलये
तदस्वीकारे तु प्रलये स्वसंकल्पेन स्वोपाधिं स्वस्माद्वियोज्येश्वरः शेते पूर्वसर्गी-
यसंकल्पसंस्काराभ्यां च सर्गादावुपाधिरीश्वरेण सह संयुज्यत इति स्वीकार्यं
स्यात् । तच्चायुक्तम् । प्रकृतसूत्रेण

क्लेशकर्मविपाकाद्यैर्वासनाभिस्तथैव च ।
अपरामृष्टमेवाह पुरुषं हीश्वरं श्रुतिः ॥

इति स्मृत्या चेश्वरोपाधौ संस्कारस्य प्रतिषिद्धत्वात् । किं चाग्रे वक्ष्यमाणं
कालानवच्छिन्नत्वमपि भज्येत । उपाधिशून्यभावेन तस्य कालावच्छिन्नत्वसं-
भवात् । यत्तु प्रलये निरुद्धोप्युपाधिः पूर्वसर्गीयसंकल्पवासनाभ्यां स्वयं व्युत्थितो
भवतीति शास्त्रं तद्धैनंदिनप्रलये योगनिद्रया शयानस्य स्वयंभोरुपाधिपरम् ।
तदुक्तं भाष्ये योसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्ष इति ।
प्रकृष्टं सत्त्वं रजस्तमोलेशेनाप्यस्पृष्टं कारणसत्त्वम् । उपादानादित्यनेन तदनभिभू-
तत्वं सूचयति । न चेच्छयोपादानमुपादानेनेच्छेत्यन्योन्याश्रयः । अनादित्वात् ।
तथा च श्रुतिः—

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।

इति । तदैक्षत (छा. ६।२।३) सोकामयत ( तै. २।६ ) स एको ब्रह्मण आनन्दः
(तै. २।८।१) साक्षी चेता केवलो निर्गुणश्च (श्वे. ६।११) इति । आनन्दान्तमौपा-
धिकं स्वतो निर्गुणश्चाभिमानरहितत्वादित्यविरोधः । ननु तस्यैतादृश उत्कर्षः किं-

5. C. om. अपि.
31. D. C. read तादृशः for एतादृशः.

प्रमाणक इति चेन्न । तस्य श्रुत्यादिरूपशास्त्रप्रमाणकत्वात् । ननु शास्त्रप्रामाण्यमेव कुत इति चेन्न । तद्बुपाधिरूपं यत्प्रकृष्टसत्त्वं तद्वृत्तिरूपार्थज्ञानजन्यत्वेन तस्य प्रमाणत्वात् । न चान्योन्याश्रयः । शास्त्रप्रामाण्यात्प्रकृष्टसत्त्वरूपोपाधिसिद्धिस्तन्सिद्धौ च तन्मूलकतया तत्प्रामाण्यसिद्धिरिति वाच्यम् ।
५ ईश्वरसिद्धेः प्रागपि मन्त्रायुर्वेदाद्यावर्थाव्यभिचारनिश्चयात्प्रामाण्यस्य दृष्टत्वेनान्यत्रापि शास्त्रे प्रामाण्यसिद्धेः । प्रकृष्टसत्त्वस्य च शास्त्रप्रामाण्यनिर्वाहकतामात्रमत्रोक्तमिति तदभावात् । न च तस्यान्यकर्तृत्वं संभवति । औषधीनां तत्संयोगस्य वर्णावापोद्धारस्य चान्वयव्यतिरेकाभ्यां सामर्थ्यज्ञानस्यान्यस्य पुरुषायुषसहस्रेणाप्यशक्यत्वात् । न चागमादन्वयव्यतिरेकौ ताभ्यां
१० चागम इति तत्संतानयोरनादित्वान्न दोषः । महाप्रलये तयोर्विच्छेदात् । विसदृशपरिणामक्षीरेक्षुरसादेर्दधिगुडादिरूपपरिणामात्पूर्वं सदृशपरिणामतया दृष्टत्वेन महदादिविसदृशपरिणामवतः प्रधानस्य कदाचित्सदृशपरिणामावश्यकत्वेन साम्यावस्थारूपसदृशपरिणामस्यैव महाप्रलयत्वात् । विषयताकार्यकारणभावबाच्यवाचकभावैः समवायेन चेश्वरसत्त्वे वर्तमानयोः शास्त्रोत्कर्षयोरनादिः
१५ संबन्धः । अतः सदैवेश्वरः प्रलयेऽपि ज्ञानेच्छाकृतिमान्सदैव क्लेशादिराहित्यरूपमुक्तत्ववांश्चेति सिद्धम् । एतेन स्वस्य प्रकर्षकार्यतया प्रकर्षं बोधयच्छास्त्रमनुमानमेव स्यान्नागम इत्यपास्तम् । स चाद्वितीयः । यतस्तस्यैश्वर्यं साम्यातिशयाभ्यां रहितं यतस्तदैश्वर्यान्तरेण नातिक्रम्यतेऽतो निरतिशयम् । यदेव च सर्वातिशायि तदेवैश्वर्यम् । अन्यथैश्वर्यमेव न । अप्रतिहतेच्छत्वस्वरूपत्वाभावात् ।
२० यत्र चैश्वर्येण काष्ठा प्राप्यते स ईश्वरः । अन्यत्र त्वैश्वर्यमौपचारिकमेव । तत्समानैश्वर्यस्य काप्यभावात् । सत्त्वे हि द्वयोस्तुल्ययोरेकत्र वस्तुनीदमल्पकालस्थायित्वरूपनवत्ववदस्तु तद्विपरीतपुराणत्ववदस्त्विति कामनायामेकस्य संकल्पसिद्धावपरेच्छाविघाताद्दूनत्वं स्यादिति न समानानेकेश्वरसंभवः । उभयोः संकल्पसिद्धिस्तु विरुद्धत्वान्न भवत्येव । तस्माद्यस्य साम्येनातिशयप्रतियोगित्वेन
२५ च निर्मुक्तमैश्वर्यं स ईश्वरः स च पुरुषविशेष एवेति न प्रधानपुरुषातिरिक्ततत्त्वापत्तिः। अविरुद्धाभिप्रायत्वे कृतमन्यैः । एकेनैव कृतत्वात् । संभूयकारित्वे न कश्चिदीश्वरः स्यात्परिषद्वदिति दिक् । नन्वेकस्यैवात्मन आकाशस्येवोपाधिभेदैर्जीवेश्वरादिरूपत्वसंभवेन लाघवादैकात्म्यमेवास्तु । तत्त्वमसि (छा.६।८।७) इत्यादिश्रुतिभिरात्मैक्यस्यैव प्रतीतेश्च । भेदाभेदश्रुतिमध्ये भेदनिन्दयाऽभेदज्ञानस्य
३० मोक्षफलकत्वकथनेन चाभेदवाक्यान्येव स्वार्थपराणि । भेदवाक्यानि त्वारोपितभेदानुवादपराण्येव । तत्तदुपाधिविशिष्टयोश्च जीवत्वेश्वरत्वे इति चेन्न । विशिष्ट-

---

3. B. om. रूपोपाधि.

10. B. om. त्व after रूप.

स्यानतिरेके जीवत्वेश्वरत्ववन्धमोक्षादिसांकर्यापत्तेः । अतिरिक्तेप्यनित्यत्वे तस्य विनाशितया बन्धमोक्षसामानाधिकरण्यानुपपत्तिः । अवच्छेद्यांशस्य नित्यतया तदुपपत्तिः । कार्योपाध्यवच्छेद्यत्वमेव बन्धः । तत्त्याग एव मोक्षः । विशिष्टैश्च सामान्यात्मनो भेदाभेदाविति चेद्दिष्टापत्तेः । अस्यैवास्मन्मते स्वीकारेण बाध-
५ काभावात् । अस्माभिरपि सामान्यरूपेणाभेदो वैधर्म्यलक्षणभेदनिरासाभेष्यते विशेषतस्तु भेद इति । एवं चाग्निविस्फुलिङ्गादिदृष्टान्ता उपपन्नाः । आकाशादिदृष्टान्ताश्चांशांशिभावेनाविभागलक्षणाभेदस्य सार्वकालिकत्वेन पारमार्थिकत्वेपि किंचिदवच्छेदेन फेनबुद्बुदादिवदतिभङ्गुरस्य विभागलक्षणस्य भेदस्यापारमार्थिकस्यौपाधिकत्वप्रतिपादकाः । विवेकाख्यभेदज्ञानं हि पारमार्थिकाभेदज्ञान-
१० फलकमिति न तस्य मोक्षहेतुत्वे विरोध इति दिक् ॥ २४ ॥

अथ तस्येश्वरस्य निरतिशयसार्वज्ञ्यरूपं विशेषान्तरमाह—

## तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

सूत्रे सर्वज्ञेति भावप्रधानम् । सर्वज्ञत्वस्य बीजमनुमापकं यज्ज्ञानस्य सातिशयत्वं तत्तत्रेश्वरे निरतिशयमित्यर्थः । यद्विदमतीतानागतवर्तमानानामतीन्द्रि-
१५ याणां च प्रत्येकं समुच्चयेन वास्य बहुज्ञानमित्येतत्सार्वज्ञ्यबीजम् । एतद्बीजं सातिशयज्ञानं विवर्धमानं यत्र निरतिशयं भवति स सर्वज्ञः । अन्यथानवस्थापत्तेः । प्रयोगस्तु सार्वज्ञ्यबीजं सातिशयज्ञानं क्वचिद्विश्रान्तं सातिशयत्वात्परिमाणवदिति । श्रुतिश्चात्रानुकूलस्तर्कः । एवं गुरुत्वातिशयानामपि काष्ठा क्वचिदनुमेया । अतो न तेषु व्यभिचारः । यदि तु कार्यमात्रेतिशयप्रतियोगित्वनियमा-
२० नुपपत्तिस्तेषां काष्ठाप्राप्तौ बाधकमुच्यते तदा बाधकाभावे सतीति हेतौ विशेषणं देयम् । ज्ञानादीनां तु नित्यानां स्वीकारान्नास्ति तद्बाधकम् । एवं च यत्र ज्ञानस्य काष्ठाप्राप्तिः स सर्वज्ञः स च पुरुषविशेष इति । नन्वनुमानस्य सामान्यमात्रेण निश्चये कृतपर्यवसानस्य संज्ञादिरूपविशेषप्रतिपादनेऽसामर्थ्येन कथं तदवगतिरिति चेन्न । ब्रह्मान्तर्यामी परमात्मा शिवो विष्णुरित्यादिसंज्ञानां पूर्णा-
२५ नन्दत्वपरमकारुणिकत्वपारमार्थिकात्मत्वजगदाधारत्वकारणत्वादीनां सर्वज्ञत्वतृप्तिचैतन्यस्वातन्त्र्यालुप्तशक्तित्वानन्तशक्तित्वरूपषडङ्गवत्त्वस्य ज्ञानवैराग्यैश्वर्यतपःसत्यक्षमाधृतिस्रष्टृत्वात्मबोधाधिष्ठातृत्वरूपदशाव्ययवत्त्वस्य च वेदादवगतेः । सत्यलोकादिस्थहरिहरब्रह्ममूर्तयस्तु शक्तिशक्तिमदभेदेनोपासनार्थमेव परमेश्वरस्योच्यन्ते न तु साक्षात् ।

३० ब्रह्मविष्णुशिवा ब्रह्मन्प्रधाना ब्रह्मशक्तयः ।
ततो न्यूनाश्च मैत्रेय देवा दक्षादयस्ततः ॥
ब्रह्मविष्णुशिवादीनां यः परः स महेश्वरः ।

1. B. om. अपि after अतिरिक्ते.
15 and 17. A. reads सार्वज्ञ for सार्वज्ञ्य.

इत्यादिस्मृतेः । कृष्णरामाद्यवतारा अपि सत्यलोकस्थविष्ण्वादीनामेव । तेषां च परमात्मन्येवाहंभावात्तदवताराणामपीश्वरावतारत्वं श्रुत्यादिषूच्यते । तेषामपि ते लीलावतारा एव । अत एव न तस्य कार्यं करणं च विद्यते ( श्वे. ६।७ ) इत्यादिश्रुत्या

५　　अनादिमत्परं ब्रह्म सर्वदेहविवर्जितम् ।

इति स्मृत्या चेश्वरस्य कार्यकारणाख्यशरीरद्वयप्रतिषेधोपपत्तिरिति दिक् । ननु नित्यमुक्तस्य नित्यतृप्तस्य पुरुषार्थाभावात्प्रवृत्त्यनुपपत्तिरिति चेन्न । तत्प्रवृत्तेर्नित्यतया निमित्तानपेक्षत्वात् । किं च तस्येश्वरस्य स्वोपकाररूपात्मानुग्रहाभावेपि दैनंदिनप्रलयरूपकल्पप्रलयप्राकृतप्रलयरूपमहाप्रलयेष्वपि स्वकारण-
१० गामिस्वरूपसंसारवतः पुरुषाञ्ज्ञानधर्मोपदेशेनोद्धरिष्यामीत्येवं भूतानुग्रहरूपप्रयोजनेन प्रवृत्त्युपपत्तेः । तृणारणिमणिन्यायेन स्वेष्टसाधनताज्ञानपरानुग्रहयोर्विजातीयेच्छां प्रति फलबलेन हेतुतायाः सिद्धेः । तज्ज्ञानेच्छाप्रवृत्तेर्नित्यत्वं प्रवाहानादित्वानन्तत्वाभ्यामेवेति बोध्यम् । न चैवमपि भक्तानेवानुगृह्णातीति वैषम्यमीश्वरस्येति वाच्यम् । अभेद्यत्वस्वाभाव्यवाद्विशुद्धसत्त्वस्य भक्तवशतास्वाभा-
१५ व्यस्यापर्यनुयोज्यत्वात् । रागद्वेषाभ्यामेव वैषम्यं भवति न प्रवृत्तिमात्रेण । एवं कर्मवशतास्वभावं च तत् । किं च दुःखबहुललोकसर्जनमपि परस्परदर्शनेन तेषां वैराग्यद्वारार्थायेति दिक् । उक्तं च पञ्चशिखाचार्यैरादिविद्वान्स्वयंभूर्भगवान्विष्णुर्योगबलेन स्वनिर्मितं चित्तं प्रविश्य कपिलाख्यपरमर्षिर्भूत्वा कारुण्याज्जिज्ञासमानायासुरये सांख्यसूत्राख्यं तन्त्रं प्रोवाचेति । अनेन स्वार्थाभावेपि
२० परार्था प्रवृत्तिर्दर्शिता ॥ २५ ॥

ईश्वरगतं विशेषान्तरमाह—

## स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥

स एष ईश्वरः पूर्वेषां ब्रह्मविष्णुप्रभृतीनामपि । अपिनान्येषां जीवानां प्रधानस्य च गुरुः पितान्तर्यामिविधया ज्ञानचक्षुःप्रदश्च प्रवर्तकश्च कालेनानवच्छे-
२५ दादित्यर्थः ।

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ( श्वे. ६।१८ )

इति श्रुतेः । न च प्रकृतिस्वातन्त्र्यक्षतिः । अस्य निमित्तकारणत्वेन तत्स्वातन्त्र्याविघातकताया वक्ष्यमाणत्वात् । पूर्वे हि गुरवो ब्रह्मादयः कालेन द्विपरार्धादिना परिच्छिद्यन्ते । अस्य च परिच्छेदार्थं कालो न प्रवर्तते । अत ईदृशं
३० विना तेषां तत्प्रवृत्तेश्चासंभवादसौ तेषामपि गुरुः । यथा चास्य वर्तमानसर्ग-

15. B. reads गृह्णामि for गृह्णाति.
18. B. reads निर्मित for निर्मितम्.

स्यादौ तद्गुरुत्वेन प्रकर्षगत्या ज्ञानोत्कर्षेण स्वतः सिद्धस्तथातिक्रान्तसर्गादावपि
ग्राह्यस्तस्यवः । अत्रेश्वरस्य तत्पितृत्वान्तर्यामित्वरूपगुरुत्वोक्त्या जीवानामपीश्वर
आत्मेति सूचितम् । यो हि यस्याधिष्ठाता स तस्यात्मेति दृष्टं यथा सूर्यश्चक्षुषो
जीवो वा देहस्य । एवं सर्वजीवपितृत्वेन पितापुत्रवज्जीवब्रह्मणोरंशांशिभावोऽपि
५ सूचितः ।"अग्निविस्फुलिङ्गवच्च जीवोऽसौ स्यात्पृथग्बुद्ध इति स्मृतेश्च । अभे-
दश्च दुग्धजलयोरिवाविभागः । स च स्वरूपसंबन्धविशेष आधारतावल्लक्षणा-
नन्यत्वं वा । तत्त्वं तूक्तमेवेति दिक् ॥ २६ ॥

अथ तत्प्रणिधानार्थं मन्त्रमाह—

## तस्य वाचकः प्रणवः ॥ २७ ॥

१० तस्येश्वरस्य प्रणवो वाचकः । एवमेवेश्वरेण संकेतकरणादित्यर्थः ।

> अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
> तस्योंकारः स्मृतो नाम तेनाहूतः प्रसीदति ॥

इति स्मृतेः । अदृष्टेति । अश्रुतेत्यपि बोध्यम् । भावो भक्तिः । मनस्तुल्यका-
रणोपाधिरित्यर्थः । एवं चेश्वरः प्रणवस्य वाच्य इति फलितम् । नन्वीदृशः
१५ संकेतोऽयुक्तः । वाचकत्वस्यासंकेतकृतत्वात् । न च स्वाभाविकं वाचकत्वं
संकेतेन बोध्यते । यत्र तन्नास्ति तत्र संकेतेनाभिव्यङ्ग्यत्वापत्तेः । अविद्यमान-
घटस्य दीपेनाव्यञ्जनात् । तस्मात्संकेत एव वाच्यवाचकभावः शक्तिविशेषरूप
इति चेन्न । दीपस्य प्रकाशवत्स्थित एवास्य वाचस्य वाचकेन सहाविभागरूपः
संबन्धः । तदेव वाचकत्वम् । अन्योन्याध्यासरूप ईश्वरस्य संकेतस्त्वनादित्वा-
२० त्तनासिद्धं स्थितमेव तं प्रकाशयति । यथा विद्यमान एव पितापुत्रयोः संबन्धो-
ऽयमस्य पिताऽयमस्य पुत्र इति संकेतेन प्रकाश्यते । यद्यपि शब्दार्थविषयेऽन्योन्या-
ध्यासरूपं संकेतं तृतीये वक्ष्यति भाष्यकृत्तथापि राहोः शिर इतिवदस्य वाचको-
ऽयमस्य वाच्य इति च संकेत इत्यर्थस्य भाष्याल्लभ्यते । अनेन शब्दार्थयोर्भेदाभेदौ
दर्शितौ । संकेत एव वाचकत्वमिति तु न युक्तम् । जनकत्वादेरपीश्वरसंकेत-
२५ रूपत्वापत्तेः । एवं च योऽयं शब्दः सोऽर्थ इत्यध्यासविषयस्तन्मूलं चाविभागरूपं
तादात्म्यमेव शक्तिरिति बोध्यम् । यत्र चैश्वरः संकेतः स वाच्य इतरो लक्ष्य
इत्यादिव्यवस्था । प्रलये च शब्देषु प्रधानसाम्यमुपगतेष्वपि संस्कारवशा-
त्सर्गान्तरे पूर्ववच्छक्तियुक्तानामाविर्भावाद्वाच्यवाचकशक्त्यपेक्षः संकेत ईश्वरे-
णापि पूर्ववत्तथैव क्रियत इति न कदाचिदीश्वरसंकेतभेदेनार्थभेदः प्रणवस्य ।

---

5. A. C. read जीवो पीहभात् for जीवोऽसौ स्यात्.
15. A. B. read संकेत for असंकेत.
17. B. C. read संकेतकृतः for संकेतः.
26. B. reads ईश्वर for ऐश्वरः.

ननु प्रलये नाशे नित्यः शब्दार्थसंबन्ध इत्यसंगतं स्यादिति चेन्न । व्यवहार-रूपसंप्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनां प्रतिज्ञासत्त्वादिति दिक् ॥ २७॥

एवं पूर्वोक्तसंकेतेन विज्ञातवाच्यवाचकभावस्य योगिनः प्रणिधानं दर्शयति—

५ **तज्जपस्तदर्थभावनम् ॥ २८ ॥**

प्रणवस्य जपस्तेन सह तदभिधेयस्येश्वरस्य ध्यानरूपं भावनं तत्प्रणिधान-मित्यर्थः । अर्थभावनस्य संकेतग्रहाभिव्यङ्ग्यशक्तिज्ञानं विनाऽसंभवात्पूर्वं संकेतो दर्शितः । प्रणवाक्षरार्थो गारुडे उक्तः—

व्यक्ताव्यक्ते च पुरुषस्तिस्रो मात्राः प्रकीर्तिताः ।
१० अर्धमात्रा परं ब्रह्म ज्ञेयमध्यात्मचिन्तकैः ॥

इति । प्रणवार्थचिन्तनं च द्वेधा । एकं स्वप्रकृतितत्कार्येभ्यो विविक्ते केवले ब्रह्मचैतन्य आत्मत्वचिन्तनमेतच्छास्त्रप्रतिपाद्यम् । अपरं चांशांशिकार्यकारण-शक्तिशक्तिमदादिभिस्तप्तायःपिण्डवदविभागलक्षणेनाभेदेनाहं ब्रह्म सर्वं खलु ब्रह्मेत्यादिरूपम् । तदुक्तम् —

१५ एकः समस्तं यदिहास्ति किंचि-
त्तदच्युतो नास्ति परं ततोन्यत् ।
सोहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यज भेदमोहम् ॥ ( वि. पु. २।१६।२४ )

इति । आद्यं त्वथात आदेशो नेति नेति ( बृ. २।३।६ ) इत्यादिश्रुति-
२० मूलकम् । केचित्तु

प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते ॥

इति स्मृतिः । तत्र प्रकृतेः पुरुषे स्थापनं तद्भवनारम्भकत्वसंपादनम् । पुरुषस्य च ब्रह्मणि न्यासस्तत्र लयो विलापनरूपः । अनेन च प्रकृत्यादिवज्जीवाना-
२५ मनात्मत्वं लभ्यते ।

तत्त्वैः संपादितं भुङ्क्ते पुरुषः पञ्चविंशकः ।
ईश्वरेच्छावशात्सोपि जडात्मा कथ्यते बुधैः ॥

इति मात्स्योक्तेश्च । तस्मात्प्रकृतिपुरुषौ विलाप्य यच्छिष्टं ब्रह्म तस्मिन्नहं-भावप्रवचनान्न जीवे मुख्योहंशब्द इत्याहुः । तादृशप्रणिधानस्य किं फलमिति

---

12. A. O. om. च after प्रणवस्.
23. C. reads गमनारम्भकत्व for अनारम्भकत्व.
26. A. C. read भुङ्क्ते for भुङ्क्ते.

चेतस्य योगिनः प्रणवं जपतस्तदर्थं भावयतश्चेश्वरैकाग्रं चित्तं भवति । ततः
परमात्मसाक्षात्कारादिकमिति गृहाण । तदुक्तं विष्णुपुराणे—

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमाचरेत् ।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥ ( वि. पु. ६।६।२ )

५ इति । योगजपयोरेकदाऽसंभवाद्योगस्याद्यन्तयोर्व्युत्थानकाले जप उक्तः ।
स्वाध्यायः प्रणवः । परमात्मप्रकाशनमप्यात्मत्वेनैवेति । अत्र केचित् । एवं च
जीवात्मतत्त्वज्ञानाद्बुद्धिपर्यन्तमभिमाननिवृत्तिवत्परमात्मतत्त्वज्ञानाज्जीवेष्वप्य-
भिमाननिवृत्तिः । पञ्चविंशतितत्त्वविलापनं सोऽहमित्येवाधिष्ठानसाक्षात्कारात् ।
एवं च जीवानां व्यावहारिकमात्मत्वम् । पारमार्थिकं तु क्षेत्रज्ञत्वरूपमीश्वरस्यैव ।
१० जीवानां परतन्त्रत्वाद्धर्माधर्माधीनत्वाच्च । चितिशक्तिमत्तामात्रेण तु मुख्यात्म-
पेक्षं गौणमात्मत्वम् । यथा हिरण्यगर्भादीनामीश्वरत्वम् । तच्च बन्धमोक्षादि-
भागितया व्यवहारगोचरतया च व्यावहारिकमेव । एवमहंशब्दोऽपि परमात्म-
न्येव मुख्यो न तु जीवे । तस्य स्वातन्त्र्याभावेन स्वातन्त्र्येण प्रयोक्तात्मत्वादि-
रूपस्याहमादिप्रवृत्तिनिमित्तस्य तत्राभावात् । यद्यपि स मुख्य आत्मा न भवति
१५ तथापि तज्ज्ञानाद्धर्माधर्मरागादिनिवृत्तिरूपो मोक्षो भवत्येव । एवं च व्यवहार-
परमार्थभेदाभ्यामात्मनैकात्मतावादो श्रुत्यादिषु दृश्यमानावविरुद्धावेवेत्याहुः॥२८॥

ईश्वरप्रणिधानस्य मुख्योपायत्वं दर्शयितुमन्यदप्यस्य द्वाराधिक्यं भवतीत्याह—

## ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

तत ईश्वरप्रणिधानात् । ये तावदन्तराया व्याधिप्रभृतयस्तेऽस्य न भवन्ति
२० स्वतो नोत्पद्यन्त एवेत्यर्थः । तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां
स भवति ( बृ. १।४।१० ) इति श्रुतेः । प्रत्यक्चेतनस्य जीवस्य यत्स्वरूपं
निर्दुःखत्वादि तात्त्विकं तस्याधिगमो दर्शनमपि भवतीत्यर्थः । यद्यपि प्रत्यक्-
प्रशान्तं भगवच्छब्दसंज्ञमित्यादौ प्रतिवस्तु अञ्चतीति व्युत्पत्त्येश्वरेऽपि प्रत्यक्-
शब्दो दृश्यते तथाप्यत्र प्रतिकूलमञ्चतीति व्युत्पत्त्या जीवपरः । अन्यप्रणिधाने-
२५ नान्यसाक्षात्कारोऽदृष्टद्वारा बोध्यः । किं च यथैवेश्वरः पुरुषश्चेतनः पापपुण्यवर्जि-
तत्वरूपशुद्धिमान्निर्दुःखत्वरूपप्रसन्नत्ववान्केवलश्चिन्मात्रो जात्यायुर्भोगराहित्य-
रूपानुपसर्गत्ववांस्तथायं बुद्धिवृत्तिप्रतिबिम्बग्राहित्वाद्बुद्धेः प्रतिसंवेद्यपि साक्षा-
त्तत्संबन्धात्स्वतस्तादृश इत्येवंप्रकारेण तदधिगमात्सदृशानुचिन्तनस्य सदृशा-
न्तरसाक्षात्कारोपयोगिताया दर्शनात् । यथैकदर्शनाभ्यासस्तत्सदृगर्थशास्त्रान्तर-
३० ज्ञानोपयोगी दृष्टः । ननु केऽन्तराया इत्युच्यन्त इति चेत्ये चित्तस्य विक्षेपका

1. B. om. ईश्वर.
13. B. reads प्रयुक्तात्म for प्रयोक्तात्म.
20. B. reads अभूत्या for अभूत्यै.

इति गृहाण ॥२९॥

अथ किंस्वरूपास्ते कियन्तश्चेत्याकाङ्क्षायामाह—

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्ध-भूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥३०॥**

५ एते नव सूक्ष्मकालानाकलनात्तुल्यदृश्यगोचरवृत्तिभिस्ताभिवृत्त्युपायगोच-रवृत्तिभिर्वा सह भवन्ति । एषामभावे चैताश्चित्तवृत्तयो न भवन्तीत्यतश्चित्तवि-क्षेपका योगान्तरायास्तत्प्रतिबन्धका इत्यर्थः । विक्षेपश्चानेकवृत्तिकत्वम् । तत्र व्याधिर्धातूनां वातपित्तकफानामाहारपरिणामात्मकानां रसानां चक्षुरादीनां क-रणानां च विसदृशभावः । स्त्यानं चित्तस्य योगानुष्ठानाक्षमत्वरूपाकर्मण्यता ।
१० संशयो गुरुशास्त्रोक्तं ज्ञानसाधनं तथा स्यान्न वेत्युभयकोटिस्पृग्ज्ञानम् । प्रमादः समाधिसाधनानामननुसंधानरूपमभावनम् । आलस्यं कफादिकृतकायगुरुत्वे-न तमःकृतचित्तगुरुत्वेन च समाधिसाधनेष्वप्रवृत्तिः । अविरतिश्चित्तविषयसंप्र-योगात्मा तत्संनिकर्षजन्याभिलाषरूपो गर्धः । भ्रान्तिदर्शनं गुर्वाद्युक्तार्थविपरी-तार्थनिश्चयः । यद्यपि संशयोऽप्यतद्रूपप्रतिष्ठत्वाद्भ्रान्तिरेव तथाप्युभयकोटिस्प-
१५ र्शरूपावान्तरविशेषविवक्षया पृथगुक्तः । अलब्धभूमिकत्वं साधनानुष्ठाने वक्ष्य-माणमधुमत्याद्यन्यतमभूमेरप्यलाभः । अनवस्थितत्वं भूमिलाभेऽपि चित्तस्य ततो भ्रंशः । ननु तल्लाभोत्तरं भ्रंशेऽपि का क्षतिरिति चेन्न । समाधेर्ध्येयसाक्षा-त्कारपर्यन्तत्वरूपप्रतिलम्भपर्यन्तं तदवस्थानापेक्षणात् ।

आरूढयोगोऽपि निपात्यतेऽधः सङ्गेन योगी किमुताल्पसिद्धिः ।

२० इति स्मृतेः । एते चित्तविक्षेपा नव योगमला इति योगप्रतिपक्षा इति योगा-न्तराया इति च तान्त्रिकैरुच्यन्ते ॥३०॥

**दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षे-पसहभुवः ॥ ३१ ॥**

२५ प्रतिकूलवेदनीयं दुःखमाध्यात्मिकमाधिभौतिकमाधिदैविकं च । तत्राद्यं व्याध्यादिजं कामादिजं च । द्वितीयं व्याघ्राद्युत्थम् । तृतीयं शीतोष्णाद्युत्थम् । किं च येनाभिहताः प्राणिनस्तदुपघाताय यतन्ते तद्दुःखमिति तत्सामान्यलक्षणम् । दौर्मनस्यमिच्छाभिघातेन मनश्चाञ्चल्यम् । अङ्गकम्पोऽङ्गमेजयत्वम् । पुरुषयत्नं

5. A. reads अनाकलनात् for अनाकलनात्.
10. A. reads उक्त for उक्तम्.
18. A. om. पर्यन्तत्वरूपप्रतिलम्भ.

विना स्वयमेव प्राणो यद्बाह्यं वायुमाचामत्यतिशयेन स श्वासः। अयं समाध्य-
ङ्गरेचकविरोधी। यत्त्व कोष्ठ्यमुदरस्थं वायुं बहिः करोति स प्रश्वासः। अयं
तदङ्गपूरकविरोधी। एते विक्षेपसहभुवो व्याध्यादिविक्षेपोद्भवाः। यतो विक्षिप्त-
चित्तस्यैते भवन्ति विक्षेपनिवृत्तौ समाहितचित्तस्य न भवन्त्यत इत्यर्थः। एते-
५ न्तराया ईश्वरप्रणिधानरहितेनापि योगिनाभ्यासवैराग्याभ्यां निरस्याः ॥ ३१ ॥

तत्राभ्यासविषयमाह—

## तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

तस्य विक्षेपस्य प्रतिषेधार्थमेकं स्थूलादि यत्किंचित्तत्त्वं तदालम्बनं चित्तम-
भ्यसेत्। पुनः पुनः कुर्यादित्यर्थः। मिथास्तूकस्यैवोपसंहारः। एक-
१० तत्त्वशब्देन प्रकृतत्त्वादीश्वरः। अत एव भाष्येऽभ्यासविषयमुपसंहरन्नेरयुक्त-
मित्याहुः। न नु वैनाशिकैश्चित्तं क्षणिकं स्वीक्रियते। तथा हि प्रत्यर्थ-
नियतमर्थादर्थान्तरं न गच्छति तादृशो यः प्रत्ययो निराधारवृत्तिमात्रं
तन्मात्रं चित्तं क्षणिकं चेति। तस्य मते सर्वस्यैव चित्तस्यैकाग्रत्वादुक्तविक्षिप्त-
चित्ताभावादेकाग्रतार्थोपदेशानां वैयर्थ्यमिति चेन्न। एवं हि तेषामपि स्वाशि-
१५ ष्येभ्यः स्वशास्त्रेषु समाध्युपदेशवैफल्यापत्तेः। यदि पुनरिदं सर्वतः प्रत्याहृत्यैक-
स्मिन्नर्थे समाधीयते स्थाप्यते तदा भवत्येकाग्रमिति समाध्युपदेशस्य साफल्यं
स्यात्तदा न प्रत्यर्थनियतम्। न च सदृशप्रत्ययप्रवाहरूपतैव चित्तस्यैकाग्र्यम्।
तत्प्रवाहमध्ये च विसदृशत्वं विक्षेप इति वाच्यम्। एवमपि क्षणिकत्वाच्चित्त-
स्यैकस्याभावेनाश्रयाभावादेकाग्रतानुपपत्तेः। नन्वतीतानागतवर्तमानास्तु स्वस-
२० दृशप्रत्ययव्यक्तिषु चित्तादिवद्व्यासज्यवृत्तिरेकाग्रता भवन्त्विति चेन्न। असमान-
कालिकासु व्यासज्यवृत्तेरसंभवात्। क्षणिकवादे सामान्यधर्माभावेन सादृश्यस्य
दुर्वचत्वाच्च। न च प्रवाहांशप्रत्येकव्यक्तिधर्मोऽस्त्विति वाच्यम्। तस्यांशस्य
सदृशप्रत्ययप्रवाहान्तःपातित्वे विसदृशप्रत्ययप्रवाहान्तःपातित्वे वा प्रत्यर्थ-
नियतत्वेनैकाग्रतैवेति विक्षिप्तचित्तानुपपत्त्यैकाग्रताधानानुपपत्तेस्तदवस्थत्वात्।
२५ किं च स्वभावभिन्नत्वेन त्वयाभ्युपगतानां प्रत्ययानां निराधारत्वादेकचित्ता-
नाश्रितत्वे कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्ता भवेत्। तन्मते चित्तातिरिक्तात्मा-
भावात्। कथं वान्यप्रत्ययोपार्जितकर्मणामन्य उपभोक्ता भवेत्। संस्कारादृष्ट-
दोषादीनामाधाराभावेनासंभवाच्च। न च निराधारा एव ते सन्तु। एकसंतानो-
त्पन्नत्वेनानुभवसंस्कारस्मृत्यादीनां हेतुहेतुमद्भावेनोक्तदोषाभावादिति वाच्यम्।
३० गोमयं पायसं गव्यत्वादितिवद्दृश्या युक्त्याभासतरत्वात्। एकसंतानीयत्वहेतो-
रसिद्धेः। संतानस्यैकतानिर्वाहकजात्यनभ्युपगमात्। ननु स्वभावात्तत्संता-

28. A. C. om. दोष-
30. C. om. न.
31. C. reads आदि after जाति.

नान्तर्गतेन केनाचिदनुभूतं तत्संतानान्तर्गत एव कश्चित्स्मरति स्वभावस्यापर्य-
नुयोज्यत्वादिति चेदेवं सत्यस्य बौद्धस्यात्मविषयकानुभवापलापः। योहम-
द्राक्षं सोहं स्पृशामि योहमस्राक्षं सोहं पश्यामीति प्रत्यये योहमिति
प्रत्ययः स सर्वस्य दर्शनस्पर्शनादिरूपप्रत्ययस्यान्योन्यं भेदे सत्यपि प्रत्ययिनि
५ धर्मिण्यभेदाकारतयानुभवसिद्धः । तव चायमेकप्रत्ययव्यक्तिमात्रगोचरः ।
अतोऽभेदाकारोयं प्रत्ययस्तव मतेत्यन्तभिन्नेषु क्षणिकेषु चित्तेषु विषय-
तया वर्तमान एकं प्रत्ययिनं साधारणं न विषयीकुर्यात् । सर्वप्रत्ययानु-
गतधर्मिणः स्थिरचित्तस्यानभ्युपगमात् । अस्ति चायमभेदाकारः सोहमिति
प्रत्यभिज्ञारूपः प्रत्ययस्तवापि स्वानुभवग्राह्यः । अतो नापलपनीयः । ननु यत्स-
१० त्तत्क्षणिकमित्यनुमानबाधितोयं प्रत्यय इति चेन्न । प्रत्यक्षसाधितार्थस्य तर्का-
दिशून्यप्रमाणान्तरैरनभिभवात् । प्रमाणान्तराणां तदुपजीव्यत्वात् । शङ्खः पीत
इति प्रत्यक्षं तु तर्कयोगेन बलवतानुमानेन बाध्यते । देहाद्यात्मताप्रत्यक्षमपि
निर्णीतप्रामाण्येन संदिग्धप्रामाण्यतया दुर्बलं बाध्यते । स्थिरात्मस्वीकर्त्रास्ति-
कमतेपि प्रागुक्तात्स्मृतिसंस्कारयोरेकाश्रयतानियमात्स्थिरैकचित्तसिद्धिः । तस्मा-
१५ देकमनेकार्थमवस्थितं च चित्तम् । अत एव वक्ष्यमाणपरिकर्मोपदेशः संगच्छत
इति दिक् ॥ ३२ ॥

परिकर्मणा किं स्वरूपं किं वा फलं तत्राह—

## मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापु-
## ण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

२० प्रसादनं स्थितिनिबन्धनमिति वक्ष्यमाणतृतीयसूत्रस्थेनान्वयः । निबन्धनत्व
स्थितिहेतुभ्रद्धाऽऽद्यशतिबन्धद्वारा स्थित्यभ्रंशहेतुत्वम् । सुखादिशब्दाश्च लक्ष-
णया सुखतादिवाचिनो धर्मधर्म्यभेदात् । भावनोत्पादनम् । प्रसादनं समाधिप्रति-
लम्भकरागद्वेषाधर्मादिमलापसारणम् । तत्र सर्वप्राणिषु सुखभोगयुक्तेषु मैत्रीं
सौहार्दमुत्पादयेद्येनेर्ष्याकालुष्यं निवर्तते । दुःखितेषु निरुपाधिपरदुःखप्रहाणे-
२५ च्छारूपां करुणां भावयेद्येन परापकारचिकीर्षाकालुष्यं निवर्तते । पुण्यात्मकेषु
प्रीतिरूपां मुदितां, येनासूयाकालुष्यं निवर्तते । पापशीलेष्वौदासीन्यरूपामुपेक्षां,

7. A. reads साधारणः for साधारणम्.
7–8. B. reads अनन्नुगत for अनुगत.
9. C. reads अनपलपनीयः for नापलपनीय
12. A. om. आदि.
22. C. reads सुखिता for सुखता.
24. A. B. read उत्पाद्यते for उत्पादयेत्.

येनामर्षकालुष्यं निवर्तते । एवं प्रकारेणैतदुत्पादयतः पापासंभिन्नत्वाच्छुक्लो धर्म उपजायते । ततो रजस्तमःक्षये निर्मलत्वाख्यप्रसादवच्चित्तं वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं योगाङ्गंशयोग्यतारूपं स्थैर्यं लभत इत्यर्थः ॥ ३३ ॥

प्रसादस्यैव साधनान्तरमाह—

५ **प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥**

वाशब्दोऽप्यर्थे । आभ्यामपि चित्तस्य प्रसादनं कुर्यादित्यर्थः । कौष्ठ्यस्य वायोर्नासिकापुटयोरन्यतरेण योगशास्त्रोक्तसूक्ष्मसंचारकप्रयत्नविशेषाद्रेचनाख्यवमनरूपं प्रच्छर्दनम् । ततः पूरणानन्तरं कुम्भकरूपप्राणायामाख्यं विधारणम् । ताभ्यां वा प्रसादद्वारा मनसः स्थितिं संपादयेदिति ।

१० इन्द्रियाणां बलं प्राणास्तेषां यत्नेन निग्रहात् ।
विक्षेपहेतवोऽक्षाणां दह्यन्ते दोषराशयः ॥

इति स्मृतेः । अत्र यमादिनिरपेक्ष एव प्राणायामो योगसाधनतयोत्तमाधिकारिणं प्रत्युक्तः । द्वितीये च मन्दाधिकारिणं प्रति यमादिसाहित्येन स वक्ष्यत इत्यपौनरुक्त्यम् । केचित्त्वनेन सूत्रेण रेचककुम्भकद्वयरूप एव प्राणायाम उक्त
१५ इत्याहुः ॥ ३४ ॥

प्रसादापेक्षया स्थितिनिबन्धनं परिकर्मान्तरमाह—

**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थिति-
निबन्धनी ॥ ३५ ॥**

प्रकृष्टा वृत्तिः प्रवृत्तिः साक्षात्काररूपा । विषया गन्धादयः पञ्च । तद्वती
२० तद्विषया । सा स्वसाधनादुत्पन्ना स्वाविषयेष्वपि विवेकपर्यन्तेषु श्रद्धाऽऽधानप्रतिबन्धहेतुतया स्थितिप्रयोजिका भवतीत्यर्थः । वाशब्दोऽत्रापि समुच्चये । मनभिनव । तथा हि नासिकाग्रे धारणां कुर्वतो योगिनो यो दिव्यगन्धसाक्षात्कारोऽल्पेनैव कालेन भवति सा गन्धप्रवृत्तिः । एवं जिह्वाग्रे दिव्यरससंवित् । तालुनि दिव्यरूपसंवित् । जिह्वामध्ये दिव्यस्पर्शसंवित् । जिह्वामूले दिव्यशब्दसंवित् । इत्येताः प्रवृत्तय
२५ उत्पन्नाश्चित्तं संस्कारद्वारातिसूक्ष्मेष्वर्थान्तरेषु दृढस्थितियोग्यं कुर्वन्ति शास्त्रीयेऽर्थे संशयं च निराकुर्वन्ति । एतच्चागममात्रस्येतरथा न युक्तितः । यद्यपि तैस्तैः शास्त्रैस्तानुमानैराचार्योपदेशैश्च ज्ञातमर्थतत्त्वं निर्णीतमेव भवतीति न तत्र संशयस्तेषां

6. A. reads ष्यार्थे for अप्यर्थे.
7. A. reads रूप for सूक्ष्म.
13. B. reads क्षमादि for यमादि.
20. A. reads स्वविषयेषु for स्वाविषयेषु.

परमार्थभूततत्त्वप्रतिपादनसामर्थ्यात्तथापि यावच्छास्त्रार्थैकदेशः कश्चित्स्वकरणै-
श्चक्षुरादिभिर्न साक्षात्क्रियते तावत्सर्वं शास्त्रादि व्याजोक्तिवत्संदिग्धतात्पर्यकं
भवतीति सूक्ष्मेष्वपवर्गादिषु निश्चयात्मिकां दृढां बुद्धिं न जनयति । तात्पर्य-
संदेहान्निर्णीतेप्यर्थे संशयो भवति । अतः शास्त्रानुमानाचार्योपदेशावधृतेर्थे
५ संशयापसारणरूपोपोद्बलनार्थमवश्यं कश्चिदर्थविशेषः प्रत्यक्षः कार्यः । तदुप-
दिष्टार्थैकदेशस्य च प्रत्यक्षत्वे सति सर्वमपवर्गपर्यन्तं सूक्ष्ममपीदमित्थमेवेति
विश्वस्यते । निश्चयाख्यश्रद्धोत्पादनार्थमेवेदं परिकर्मोपदिश्यत इत्यावश्यकमेतद-
नुष्ठानम् । योगस्य श्रद्धामूलत्वात् । किं च समाधौ जायमाने सत्त्वपुरुषान्यतासाक्षा-
त्कारे वैराग्यादिद्वारोपकारिकाश्चैताः प्रवृत्तयः । तथा हि-अव्यवस्थितचित्तवृत्तिषु
१० तत्तच्छन्धादिप्रवृत्त्या तेषां दोषदर्शनात्तद्विषयकवशीकारसंज्ञवैराग्ये जाते विक्षेप-
ह्रासात्तस्य तस्योत्तरोत्तरभूमिरूपस्यार्थस्य साक्षात्काराय चित्तं समर्थं भवति
यतस्तद्वैराग्ये श्रद्धावीर्यस्मृतिसमाधयोस्य विक्षेपाख्यप्रतिबन्धनिवृत्त्या पूर्णा
भवन्ति । एवं चन्द्रादित्यग्रहमणिप्रदीपरत्नादिषु प्रवृत्तिरपि रूपप्रवृत्तिवद्विषय-
वत्येव बोध्येति दिक् ॥ ३५ ॥

१५ चित्तस्थैर्यनिबन्धनं परिकर्मान्तरमाह—

## विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीति वर्तते । यतो विगतशोकातो वक्ष्य-
माणा ज्योतिष्मती श्रेष्ठः स्थितिहेतुरित्यर्थः । सा द्विविधा । तत्राद्या ज्योतिष्मती
यथा हृदयपुण्डरीक आलम्बने चित्तं धारयतो या बुद्धिसंवित्तत्साक्षात्कारः सा ।
२० यतो बुद्धिरूपं सत्त्वं प्रकर्षेण भास्वरं स्वपरप्रकाशमाकाशवद्विभु च । तत्र
बुद्धौ निर्मलैकाग्र्याया बुद्धिविषया प्रवृत्तिः सा सूर्येन्दुमणिप्रभासदृशाकारेण.
विकल्पते विशेषेणोत्पाद्यते । अतो विषयस्य ज्योतिष्मत्त्वेन तद्विषयप्रवृत्तिरपि
ज्योतिष्मती प्रकाशरूपा । अत्रेयं प्रक्रिया । उदरोरसोर्मध्येधोमुखमष्टदलं पद्मम् ।
तद्रेचकप्राणायामेनोर्ध्वमुखं कृत्वा तत्रालम्बने चित्तं धारयेत् । तन्मध्ये हि
२५ सूर्यमण्डलमकारो जागरितस्थानम् । तदूर्ध्वं चन्द्रमण्डलमुकारः स्वप्नस्था-
नम् । तदूर्ध्वं वह्निमण्डलं मकारः सुषुप्तिस्थानम् । तदूर्ध्वं ब्रह्मव्योमात्मकं
नादस्तुरीयस्थानं यमर्धमात्रेतियोगिनः । तत्कर्णिकायां विष्वग्व्यापिशाखासहस्र-
वत्यां मनोवहनाड्या मूलं तिष्ठति यस्या ऊर्ध्वमुख्येका शाखा सुषुम्नाख्यान्तर-

---

9. B. om. चित्त.
11. A. reads ह्रानात् for ह्रासात्.
22. A. C. read उत्पद्यते for उत्पाद्यते.
26. A. C. read सुषुप्त for सुषुप्ति.
27-8. C. reads सहस्रवत्याः for सहस्रवत्याम्.

सूर्यादिमण्डलमध्यगतया च शाखारूपया ब्रह्मनाड्या नाड्यान्यपि सूर्यादिमण्डलानि प्रोतानि सैव मनोवहा नाडी चित्तस्थानम्। तस्यां धारणातश्चित्तसाक्षात्कारो भवति। द्वितीया यथात्मतत्त्वरूपास्मितायां निर्विशेषसामान्यरूपास्तिभावे विविक्तचिन्मात्ररूपे पुरुषे समापन्नं तद्रूपतापन्नं चित्तं तद्रूपापन्नत्वान्निस्तरङ्ग-
५ महोदधिकल्पं शान्तं शोकाग्निजक्षोभरहितमनन्तं सर्वतोऽनावृतमन्याकारशून्यतयास्मीत्येतावन्मात्राकारतारूपास्मितामात्रम्। न चैतावतैव कृतार्थम्। परवैराग्यार्थं तदभ्यासापेक्षणात्। एषा च स्वस्मिन्परमात्मनि च चित्तस्थितिहेतुत्वात्पूर्वतो विशिष्टा। यत्रेदं पूर्वाचार्यैरुक्तं तं सूक्ष्मतमं श्रवणमननाभ्यामवधार्यास्मीत्येतावन्मात्राकारेण साक्षात्करोतीति। एषाप्यात्मनश्चिज्ज्योतिर्मयत्वा-
१० ज्ज्योतिष्मती। एषा द्वयी चित्तरूपविषयवत्यस्मितामात्रा च विशोका ज्योतिष्मतीत्युच्यते शास्त्रकारैः। आभ्यां च योगिनश्चित्तं स्थितियोग्यतां प्राप्नोति। न चाद्या विषयवतीति पूर्वसूत्रेण संगृहीता। गन्धादिपञ्चक एव विषयशब्दस्य मुख्यत्वात्। तत्रास्मितायाः विशोकात्वं साक्षादेव। तरति शोकमात्मवित् ( छा. ७।१।३ ) इति श्रुतेः। बुद्धिसंविदस्तु संकल्पसिद्ध्या विवेकख्यातिद्वारा वा तत्त्व-
१५ बोध्यम् ॥ ३६ ॥

स्थितिकारणं परिकर्मान्तरमाह—

## वीतरागविषयं वा चित्तम् ॥ ३७ ॥

वीतरागाणां सनकादीनां यच्चित्तं तद्रूपालम्बनेनोपरक्तं तद्धारणया तदाकारतापन्नं योगिचित्तं विरक्तं सदालम्बनान्तरेऽपि स्थितियोग्यतां लभत इत्यर्थः ॥ ३७ ॥

२० तादृशमेव परिकर्मान्तरमाह—

## स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

स्वप्नज्ञानालम्बनं प्रपञ्चे स्वप्नदृष्टिमाचिनम्। 'दीर्घस्वप्नमिमं विद्धि' इति स्मृतेः। निद्राज्ञानालम्बनं सर्वजीवेष्वनात्मकेषु सुषुप्तदृष्टिमाचिनम्। तत्राद्यं क्षणभङ्गुरत्वज्ञानेन वैराग्यद्वारा चित्तस्थैर्यहेतुः। द्वितीयेनापि व्यवहारेषु मिथ्या-
२५ त्वबुद्ध्या वैराग्यमिति विक् ॥ ३८ ॥

परिकर्मान्तरमाह—

## यथाभिमतध्यानाद्वा ॥ ३९ ॥

यदेवाभिमतं हरिहरमूर्त्यादि तदेव ध्यायेत्। तत्र ध्यानाल्लब्धस्थितिकं चित्तमन्यत्रापि विवेकपर्यन्तसूक्ष्मविषयेषु विनैव साधनान्तरं स्थितियोग्यतां लभत इत्यर्थः ॥ ३९ ॥

---

l. 19. B. read नत for सत्.

परिकर्मनिष्पत्तेर्लक्षणमाह—

**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥**

अस्य परिकर्मितचेतसः। परमं महत्त्वं येषां पुरुषादीनां ते परममहत्त्वाः। योगी सूक्ष्मोऽल्पपरिमाणे निविशमानस्यावतिष्ठमानस्य चित्तस्य परमाण्वन्तं
५ स्थितिपदं लभते। एवं स्थूले महत्परिमाणे निविशमानस्य चित्तस्य परममहत्त्वान्तं स्थितिपदं लभते योगी। एवं स्थूलसूक्ष्मरूपं कोटिद्वयं संचरतोऽस्य चित्तस्य योऽप्रतीघातः केनाप्यप्रतिबद्धता तद्रूपो दोषदर्शनजन्यवशीकारसंज्ञारूपाद्वैराग्यात्पर उत्कृष्टो वशीकार इत्यर्थः। तद्रूपवैराग्यानन्तरमपि चित्तस्याभ्यासकृतवशीकारापेक्षणात्तन्निकृष्टम्। तेन परेण वशीकारेण परिपूर्णं समाप्तस्थैर्यसाधनाकाङ्क्षं
१० योगिनश्चित्तं न पुनरभ्याससाध्यं परिकर्मपरिष्कारमपेक्षते। अत एतदुत्कृष्टम्। चित्तपरिष्कारकत्वाच्चैषां परिकर्मेति संज्ञा ॥ ४० ॥

अथैतैः प्रकारैर्लब्धस्थितिकस्य चित्तस्य किं स्वरूपं किंविषया वा समापत्तिस्तदाह—

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थत-**
१५ **दञ्जनता समापत्तिः ॥ ४१ ॥**

क्षीणवृत्तेरपगतप्रत्ययान्तरस्य। समापत्तेरपि प्रत्ययरूपवृत्तित्वात्। समापत्तिः सम्यगालम्बनाकारत्वापत्तिः। *प्रत्यक्षवृत्तिरिति यावत्। तत्स्थतदञ्जनता* तेषु स्थितत्वेन या तदञ्जनता सम्यक्तदाकारता सा समापत्तिशब्दवाच्येत्यर्थः। एवं च संप्रज्ञातफलीभूता प्रज्ञा समापत्तिरित्युच्यते। क्षीणवृत्तेरित्यस्य चायमा-
२० शयः। स्वतः सर्वार्थसाक्षात्कारसमर्थमपि चित्तं विषयान्तरव्यासङ्गरूपदोषेण प्रतिबद्धं भवति। अतो वृत्त्यन्तररूपप्रतिबन्धस्य निःशेषतोपगमे स्वत एव ध्येयवस्तुसाक्षात्कारस्तद्रूपापत्त्याख्यो भवति। अभिजातस्य निर्मलस्य मणेरिवेति दृष्टान्तः। यथा स्फटिको जपाकुसुमाद्युपाधिभेदात्तत्प्रतिबिम्बग्राहितया तद्रूपोपरक्तः स उपाधितुल्याकारतयैव प्रतिभासते तथा ग्राह्येणालम्बनेनोपरक्तं
२५ चित्तं ग्राह्यगतविशेषाकारत्वरूपग्राह्यसमापन्नत्ववदात्मीयरूपमपिधाय ग्राह्यरूपाकारेण निर्भासते। चेतने प्रतिबिम्बितं भवति। ग्राह्यं च त्रिविधम्। तथा हि। तन्मात्रादिप्रकृतिपर्यन्तसूक्ष्मोपरक्तं तत्समापन्नं तत्स्वरूपाभासं भवति। एवं पञ्चमहाभूतरूपस्थूलोपरक्तमित्यादि पूर्ववत्। तथा स्थावरजङ्गमाद्यवान्तरभेदरूपविश्वभेदोपरक्तमित्यादि प्राग्वत्। यद्यपि सूत्रे ग्रहीतृग्रहणग्राह्येष्विति
३० क्रम उक्तस्तथाप्युत्पत्तिक्रमानुरोधाद्ग्राह्यमारभ्य व्याख्यातम्। एवं व्याख्यानेपि

---

20. B. reads यदि for अपि.
27. C. reads स्थूल before सूक्ष्म.

विश्वभेदस्थूलसूक्ष्मोऽपीति क्रमो ज्ञेयः । गृह्यतेऽनेनेति ग्रहणमिन्द्रियम् । तत्रेन्द्रियालम्बनोपरक्तमिन्द्रियसमापन्नत्ववच्चित्तमिन्द्रियस्वरूपाकारेण निर्भासते । अत्रापि विश्वभेदस्थूलसूक्ष्मरूपं त्रैविध्यं द्रष्टव्यम् । अत्र विश्वभेदः स्थावरजङ्गमानां चक्षुरादिविशेषाः । स्थूलं सामान्यं चक्षुरादिकम् । सूक्ष्मं बुद्ध्यहंकारौ । ग्रहीता ५ पुरुषः । ग्रहीतृत्वं ग्रहणफलोपहितत्वं ग्रहीतृपुरुषोपरक्तं तत्समापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते । अत्र ग्रहीतृपुरुषप्रतिबिम्बं चित्तगतं तेनशब्देनोक्तम् । एवं मुक्तपुरुषालम्बनिकेश्वरालम्बनिका च समापत्तिर्ग्रहीतृपदेनैव सूत्रे गृहीता । अस्यां च न स्थूलसूक्ष्मरूपो विशेषः ॥ ४१ ॥

अतो ग्राह्यग्रहणसमापत्त्योर्विशेषानाह—

१० **तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥**

तृतीयसूत्रे सूक्ष्मविषयाया वक्ष्यमाणत्वेनात्र सूत्रद्वये स्थूलविषयकत्वं परिशेषात् । स्थूलं पञ्चमहाभूतान्यहंकारकार्येन्द्रियाणि च । तत्र सविकल्पिकाया एतद्विषयसमापत्तेरिदं लक्षणं गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्येवमभे-
१५ देन वस्तुतो भिन्नानामपि विकल्पाख्यं ज्ञानं लोके दृष्टम् । न चाभेदो वास्तव एवास्त्विति वाच्यम् । यतः परीक्षकैर्विविच्यमाना एते तारत्वमन्दत्वादिधर्मवत्त्वादर्थज्ञानाभ्यां भिन्नाः शब्दाः । जडत्वमूर्तत्वादिधर्मवत्त्वादन्येऽर्थाः । प्रकाशामूर्तत्वादिधर्मवत्त्वादन्यदेव ज्ञानमिति । एषां स्वरूपभेदोपपादको धर्माणां मिथो व्यावृत्तत्वरूपो मार्गः । अभेदविकल्पे बीजं तु परस्पराविभाग एव । न च वि-
२० कल्परूपैव समापत्तिरतो विकल्पैः संकीर्णेत्यनुपपन्नमिति वाच्यम् । गवादौ स्थूलभूतेन्द्रियेषु समाहितचित्तस्य योगिनः समाधिप्रज्ञायां समारूढो यो गवाद्यर्थः स यदि गौरयं भासत इत्येवं शब्दार्थज्ञानानामभेदभ्रमरूपेण विकल्पेन विषयीकृतो भवति तदा तस्या विकल्पविषयीभवदर्थविषयकत्वमात्रेण विकल्पसंकीर्णत्वोक्तेः । अत्र हि गौरयमित्यंशे शब्दार्थयोर्विकल्पः । भासत इत्यंशेऽर्थज्ञानयोः ।
२५ भासत इत्यस्य हि प्रकाशात इत्यर्थः । विषयस्य ज्ञानकर्तृत्वं चाभेदरूपमेव । ज्ञानाकारत्वस्यैव विषयत्वात् । इयं च समापत्तिः सवितर्केति सविकल्पिकेति चोच्यते । लोकेऽप्येतद्ग्राममेव सविकल्पकमित्युच्यते । इयं च समापत्तिरपरं प्रत्यक्षमित्युच्यते । अविद्यासंबन्धात् । अत्रेदं बोध्यम् । श्रुतस्यानुमानेन कृतमननस्यार्थस्य समाधिविषयता । तत्र श्रवणं शब्दसंकेतस्मरणपूर्वकम् । संकेतश्चायं गौरि-
३० ति शब्दार्थयोरितरेतराध्यासात्मकः । एतद्वै तत्सत्यं च ब्रह्म यदोंकारः ( प्र. ५।२ ) इत्यादिश्रुतावमरा निर्जरा देवाः ( अमरको. १।१।७ )

---

4. C. reads सामान्य for सामान्यम् .
7. A. reads सूत्रेण for सूत्रे.

इत्यादिकोशेषु च संकेतस्य विकल्पिताभेदरूपत्वावधारणात् । अतस्तत्स-
मानाकार एव शाब्दबोधस्तन्मूलकमनुमानं च तथैव भवतीति तन्मूलिका
समाधिप्रज्ञापि प्रथमा तादृश्येव भवति । यदा तु तदनन्तरमर्थमात्रा-
दरवता चेतसा संकेतस्मृतेः परिशुद्धिस्त्यागः क्रियते तदा तत्स्मृतिनिमि-
५ त्तकः श्रुतानुमानज्ञानकालिकविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणाव-
स्थितोऽर्थः स्वस्वरूपाकारेणैव भासते । आरोपगन्धस्याप्यभावात् । सा निर्वितर्का
समापत्तिः । आरोपसंपर्काभावादेव तत्परं प्रत्यक्षमित्युच्यते । तच्च श्रवणमनन-
योर्बीजम् । तादृशप्रत्यक्षवतो गुरोर्हि ते प्रभवतः । अशेषविशेषसाक्षात्काररर-
हितेन गुरुणाऽसंदिग्धाविपर्यस्तवस्तूपदेशासंभवात् । अतः सवितर्कानधिगत-
१० विशेषविषयत्वादस्या एवानधिगतार्थगन्तृत्वरूपं प्रामाण्यम् । न च तादृशगुरू-
पदेशादेव तत्सिद्ध्येयं व्यर्था । गुडादिविशेषज्ञत्वेऽपीक्षुक्षीरादिमाधुर्यविशेषवद्गुरु-
णापि तस्य विशेषतो वक्तुमशक्यत्वेन श्रुतानुमानयोस्तत्समानाकारत्वासंभवात् ।
तस्मात्प्रमाणान्तरासंकीर्णं योगिनो निर्वितर्कं समाधिजं दर्शनम् ॥ ४२ ॥

अतो निर्वितर्कां समापत्तिं लक्षयति—

## १५ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

शब्दसंकेतस्मृतिजन्या श्रुतानुमानरूपे ज्ञाने या विकल्परूपा स्मृतिः सवि-
तर्ककालेऽनुवर्तमाना तत्परिशुद्धौ तदपगमे सति स्वं रूपं ग्रहणात्मकं
प्रज्ञारूपं तच्छून्येव तदग्रहणात् । एवं च ग्राह्यार्थमात्रनिर्भासा तन्मा-
२० त्रस्वरूपापन्नेव सा निर्वितर्का समापत्तिरित्यर्थः । अस्या एव निर्वि-
कल्पेत्यपि व्यवहारः । वितर्कविचारेति सूत्रे यः स्थूलविषयकाभोगो वितर्क
उक्तः स एवात्रेत्थं द्विधोक्तः । नन्वस्या विषया यद्यवयवास्तर्हि वक्ष्यमाणनिर्वि-
चारसमापत्त्या संकरः । यद्यवयवी तदा तस्य कल्पितत्वेनास्या निर्विकल्पशून्य-
त्वानुपपत्तिरिति चेन्न । गवादिर्घटादिर्वा लोकोऽवयवातिरिक्तावयविरूप आलम्बन-
२५ मिति पूर्वाचार्यैर्व्याख्यातत्वात् । न चातिरिक्तावयविनि न प्रमाणम् । एको

---

1. A. C. read ततः for अतः.
4–5. A. C. read निमित्तक for निमित्तकः.
8. B. om. प्र before भवतः.
13. B. C. read असंकीर्णं for असंकीर्णम्.
13. B. C. read निर्वितर्कं for निर्वितर्कम्.
20–1. C. reads निर्विकल्पिका for निर्विकल्पा.
24. A. reads रूप for रूपः.

गौरिति बुद्ध्या तत्सिद्धेः । अवयवानामनेकत्वेनैतद्बुद्ध्यनिर्वाहकत्वात् । न
चैकमेकं विज्ञानमेवावयविव्यवहारहेतुरस्तु । दृश्यस्वरूपत्वरूपार्थात्मकत्वात् ।
विज्ञानस्य कर्तृकर्मविरोधेन स्वदृश्यत्वानुपपत्तेः । न चावयवेभ्योऽवयविनो भेदे
कपालं घटो जात इत्यभेदप्रत्ययानुपपत्तिः । तन्मात्रकार्याणां परमाणुरूपाणाम-
५ णूनामेव प्रचयाख्यो यः संयोगस्तन्निमित्तकविशेषपरिणामरूपत्वात् । एतेन
परमाणव एव नानात्मानो निर्विकल्पविषया इत्यपास्तम् । तेषां योगिनो योग्य-
त्वेऽपि महत्त्वसमानाधिकरणैकत्वग्राहिप्रत्ययविषयत्वायोगात् । न च परमार्थसत्सु
परमाणुषु प्रातिभासिकं स्थौल्यम् । असति बाधके वस्तुत्वेन प्रतीयमानस्याप-
लापायोगात् । सामान्यविशेषयोश्च भेदाभेदाङ्गीकाराच्चाभेदप्रत्ययानुपपत्तिः ।
१० अन्योन्याभावस्य दुग्धजलयोरिवाविभागरूपाभेदस्य चाविरोधात् । न चावय-
विनः पटस्यैकावयवनाशे नाशापत्त्यानुपलब्धिप्रसङ्ग इति वाच्यम् । स संस्थान-
विशेषरूपः स्थूलोऽवयवी स्वकारणभूतसूक्ष्माणां साधारणः प्रत्येकपरिसमाप्तो धर्मो
न तु द्वित्वादिवद्व्यासज्यवृत्तिः । एकावयवव्यवधाने प्रत्यक्षत्वापत्तेः । एवं
चैकावयवनाशेऽप्यवयवान्तरे तदवस्थित्या तदुपलब्धिसंभवाद्विजातीयावयव-
१५ विभाग एव तन्नाशकः फलबलात्कल्प्यते । न चासत्त्वादे शशशृङ्गादिक-
मपि स्यात् । तस्य सदैव सूक्ष्मभूतेष्वनुगतत्वेन तदात्मभूततयाऽसदुत्पादान-
ङ्गीकारात् । तदात्मभूतत्वे चाभिव्यक्तिलक्षणं कार्यमेवानुमापकम् । असदभि-
व्यक्तौ सर्वत्र सर्वाभिव्यक्त्यापत्तेः । न चैवं सर्वत्राभिव्यक्त्यापत्तिः । स्वाभि-
व्यक्तिहेतुनिमित्तकारणसहकारेण स्ववर्तमानावस्थाप्रातिरूप्यप्रादुर्भावाङ्गीकारात् ।
२० मुद्गरघातादिना कपालादिरूपधर्मान्तरोदयेऽतीतावस्थारूपतिरोभावाङ्गीकारात् ।
स एषोऽवयवानां धर्मोऽवयवीत्युच्यते । अतीतानागतावस्थ एव च ध्वंसप्राग-
भावौ । घटो वर्तमान इति व्यवहारश्चाभिव्यक्त्या । अभिव्यक्तेरभिव्यक्तिस्तू-
त्पत्तेरुत्पत्तिवद्भावेऽभाववत्स्वरूपैवेति नानवस्था । यद्वा सत एवाभिव्यक्ति-
रित्येव सत्कार्यवादिनां नियमः । अभिव्यक्तेरभिव्यक्त्यन्तरास्वीकारेणासत्या
२५ एवोत्पादेऽपि न क्षतिः । कार्याणामनागतावस्थैवाभिव्यक्तेरनागतावस्था । सैव
तदुत्पत्तौ नियामिका । अतः शशशृङ्गादिवैलक्षण्यम् । अभिव्यक्तेर्पदस्वरूपत्वं
तु न । घटोऽतीत इति व्यवहारानुरोधेन स्वीकृतातीतावस्थघटेनाभिव्यक्तिव्यव-
हारापत्तेरिति दिक् । सोऽवयव्येको महान् । कार्यं परमसूक्ष्मत्वाभावात् । स्पर्शवांश्च
क्रियावांश्च नित्यश्चेत्यतो नावयवरूपोऽवयवविलक्षणो जलाहरणादिव्यवहारकारी

12. B. O. read रूप for रूपः
14. A. B. om. अपि.
21. A. om. सः.
28. B. S. read उपपत्तेः for आपत्तेः.
29. O. reads अवयवविलक्षणः for अवयवविलक्षणः.

च । यत्तु वैनाशिक आह—स प्रचयनिमित्तको विशेषोऽवयव्यवस्तुकस्तुच्छः । तथा हि यत्सत्तदनवयवं यथा विज्ञानम् । किं च यत्सत्तद्विरुद्धधर्मसंसर्गरहितमस्ति चावयविनि विरुद्धधर्मसंसर्गस्तद्देशत्वातद्देशत्वरक्तत्वारक्तत्वादिरूप इति सत्त्वव्यापकविरुद्धोपलब्ध्या सत्त्वाभावे तुच्छत्वं पर्यवसन्नमिति । तन्न । यतस्तस्या-
५ वयवाख्यकारणस्य सूक्ष्मत्वेनाप्रत्यक्षत्वादवयविनश्च तुच्छत्वात्सर्वमेव ज्ञानं मिथ्याज्ञानं स्यात् । अतद्रूपप्रतिष्ठस्यैव मिथ्याज्ञानत्वात् । एवं च विषयाभावात्सम्यग्ज्ञानाविलयापत्तिः । उपलम्भविषयस्य सर्वस्यावयवित्वाक्रान्तत्वात् । अवयवानामप्रत्यक्षत्वात्तज्ज्ञानं सम्यग्ज्ञानमिति वक्तुमशक्यमेव । अवयविविषयकत्वेन पराभ्युपगतज्ञानस्यापि रूपादिवन्मिथ्यात्वेन ज्ञानज्ञानं
१० सम्यग्ज्ञानमित्यपि वक्तुमशक्यम् । सर्वं ज्ञानं भ्रमो ज्ञानत्वादित्यनुमानसंभवाच्च । यदुक्तं सत्त्वं विरुद्धधर्मसंसर्गराहित्यव्याप्तमिति तन्न । अर्थक्रियाकारित्वरूपं सत्त्वं घटादीनामिष्यते । तच्च न स्थूलत्वादन्यत् । तस्य च तथात्वाभावात् । न चासद्व्यावृत्तिरेव सत्त्वम् । तच्च तद्व्याप्तमेव । अगृहीतपरमसूक्ष्मत्वा निरन्तरसंबद्धा रूपपरमाणव एवानुभवविषया इति वाच्यम् । गन्धरसस्पर्शपरमाणुभिः
१५ परस्परं सर्वेषां सान्तरत्वात् । एवं चान्तरालाग्रहेण जायमानस्यास्य विकल्परूपत्वान्नदगृहीतसत्त्वस्यानवयवत्वसाधकत्वाभावात् । उक्तयुक्त्या परमाणूनां ज्ञानविषयत्वासंभवाच्च । तस्मादस्त्यवयवी यो महत्त्वादिव्यवहारविषयो निर्वितर्कायाः समापत्तेर्विषय इति ॥ ४३ ॥

सूक्ष्मविषयेऽपि द्वैविध्यमतिदिशति—

२० **एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

एतया सवितर्कनिर्वितर्करूपस्थूलविषयसमापत्त्या सूक्ष्मविषयापि सविचारनिर्विचारत्वाभ्यां द्वयी व्याख्याता । अन्योपरागानुपरागसाम्येनेत्यर्थः । सूक्ष्मविषयकाभोगो विचार इत्युक्तस्तस्येदं द्वैविध्यं मन्तव्यम् । भूतानामिन्द्रियाणां च

---

7. B. om. सर्वस्य.
11. B. S. read for विरुद्धधर्मसंसर्गराहित्यं सत्त्वव्याप्तम् सत्त्वं विरुद्धधर्मसंसर्गराहित्यव्याप्तम् .
17. C. reads अविषयत्व for विषयत्व.
19. B. reads विषयत्वे for विषये.
22. B. reads निर्विकल्प for निर्वितर्क.
24. C. reads विषयको भोगो for विषयकाभोगो.
24. B. om. च.

यत्सूक्ष्मं कारणं तन्मात्रादिप्रकृतिपर्यन्तं तेषु वर्तमानधर्मविशिष्टेषु देशकालनि-
मित्तैर्विशिष्टतयानुभूयमानेषु या समापत्तिः सा सविचारेत्युच्यते । देश उपर्यधः-
पार्श्वादिः । कालो वर्तमानः । निमित्तं परिणामप्रयोजकः पुरुषार्थविशेषः ।
अत्राप्येकबुद्धिनिर्ग्राह्यं वर्तमानधर्मविशिष्टं भूतसूक्ष्मं तन्मात्राद्यवयविरूपं सूक्ष्म-
५ मालम्बनं समाधिप्रज्ञायामारूढं भवति । एवं च स्थूलकार्योपरागेण सूक्ष्मे समा-
पत्तिः सविचारा । कार्यकारणविचारघटितत्वात् । तत्र हि स्थूलकार्यं घटादि ।
वैशिष्ट्यं तत्र चाणूनामुपर्यधोदेशावच्छिन्नत्वं गृह्यते । तत्र पार्थिवपरमाणौ
गन्धतन्मात्रप्रधानपञ्चतन्मात्रानुगमः । आप्ये गन्धतन्मात्रं विहाय रसतन्मात्र-
प्रधानचतुरनुगमः । तैजसे तद्द्वयं विहाय रूपतन्मात्रप्रधानत्र्यनुगमः । वायवीये
१० स्पर्शशब्दतन्मात्रानुगमः । नाभसे शब्दतन्मात्रानुगम इत्येवं विशिष्टा बुद्धि-
रुपजायते । तन्मात्रं च गन्धाद्यणुप्रचयात्मकात्रयाविरूपम् । या पुनः सर्वैः
स्वरूपैर्देशकालाद्यनवच्छेदेन सर्वधर्मानुगतेषु सर्वधर्माश्रयेषु च भूतसूक्ष्मेष्वती-
तवर्तमानभविष्यद्धर्मानवच्छिन्नत्वेन समापत्तिः सा निर्विचारा । उक्तस्वरूपं हि
भूतसूक्ष्मं कार्यानवच्छिन्नत्वेन शुद्धस्वस्वरूपेण समाधिप्रज्ञायामालम्बनं सन्तेनैव
१५ रूपेण तामुपरञ्जयति । प्रज्ञा च स्वस्वरूपेणापि शून्यार्थमात्रा यदा भवति तदा
निर्विचारा । एतयोर्विकल्पत्यागात्यागाभ्यां न भेदद्वयम् । निर्वितर्करूपायां पूर्व-
भूमिकायां त्यक्तविकल्पस्योत्तरभूमिकायामसंभवादिति दिक् ॥ ४४ ॥

तत्र सूक्ष्मो विषयः कियत्पर्यन्त इत्याकाङ्क्षायामाह—

## सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

२० सूक्ष्मत्वं तत्त्वान्तरप्रकृतित्वम् । तेन पार्थिवादिपरमाणवो न सूक्ष्माः । ते तु-
न्तरभूतेष्वाधारकारणानि न तु प्रकृतयः । अष्टौ प्रकृतय इति सिद्धान्तात् ।
एवं च केवलविकृतत्वं स्थूलत्वं परमाणुसाधारणम् । अलिङ्गं प्रकृतिः । तत्पर्यन्तं
पञ्चतन्मात्रमारभ्य सूक्ष्मविषयत्वमित्यर्थः । तथा हि—पार्थिवस्याणोर्गन्धतन्मात्रं
सूक्ष्मम् । तत्र पार्थिवाण्वपेक्षया गन्धतन्मात्रं समापत्तेः सूक्ष्मो विषयः ।
२५ यद्यप्यसौ पञ्चतन्मात्रारब्धस्तथापि गन्धतन्मात्रस्य प्राधान्यात्तदेव तस्य
सूक्ष्ममुक्तम् । एवमाप्यस्य रसतन्मात्रं तैजसस्य रूपतन्मात्रं वायवीयस्य
स्पर्शतन्मात्रमाकाशस्य शब्दतन्मात्रम् । यद्यप्यहंकारविशिष्टस्यैवास्य तत्का-
रणत्वं तथाप्युक्तन्यायेनास्यैव तत्सूक्ष्मत्वमुक्तम् । तेषां तन्मात्राणामहंकारः
सूक्ष्मः । एवमिन्द्रियाणामपि स सूक्ष्मः । उभयकारणत्वात् । अहं-

---

2. B. reads वा for या.
5. C. reads स्थूला for स्थूल.
6. B. C. read कार्य for कार्यम्.
22. C. reads विकृतित्वम् for विकृतत्वम्.

कारस्यापि लिङ्गमात्रं महत्तत्त्वं सूक्ष्मो विषयः । तद्धि स्वकारणप्रकृत्यनुमापकमात्रत्वाल्लिङ्गमात्रम् । अङ्कुरवत्प्रकीर्तिगतसर्वविशेषाणामहंकारादिष्वेव प्रकटीभावात् । यथा पत्रकाण्डादिभिर्बीजगतविशेषाभिव्यक्तिर्नाङ्कुरमात्रेणेति । तस्याप्यलिङ्गं प्रधानं सूक्ष्मो विषयः । अकार्यत्वेन कस्याप्यननुमापकत्वात् ।
५ ततः परसूक्ष्माभावात् । नन्वस्ति पुरुषस्ततोपि सूक्ष्मो निर्धर्मकत्वादिति चेन्न । यथोपादानतया लिङ्गापेक्षं सौक्ष्म्यं प्रधानस्य तादृशस्य पुरुषेऽभावात् । उपादानतया सूक्ष्मस्यैवात्र विवक्षितत्वात् । स च न महदाद्युपादानकारणम् । किं त्वधिष्ठानकारणरूपं निमित्तकारणमेव । तस्य तादृशहेतुत्वमादायैव "यतो वा इमानि भूतानि" ( तै. ३।१।१ ) इत्यादिश्रुतिः । श्रुत्याप्यधिष्ठानत्वरूपमेवो-
१० पादानत्वेनोच्यत आकाशस्य वायूपादानत्ववत् ।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् । ( भ. गी. ९।१० )

इति गीतोक्तेः । पुरुषस्य विकारित्वापत्तेश्च । जीवपुरुषाणां महदादिसृष्टिहेतुत्वं संयोगमात्रेण नोपादानत्वेन । पुरुषार्थं प्रकृतेः प्रवृत्त्यभ्युपगमादिति दिक् । अतः प्रधाने निरतिशयं सौक्ष्म्यमुक्तम् । एवं ग्राह्यग्रहणसमापत्त्योः स्थूलसूक्ष्मविषय-
१५ भेदेन विशिष्टाविशिष्टरूपतश्चतुर्धा विभाग उक्तः । ग्रहीतृसमापत्तौ यः सविकल्पकरूपो विशेषः स एतास्वेव चतसृष्वन्तर्भूतः । चेतनोपरागेणैवाचेतने योगस्य व्यवस्थापितत्वात् ॥ ४५ ॥

इदानीं यथोक्तसमापत्त्याख्यकार्यमुखेन सबीजपरिभाषापूर्वकं संप्रज्ञातलक्षणमाह—

२० **ता एव सबीजः समाधिः ॥ ४६ ॥**

ता एव ग्रहीतृग्रहणग्राह्येषु समापत्तयः सबीजः संप्रज्ञातयोग इत्युच्यत इत्यर्थः । समापत्तिरूपसाक्षात्कारहेतुत्वाद्योगोपि समापत्तिः । आनन्दोपि बुद्धिधर्मत्वाद्ग्राह्यमध्य इत्यानन्दानुगतस्यापि संग्रहः । एषां सबीजत्वं च बहिर्वस्तुभूतानात्मधर्मसंस्कारधर्मादिरूपबीजजनकसमापत्तिसंबन्धित्वात्संप्रज्ञातयोगस्यापि सं-
२५ स्कारहेतुत्वाद्धर्ममेघत्वाच्च । ताश्च वितर्कानुगतादिरूपतया प्रागुक्ताश्चतस्रः—सवितर्कनिर्वितर्कौ स्थूलानुगतत्वाद्वितर्कानुगतः, सविचारनिर्विचारौ च सूक्ष्मानुगतत्वाद्विचारानुगत, आनन्दानुगतास्मितामात्रौ चेति । एतेन यन्मिश्रैरानन्दानुगतास्मितामात्रयोर्विकल्पाविकल्पभेदावनियतौ स्त इत्युक्त्वा सबीजस्याष्टविधत्वमुक्तं तच्चिन्त्यम् ॥ ४६ ॥

३० निर्विचारायां कंचिद्विशेषमाह—

**निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥**

---

16. B. reads अचेतनयोग्यस्य for अचेतने योगस्य.
20. A. reads एताः for ताः.

वैशारद्यं च रजस्तमोवृद्धिकारणपापाद्यात्मकाशुद्धिरूपावरणलक्षणमलापेतस्य प्रकाशस्वभावस्य बुद्धिरूपसत्त्वस्य कारणाभावादेव रजस्तमोनभिभूतोऽतः स्वच्छो ध्येयगताशेषप्रतिबिम्बग्राह्येकाग्रताधारारूपो यः स्थितिप्रवाहः सः । यदा च निर्विचारस्य समाधेरुक्तं वैशारद्यं जायते तदात्मनि बुद्धौ पुरुषे च भूतार्थविषयको युगपत्सर्वार्थग्राही प्रत्यक्षरूपो यः प्रज्ञास्य आलोको जायते सोऽध्यात्मप्रसादः । तदुक्तम्—

> प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
> भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति ॥

इति । " तरति शोकमात्मवित् " ( छा. ७।१।३ ) इति श्रुतेरयं दुःखीन्यादिरूपैरशोच्यः सर्वाञ्जनाञ्शोचतो दुःखितान्पश्यति स्वयंशोच्यो हि स्वापेक्षया कंचित्सुखितमिव पश्यति मौढ्यात् । अशोच्यस्त्वमूढत्वात्सर्वं दुःखसमुद्रमग्नमेव पश्यतीत्यर्थः । एवं च निर्विचारवैशारद्ये जाते स्वयमेव प्रकृतिपुरुषविवेको वा परमेश्वरतत्त्वं वा साक्षात्क्रियते न तु तदर्थं पुनर्योगापेक्षेत्यस्या उत्कर्षः ॥ ४७ ॥

सबीजयोगे जायमानप्रज्ञायास्तान्त्रिकीं संज्ञामाह—

## ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥

तत्र सबीजयोगे समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतंभरेति संज्ञा । सत्यमेव बिभर्ति न तु तस्यां विपर्यासरूपज्ञानलेशोऽप्यस्तीत्यन्वर्था सा । तत्रेत्यनेन पूर्वसूत्रोक्तस्य न परामर्शः । उत्तरसूत्रतोऽत्र समाधिप्रज्ञासामान्यपरत्वस्यैव लाभात् । अतस्तच्छब्देन सबीजस्य चरमा कक्षाऽस्मितामात्ररूपा विवक्षिता । अन्वर्थत्वबलात् । आद्यत्रयेऽविद्यालेशसंपर्कोऽस्तीति बोध्यम् । तदुक्तम्—

> आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
> त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥

इति । ध्यानस्य चिन्तनस्याभ्यासे यो रस आदरस्तेन श्रवणमनननिदिध्यासनैस्त्रिभिर्हेतुभिर्योगकाले प्रकर्षेण विपर्यासराहित्येन प्रज्ञां कल्पयन्नुत्पादयंस्तत्पश्चया परवैराग्यद्वारेणोत्तमं योगं निर्बीजं लभत इत्यर्थः ॥ ४८ ॥

ननु श्रुतानुमानाभ्यामेवार्थतत्त्वग्रहणे किं योगेनेत्यत आह—

## श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥

सा तु श्रुतानुमानरूपप्रज्ञाभ्यां श्रवणमननाभ्यां भिन्नविषया विशेषार्थविषयकत्वादित्यर्थः । तथा हि श्रुतमागमजं ज्ञानं हि सामान्यविषयम् । तस्य विशेषाभिधानेऽसमर्थत्वात् । पदार्थतावच्छेदकघटत्वाद्यवच्छिन्ने हि संकेतग्रहः

---

17. B. reads तस्याः for तस्याम्.
19. A. reads तत्र; C. reads अत्र for अतः.

शब्दस्य न तु विशेषे । तेषामनन्तत्वात् । श्रुतेऽप्यर्थे विशेषसंशयदर्शनाच्च । अनुमानमपि व्यापकतावच्छेदकगतित्वादिसामान्येनैव भवति । न तु क्रियादिगतविशेषरूपैरिति तदपि सामान्यविषयमेवेत्युक्तं प्रमाणलक्षणे । यद्यपि परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनो द्रव्यत्वे सति परस्परं व्यावर्तमान-
५ त्वादित्यनुमानेन विशेषवत्ता गृह्यते तथापि विशेषवत्त्वेनैव रूपेण न तु तत्तद्रूपेणेति बोध्यम् । अतः श्रुतानुमानविषयो न कोऽपि विशेषः । न च लौकिकप्रत्यक्षेणैव तर्हि विशेषो गृह्यतां किं योगेनेति वाच्यम् । सूक्ष्मव्यवहितविप्रकृष्टविशेषाणां लौकिकप्रत्यक्षागोचरत्वात् । न चेदृशो विशेषोऽप्रामाणिकत्वान्नास्त्येवेति वाच्यम् । प्रमाणस्य प्रमेयसत्ताव्यापकत्वाभावात् । अप्रमाणकेऽपि चन्द्र-
१० वर्तिहरिणे प्रामाणिकानां संदेहदर्शनादिति मिथः । किं च न हि निर्विशेषं सामान्यमिति न्यायेन सर्ववस्तूनि विशेषसिद्धेः । योगिप्रत्यक्षसिद्धत्वाच्च । अतः पारिशेषात्स विशेषः समाधिप्रज्ञानिर्ग्राह्य एव । प्रकाशस्वभावस्य सर्वदर्शनसमर्थस्यापि चित्तस्य तमसाऽऽवृतत्वात्प्रैव रजसोद्घाटनं क्रियते तत्रैव ग्राहकत्वम् । यदा त्वभ्यासवैराग्याभ्यां रजस्तमोमलयोरपगमस्तदा प्रकाशानन्त्यात्सर्वविषय-
१५ ग्राहकत्वसंभवः । यद्यपि स्थूलगतो विशेषः कदाचिल्लौकिकप्रत्यक्षगोचरोऽपि तथापि भूतसूक्ष्मगतस्य पुरुषगतस्य च तद्ग्राह्यत्वमेव । पुरुषगतविशेषाश्चातीतानागतवर्तमानाः स्वस्वोपाधिप्रतिबिम्बा एव मुक्तामुक्तसाधारणाखिलपुरुषेष्वन्योन्यं बोध्याः । अन्तःकरणस्य विभुत्वेनातीतादीनां स्वरूपतः सत्त्वेन सर्वार्थसंनिकर्षो यद्यप्यस्ति तथापि व्यवहितातीतादिज्ञानप्रतिबन्धकतमोनि-
२० रासार्थं योगजधर्मापेक्षेति दिक् । एतेन दशमस्त्वमसीतिवच्छब्दादेवात्मनः साक्षात्कारो निर्विशेषत्वेन चात्मनो न विशेषग्रहार्थमपि योगजप्रत्यक्षापेक्षेति चिन्त्यम् । एवं समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतो नवो नवः संस्कारो जायत इति दिक् ॥ ४९ ॥

नन्वेवमपि प्रज्ञापर्यन्तं योगापेक्षास्तु तत्परंपरायाः किं फलमत आह—

२५ **तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥**

प्रतिबन्धः कार्यविरोधित्वम् । समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानजमनुद्बुद्धसंस्काररूपं संस्काराशयं बाधते । उद्बोधप्रतिबन्ध एव बाधः । उद्बुद्धस्य बाधासंभवात् । अन्यथानादिना निरूढेन निबिडेनातिबलीयसा वात्यामध्यवर्तिप्रदीपपर-

---

9. B. reads अप्रामाणिके for अप्रमाणके.
13. B. reads तमः for रजसा.
17. C. reads एवं मुक्तामुक्त for एव मुक्तामुक्त.
26. B. C. read भवः for प्रभवः.

माणुरिवायमभिभूयेत । नन्वेकप्रज्ञाव्यक्त्योत्पादितसंस्कारेण व्युत्थानसंस्कारबाधसंभवे पुनः पुनः संप्रज्ञातानुष्ठानं व्यर्थमिति चेन्न । एकदा संप्रज्ञातेन व्युत्थानसंस्कारबाधाभावात् । श्रुतिस्मृतिसिद्धस्य पुनः पुनर्व्युत्थानस्यानुपपत्तेः । किं तु संप्रज्ञातपरंपराजन्यदृढतरसंस्कारेणैव तद्बाधः । अद्यैस्तु प्राथमिकैः ५ संप्रज्ञातसंस्कारैस्तेषां तनुतापरंपरैव क्रियते । एवं च संस्कारदार्ढ्यार्थं प्रज्ञासंस्कारचक्रापेक्षणाददोषः । भूतार्थपक्षपातायाः बुद्धेर्यावत्तत्त्वप्रतिलम्भमेव भ्रमणम् । तत्प्रतिलम्भे तु तत्र स्थिरपदानादिमपि तादृशं व्युत्थानसंस्कारं बाधत एव । तदुक्तं बाह्यैरपि—

निरुपद्रवभूतार्थस्वभावस्य विपर्यये ।
१० न बाधोनादिमत्त्वेपि बुद्धेस्तत्पक्षपाततः ॥

इति । तदुक्तं भाष्ये—व्युत्थानसंस्काराणां तनूकरणरूपादभिभवात्तत्प्रभवाः प्रत्यया न भवन्ति तत्प्रत्ययनिरोधे समाधिरुपतिष्ठते निरन्तरो भवति ततः समाधिजा प्रज्ञा ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराशयो जायते ततः प्रज्ञा ततश्च संस्कारा इति] । न च प्रज्ञा साक्षादेव व्युत्थानसंस्कारबाधिकास्तु । १५ एकप्रज्ञयैव तद्बाधे व्युत्थानानुपपत्तेः । तज्जसंस्कारं दृढतरत्वरूपवैजात्यसंभवेन तस्यैव व्युत्थानसंस्कारबाधकतावच्छेदकत्वाच्चानुपपत्तिः । न च प्रज्ञासंस्कारातिशयेपि चित्तस्य स्वकार्यजननक्षमत्वरूपसाधिकारत्वनिवृत्तौ मानाभावेन पुनर्जन्मापत्तिः । तेषामेव समाधिप्रज्ञाप्रसवहेतूनां सत्त्वात् । एवं च संप्रज्ञातजन्यज्ञानमात्रेणापि प्रारब्धसमाप्त्यनन्तरं मोक्षाभ्युपगमो विरुध्येतेति २० वाच्यम् । प्रज्ञाकृतसंस्काराणां जन्मकारणाविद्यादिक्लेशक्षयहेतुत्वेन चित्तस्य स्वकार्यभोगक्षमत्वरूपाधिकारवैशिष्ट्याकारकत्वात्कर्मनाशाच्च । किं च चित्तस्य विवेकख्यातिपर्यन्तमेव व्यापारेण विवेकख्यातिनिष्पत्तौ सत्यां प्रवर्तकपुरुषार्थाभावेन चित्तस्य स्वकार्यादवसादात् । एवं च भोगाधिकारप्रशान्तिः प्रज्ञासंस्काराणां फलमित्युक्तं भवति ॥ ५० ॥

२५ इदानीमसंप्रज्ञातस्य फलादि वदन्नेव चित्तस्य प्रज्ञाप्रवाहरूपस्वकार्याकरणे हेत्वन्तरमाह—

## तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

पूर्वपूर्वासंप्रज्ञाते तावत्प्रज्ञैव निरुध्यते । प्रज्ञासंस्कारस्य तु तानवम् । एवं क्रमेण तस्यापि प्रज्ञाकृतसंस्कारस्याप्यसंप्रज्ञातपरंपरया निरोधेऽत्यन्ताभिभवे

---

1. A. reads प्रत्यय for प्रज्ञाव्यक्त्या.
28. B. reads संप्रज्ञाते for असंप्रज्ञाते.
28. B. om. एवम्.

जायमाने प्रज्ञातत्संस्काराणां सर्वेषां निरोधादत्यन्तविलापनाद्दुःखबीजसंस्कारादिशून्यत्वेन प्रज्ञाप्रवाहजनकप्रज्ञासंस्कारशून्यत्वेन च निर्बीजः समाधिरसंप्रज्ञाताख्य इत्यर्थः। एवं च चरमासंप्रज्ञातव्यक्तिर्निर्बीजयोगस्य परा काष्ठा। पूर्वपूर्वासंप्रज्ञातव्यक्तीनां तु क्रमेण बीजतानवकरणाद्गौणं निर्बीजत्वम्। एवं च ५ चरमासंप्रज्ञाते सर्वसंस्कारक्षयाच्चे चित्तस्य साधिकारत्वं न कुर्वन्ति। स च संप्रज्ञातादेव परवैराग्यद्वारेण जायते। एतेनासंप्रज्ञातपरंपरायाः प्रज्ञातत्संस्कारात्यन्तलयः फलमुक्तम्। तदुक्तं भाष्ये–स निर्बीजयोगः समाधिप्रज्ञाविरोधिनः परवैराग्याज्जायमानो न केवलं समाधिप्रज्ञाया विरोधी किं तु प्रज्ञाकृतसंस्काराणामप्यभिभावकः। न चैवं सकृदसंप्रज्ञातेनैव सर्वसंस्कारबाधे व्युत्थानानुपपत्तिरिति कुतः १० स बाधकः। निरोधसंस्कारस्य निरोधपरंपरया दृढतरत्वरूपवैजात्यवत एव समाधिजसंस्कारबाधकत्वान्न तु साक्षादेव संस्कारविलापकत्वं तस्येत्यदोषादिति। एतेन वैराग्यजं ज्ञानं प्रज्ञामात्रं बाधतां संस्कारं त्वज्ञानरूपं कथं बाधते। दृष्टा हि जाग्रतोपि स्वप्नादिदृष्टार्थस्मृतिरित्यपि परास्तम्। संस्कारस्यैव विरोधिसंस्कारबाधकत्वात्। ननु निरोधस्य संस्कारशेषचित्तावस्थामात्ररूपत्वेन ज्ञान-१५ रूपत्वाभावाज्ज्ञानस्यैव च संस्कारजनकत्वात्कथं संस्कारजनकत्वमिति चेन्न। असंप्रज्ञातनिरोधे मुहूर्ताहोरात्रमासादिक्रमेण कालवृद्ध्यनुभवेन निरोधावस्थचित्तजन्यसंस्कारास्तित्वानुमानात्। संस्कारवृद्धिव्यतिरेकेण तन्नियामकाभावात्। संप्रज्ञातकालवृद्धिस्तु प्रज्ञासंस्कारतारतम्येनैवेत्यतो न संप्रज्ञातीयनिरोधस्य संस्कारहेतुता। नन्वेवमपि निरोधसंस्काराणां समुच्छेदकाभावान्मोक्षानुप-२० पत्तिः। किं च प्रलीनानामपि संस्काराणां कदाचिद्योगीश्वरसंकल्पादिना दग्धबीजस्येव पुनरुद्बोधोपि स्यादिति चेन्न। ज्ञानसामान्यरूपव्युत्थानासंप्रज्ञाताख्यनिरोधसमाधिप्रभवैः कैवल्यपर्यन्तस्थायित्वरूपकैवल्यभागीयैः संस्कारैः कैवल्यहेतुकर्मसंस्कारैश्च सहितं चित्तं दग्धेन्धनाग्निवत्स्वस्यां प्रकृतौ प्रधानेत्यन्तं लयं गच्छति परिणामस्वाभाव्यादित्यदोषात्। भोग-

---

5. B. reads क्षयान्ते for क्षयात्ते.
5. A. reads साधिकारत्वेन for साधिकारत्वं न.
6. A. reads संप्रज्ञात for असंप्रज्ञात after एतेन.
7-8. C. reads योगा for योगः.
7, C. reads जायमाना for जायमानः.
10. B. reads परंपरायाः for परंपरया.
16. A. reads अनिरोध for निरोध.
17. A. reads जन्म for जन्य.
19. A. reads स्य after संस्कार.
24. B. C. read अतः befor अदोषात्.

हेतुविसदृशपरिणामं तु नापद्यते । तद्धेतोः पुरुषार्थस्याभावात् । तस्मिंश्च निवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठो दुःखादिवृत्तिप्रतिबिम्बराहित्येन शुद्ध उपाधिसंयोगाख्यबन्धराहित्यात्केवलो मुक्त इत्युच्यते । स्वत्वसंबन्धेन पुण्यपापराहित्यमेव तस्य मुक्तिः । भोगसाधनत्वस्यैव स्वत्वतया कूटस्थस्यापि संसारदशायां स्व-
५ त्वाभ्युपगमात् । एतादृशमुक्तेश्च साध्यतया सा योगस्य मुख्यं फलमित्युच्यत इति । अनेन भाष्येण पारमार्थिकदुःखकर्मादिसंबन्धो लेपाख्यसंयोगरूपो वा बन्धस्तन्मुक्तिश्च बुद्धेरेव न कूटस्थासङ्गस्य पुरुषस्येति सूचितम् । पुरुषार्थत्वं च मुख्यमेव । दुःखं मा भुञ्जीयेति प्रार्थनादिति शिवम् । एतस्य सांख्यप्रवचनत्वं सांख्योक्तस्यैव प्रकर्षेण वचनात् । तत्र ह्यभ्युपगमवादेनेश्वरं प्रतिषिध्यासंप्रज्ञातनैरपेक्ष्येण
१० च जीवतत्त्वज्ञानादेव मोक्ष उक्तः । अत्र तु निरुपद्रवासंदिग्धैच्छिकमुक्तिनियमाय परमेश्वरविद्याशुमोक्षहेतुरसंप्रज्ञातश्च दर्शित इति शिवम् ॥ ५१ ॥

इति सांख्यप्रवचने पातञ्जलसूत्रवृत्तौ योगशास्त्रे

समाधिपादः प्रथमः ॥ १ ॥



# योगसूत्रवृत्तिः

## द्वितीयः साधनपादः ।

प्रथमे पादे योगारूढचित्तस्योत्तमाधिकारिणोऽभ्यासवैराग्यमात्रेणैवं वक्ष्यमाणक्रियायोगादिनिरपेक्षेण योग उक्तः ।

५ आसनस्थानविधयो न योगस्य प्रसाधकाः ।
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥

इति गारुडात् । येषां त्वभ्यासवैराग्ये न झटिति भवतः स योगारुरुक्षुर्व्युत्थितचित्तः केनोपायेन योगयुक्तः स्यादित्याकाङ्क्षायां तदुपायप्रदर्शनाय द्वितीयः पाद आरभ्यते । तत्र योगारूढलक्षणं गीतायामुक्तम्—

१० यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ( भ. गी. ६।४ )

इति । तत्राभ्यासश्चित्तस्य निश्चलैकाग्रताधारारूपस्थितौ ध्येयाद्बहिर्गच्छतः पुनः पुनरभ्यासः । वैराग्यं च तत्र तत्रालंबुद्धिरूपोपेक्षेत्युक्तम् । आरुरुक्षुर्वानप्रस्थादिः । तत्र

१५ आरुरुक्षुयतीनां च कर्मज्ञाने उदाहृते ।
आरूढयोगवृक्षाणां ज्ञानत्यागौ परौ मतौ ॥

इति स्मृतिः । त्यागोऽत्र योगान्तरायस्य क्रियायोगरूपस्य बाह्यकर्मणः । यथा जडभरतादेः । तत्रारुरुक्षोः कर्माह—

### तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥

२० योगोपायत्वाद्योगः । क्रियारूपो योग इत्यर्थः । ईश्वरप्रणिधानरूपो भक्तियोगोऽप्यत्र क्रियायोगमध्य एव प्रवेशितः । यद्यपि यमादयोऽपि क्रियायोगस्तथाप्येतत्त्रयेण केवलेनापि तीव्रतरेण योगसिद्ध्याऽस्य प्रकृष्टत्वात्पृथङ्निर्देशः । ज्ञानयोगस्तु ध्यानधारणासमाधिरूपोऽग्रे वक्ष्यते । न च तपस इन्द्रियशोषणात्मकस्य चित्तक्षोभकत्वेन योगविरोधित्वात्कथं तदुपकारकत्वम् । अनादिक्लेश-
२५ कर्मवासनाभिर्नानाप्रकारायाः पापाख्याया अशुद्धेर्विषयजालप्रत्युपस्थापकत्वेन योगविरोधितया विना तपस्तत्तनुतारूपसंभेदासंभवेन तपउपादानात् । तपश्च चित्तप्रसादाविरोधि मृद्वेव कार्यमिति महर्षिर्मन्यते । स्वाध्यायः प्रणवादिपवित्राणां जपो मोक्षशास्त्राध्ययनं वा । ईश्वरप्रणिधानं लौकिकवैदिकसाधारणसर्वकर्मणामन्तर्यामितया परमगुरावीश्वरेऽर्पणम् ।

---

26. A. B. om. च after तपः.

कामतोऽकामतो वापि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥

इति स्मृत्युक्तं चिन्तनम् ।

नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥

इति कौर्मोक्तेः । एवं तत्फलसंन्यासोपीश्वरप्रणिधानम् । तत्र सर्वकर्मफलानामीश्वरो भोक्तेति चिन्तनम् । यद्देव जीवान्कर्मफलानि भोजयन्परमेश्वरः प्रीणाति स एवेश्वरस्य तत्फलभोगः । यथार्थिभ्यो धनानि यच्छन्दाता तद्धनभोक्ता । यद्यप्यस्यान्न्वभोगरूपा प्रीतिर्नित्यैव तथापि सिसृक्षादिवत्तदुत्पत्तिर्गौणी । यज्ञादिसहकारेणैव फलदातृतया तत्प्रीतेरभिव्यक्तेः । न तु पूर्वपादोक्तमत्र प्रणिधानम् । तस्य क्रियायोगत्वाभावात् । अभ्यासवैराग्याद्यनुष्ठानं त्वस्य यथाशक्ति भवति ॥ १ ॥

एषां योगोत्पादने द्वारमाह—

## समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

स क्रियायोगो निष्कामबुद्ध्याऽऽसेव्यमानः कर्मातिरिक्तविषयेभ्यो निरुद्धवृत्तिकं सत्त्वोद्रेकादेकाग्रं च चित्तं कुर्वन्समाधिमुत्पादयति । अविद्यादिक्लेशांश्च सत्त्वशुद्धिद्वाराऽनायासेन तनूकरोति शुष्केन्धनतुल्यान्करोति । तनूकृतांश्च तान्विवेकख्यातिरूपप्रसंख्यानाग्निना दग्धबीजकल्पान्संस्कारजनकत्वरूपप्रसवधर्मिणः करिष्यति । न च तनूकरणमात्रेण कथं प्रसंख्यानाग्निना दाहः । कश्च तनूकरणस्योपयोग इति वाच्यम् । तनूकरणात्पुनः क्लेशैरनभिभूतायाः सत्त्वपुरुषान्यताख्यातिमात्ररूपायाः सूक्ष्मविषयत्वात्सूक्ष्मायाः साक्षात्काररूपप्रज्ञायाः क्रमेण समाप्तकर्तव्यायाश्चरमासंप्रज्ञात प्रविलयरूपप्रतिप्रसवस्य जननाद्विदेहकैवल्यप्राप्तेः । तनूकरणं हि दौर्बल्यसंपादनेन तदनभिभवायेति बोध्यम् । एवं च क्रियायोगो ज्ञानादिसाधनमेव न साक्षान्मोक्षहेतुरिति सिद्धान्तः ।

अत्रेदं बोध्यम् । क्रियायोगस्य क्लेशतानवं दृष्टादृष्टद्वारा फलम् । अभिमानरागद्वेषादिप्राबल्ये क्रियायोगासंभव एव । संभवे वाऽङ्गवैकल्य इति साङ्गस्वानिष्पत्तये क्लेशतानवं करोति । एवं तेन चित्तशुद्ध्यादिधर्मान्यकारणतानवादविद्यादेरपि तानवं भवति । एवं योगोपि तस्य दृष्टादृष्टद्वारा फलम् । तत्र सत्त्वशुद्धिरदृष्टं द्वारम् । दृष्टं तु चित्तनियमनम् । एवमनेन तत्तानवे सत्यन्तरा क्लेशैरप्रतिबद्धो योगी विवेकख्यातिपर्यवसायी भवति । ततस्तेन साक्षात्कारेणाभिदग्धबीजकल्पाः क्लेशाः प्ररोहसमर्था न भवन्तीत्यपि जीवन्मुक्तिः । ततः प्रारब्धसमाप्त्या संप्रज्ञातेन चित्तेन सह दग्धबीजकल्पा अनागतावस्थाः

31. A. C. read असंप्रज्ञातेन for संप्रज्ञातेन.

सूक्ष्मक्लेशास्तत्कारणे लीयन्ते । ततः कारणाभावात्पुनर्जन्माभाव इति परममुक्तिः । न च ज्ञानाग्निने विद्यमान एव क्लेशानां नाशोऽस्तु किं दाहकल्पनया । कार्यानागतावस्थाया एव कारणशक्तित्वेन शक्तेश्चाभयादौ यावद्द्रव्यभावितया दृष्टत्वेन चित्ते विद्यमाने तन्नाशासंभवेन दाहकल्पनादिति दिक् ॥ २ ॥

५ अथ क्लेशाः के कियन्तश्च तत्राह—

## अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥

एते पञ्च संसारहेतुविपर्ययरूपाः क्लेशा इत्यर्थः । क्लिश्नन्ति जन्मादि प्रापयन्तीति व्युत्पत्तेः । रागादीनां च विपर्ययकार्यतया विपर्ययत्वं बोध्यम् । संसारहेतुविपर्ययत्वं चादृष्टसामान्यहेतुकमनोविशेषगुणत्वम् । ननु कथमेषां क्लेशत्वं १० किमर्थं वा तदुच्छेदोऽपेक्षित इति चेच्छृणु । यत एते क्लेशाः स्यन्दमाना लब्धवृत्तिका दृष्टादृष्टद्वारा गुणानां सत्त्वादीनां कार्यारम्भणरूपं सामर्थ्यं बलवत्कुर्वन्ति । तथा गुणानां वैषम्यरूपं परिणामं निर्वर्तयन्ति । ततश्च महदादिकार्यकारणप्रवाहं प्रवर्तयन्ति । ततोऽविद्यातो रागो रागाच्चाविद्येत्येवं परस्परानुग्रहाधीना भूत्वा जात्यायुर्भोगरूपं कर्मविपाकं निष्पादयन्ति । अन्योन्यसाहित्ये- १५ नैव स्थिराः सन्तस्ते विपाकपरंपरानिर्वाहका इति दुःखरूपत्वाच्चेषां क्लेशत्वम् । दुःखनिदानत्वाच्च ते समुच्छेत्तव्या इति सिद्धम् ॥ ३ ॥

तेषां सर्वेषां वक्ष्यमाणज्ञाननाश्यत्वोपपत्तयेऽविद्यामूलकत्वमाह—

## अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥४॥

निमित्तकारणस्यापि प्रसवभूमित्वरूपं क्षेत्रत्वं प्राधान्यमात्रेण गौणम् । एषां २० मध्येऽविद्या क्षेत्रं प्रसवभूमिरुत्तरेषां प्रत्येकं प्रसुप्तादिचतुर्भेदानामस्मितादीनामित्यर्थः । सर्वेषामविद्यासत्त्वे सत्त्वात्तदभावे चाभावात् । तत्र प्रसुप्तत्वं चेतसि शक्तिमात्रेणानागतावस्थयावस्थितानां स्वकार्यजननसामर्थ्यं प्रसुप्तरूपम् । कार्यस्यानागतावस्थैव हि कारणे शक्तिः । तद्रूपत्वमेव चोपादानकारणत्वम् । न च कदाचित्प्रबोध एव सुप्तिः संभवति । न चैषां स इति वाच्यम् । सुप्तक्लेशस्या- २५ लम्बने स्वस्वविषयेऽभिव्यक्तेरेव तत्प्रबोधत्वात् । न च दग्धबीजभावाप्यपञ्चम्यवस्थायामतिव्याप्तिः । तदा स्वकार्यजननसामर्थ्यरूपबीजभावोपगमाभावात् ।

---

9. B. reads हेतुकमनो विशेष for हेतुकमनोविशेष.
15. C. reads दुःखदत्वात् for दुःखरूपत्वात्.
15. B. reads क्लेशत्वे for क्लेशत्वम्.
23. B. om. कारण.
24. B. reads कारण before सुप्तिः.
24. A. reads सुप्ते for सुप्त.

तथा हि । विवेकसाक्षात्काररूपप्रसंख्यानवतो दग्धक्लेशबीजस्य जीवन्मुक्तस्य
संनिकृष्टेऽप्यालम्बने विषये क्लेशानां नोत्पत्तिः । दग्धबीजस्य प्ररोहाभावेन कारणा-
भावात् । अन्यथा पुनः प्ररोहे देहान्तरोत्पत्त्या क्षीणक्लेशकुशलपुरुषदेहस्य चर-
मदेहत्वानुपपत्तिः । चरमदेह एव च दग्धबीजभावरूपा पञ्चम्यवस्था नान्यत्रेति
५ न सा क्लेशेषु गणिता । न च जीवन्मुक्तानां विषयसंनिकर्षेऽपि क्लेशानभि-
व्यक्त्या क्लेशसंस्काराभाव एवास्तु विदेहकैवल्य इवेति वाच्यम् । अग्न्यादौ
दाहादिशक्तेर्यावद्द्रव्यभावितादर्शनात् । चित्तेन सहैव क्लेशशक्तेरशेषतो नाश-
संभवेन तदा कार्यजननसामर्थ्यदाहस्यैव स्वीकारात् । अतस्तदा विषयसं-
निकर्षेऽपि नैषां प्रबोध इति दिक् ।

१० तनुत्वं तु प्रतिपक्षानुष्ठानेन विवेकख्यातिप्रतिबन्धाक्षमत्वम् । तथा
हि । सम्यग्दर्शनमविद्याप्रतिपक्षः । भेददर्शनमस्मितायाः । अहेयानुपादे-
यताज्ञानरूपं माध्यस्थ्यं रागद्वेषयोः । उपकरणाख्यानुबन्धबुद्धिनिवृत्तिरभिनिवे-
शस्येति बोध्यम् । विच्छिन्नत्तिस्तु क्लेशानामन्यतमेनाभिभवाद्त्यन्तविषयसेवना-
द्विच्छिद्य विच्छिद्य पुनः पूर्ववद्तनुभावेनाविर्भावः । वाजीकरणाद्युपयोगा-
१५ द्विनेव । प्रसुप्तिर्हि क्लेशानां व्यञ्जकविलम्बेनैकद्वित्रिजन्मादिबहुकालं व्यापारान-
भिव्यक्तिः । इयं तु स्वल्पप्रतिबन्धेन व्यञ्जकसत्त्वेऽप्यल्पकालमन्तरान्तरानभिव्य-
क्तिरिति प्रसुप्तितो भेदः । ननु विच्छेदे किं प्रमाणमिति चेत् । रागकाले क्रोध-
स्यादर्शनम् । न च तदा क्रोधस्याभावः । असत्कार्यानभ्युपगमेन पुनः क्रोधा-
नापत्तेः । एवं क्रोधकाले रागस्यादर्शनम् । क्रुद्धेन मित्रादस्यापि त्यागात् ।
२० क्रोधरागयोर्विरोधात् । कस्यचिदेकस्यां स्त्रियां रागो दृश्यते । न हि तदान्यस्यां
नास्ति । कालान्तरेऽनुत्पत्त्यापत्तेः । असदुत्पादासंभवात् । तस्मात्तदा विषयान्तर-
रागेण विच्छिन्न इत्येव । उदारता तु विषये लब्धस्वाभाविकवृत्तिकत्वमभिव्य-
क्तत्वम् । न च प्रसुप्तविच्छिन्नयोः कथं क्लेशत्वं दुःखाजनकत्वादिति वाच्यम् ।
सर्वेषां क्लेशजननयोग्यत्वानतिक्रमात् । उदारावस्थया तेषां दुःखजनकत्वात् ।
२५ ननु प्रतिक्लेशव्यक्तीनां कालभेदेनेदं चातुरूप्यमस्तीति कथमेतैः क्लेशानां विभाग
इति चेन्न । तत्तदवस्थाविशिष्टक्लेशव्यक्तीनामेव विच्छिन्नादित्वस्य विवक्षित-
त्वात् । यथा पुरुषस्य बालतरुणवृद्धरूपो विभागः । न चोदारावस्थायां किं
कारणम् । स्वव्यञ्जकविषयध्यानमिति गृहाण । तद्गुणाभ्यासाद्धि तस्याभिव्यक्तिः ।
यथा प्रतिपक्षभावनानभिवृत्तित्वं प्रतिपक्षभावनाद्विषयसंयोगेऽपि स्याम्यः ।

1-2. A. om. जीवन्मुक्तस्य बीजस्य.
6. B. om. इव.
14. A. reads बीजीकरण for वाजीकरण.
19. B. reads क्रोधेन for क्रुद्धेन.
20. A. reads मञ्चः for संयोगः.

न च निमित्तकारणस्य कथं क्लेशत्वम् । सर्वेषामेषामविद्याभेदत्वात् । न च रागादीनां ज्ञानत्वाभावात्कथमविद्यात्वम् । सर्वेषामविद्यामूलकत्वात् । यद्व्यविद्याविषयस्तदनुगतत्वाद्रागादीनाम् । यतो विपर्यासप्रत्ययरूपाविद्याकाल उपलभ्यते तत्क्षये च क्षीयन्त इति दिक् ॥ ४ ॥

## अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥

अनित्यादिचतुष्टये नित्यादिबुद्धिरित्यर्थः । तत्र कालनिष्ठाभावप्रतियोगित्वरूपानित्यत्ववति कार्ये नित्यत्वख्यातिर्नित्यत्वज्ञानम् । यथा ध्रुवा पृथिवी । ध्रुवा सचन्द्रतारका द्यौः । अमृता दिवौकस इति । ध्रुवत्वं नित्यत्वम् । केचिद्धि भूतानि चन्द्रतारकाद्युलोकान्देवांश्च नित्यान्मन्यमानास्तत्तद्रूपप्राप्तये तान्युपासते, सोमपानादि च कुर्वन्ति । तथा प्रपञ्चज्ञानस्यासति सद्ग्राकारत्वात्संपूर्णः प्रपञ्च एवाविद्यक इति श्रुतिषु प्रसिद्धम् । असत्त्वं च प्रागुक्तानित्यत्वमेव । शुक्तिरजतादिज्ञानवदेव प्रपञ्चज्ञानम् । असति सद्बुद्धिरूपाऽविद्यैव च सर्वप्रपञ्चकारणम् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ( छा. ६।१।४ ) इति श्रुत्यापि प्रपञ्चस्येदृशमेवासत्यत्वमुच्यत इति दिक् ।

तथाऽशुचावपवित्रे परमबीभत्से काये शुचित्वख्यातिर्यथा नवशशाङ्कलेखेव कमनीयेयं कन्येत्यादि । उक्तं च—

> स्थानाद्बीजादुपष्टम्भान्निःष्यन्दान्निधनादपि ।
> कायस्याधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥

इति । स्थानं मूत्राद्युपहतं मातुरुदरम् । बीजं शुक्रशोणिते । उपष्टम्भो मातृभुक्ताचादिरसः । निःष्यन्दः प्रस्वेदादिः । निधनं मरणम् । तद्धि श्रोत्रियशरीरमप्यपवित्रयति । तत्स्पर्शे स्नानविधानात् । कामिनीनामङ्गरागात्सुगन्धताधानमिव स्नानादिभिः शौचाधानात्सदा स्वतोऽशुचित्वमित्यर्थः । एवमशुचित्वाद्वस्तुतः सादृश्याभावेपि नवशशाङ्कलेखादिसादृश्यरूपा शुचित्वख्यातिरुक्ता । एतेनापुण्ये तप्तशिलारोहणादौ हिंसादौ वा पुण्यप्रत्ययः । तथानर्थेऽर्जनरक्षणादिदुःखबहुलतयाऽपुरुषार्थे धनादावर्थप्रत्ययोऽप्यविद्यात्वेन व्याख्यातः । शुच्यशुचिशब्दयोर्भोगसाधनासाधनमात्रोपलक्षणत्वात् । एवं च संसारहेतुसर्वाविद्योपलक्षणमेत-
[illegible] ।

"दुःखमेव सर्वं विवेकिनः" (यो. सू. २।१५) इति सूत्रेण दुःख एव सुखख्यातिमर्थाद्वक्ष्यति । दुःखसाधनतया दुःखबहुलतया वा सर्वस्य दुःखत्वम् । एवं च

---

6. O. reads शुचात्मता for सुखात्म.
11. A. reads तान् for तानि.
31. A. om. वा.

दुःखसाधने दुःखनिवृत्त्यास्यसुखसाधनत्वबुद्धिरेवं दुःखप्रचुरे सुखप्रचुरत्वबुद्धिरेव दुःखे सुखख्यातिरूपाऽविद्या । केवलदुःखे सुखत्वभ्रमस्यासिद्धेः ।

अनात्मन्यात्मख्यातिर्यथा बाह्यस्य देहस्योपकरणेषु पुत्रधनादिषु चेतनाचेतनेष्वहंबुद्धिर्ममतबुद्धिर्वा । तथा विषयभोगावच्छेदकतयाऽन्तःकरणोपकरणे शरीरेऽहंबुध्यादिः । तथा भोग्यतया साक्षात्पुरुषोपकरणेऽन्तःकरणेऽहंबुद्धिः । एतद्विद्याकार्यमेव प्रपञ्चः । अहं कर्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वाराखिलजगद्धेतुत्वात् । चतुर्थाविद्याविषये पञ्चशिखाचार्यैरप्युक्तम् । स्थूलरूपं व्यक्तं सूक्ष्मरूपमव्यक्तं वा बुद्धिसत्त्वमात्मत्वेन गृहीत्वा तस्य बुद्धिसत्त्वस्य सत्यसंकल्पत्वादिकमात्मसंपदं मन्वानो नन्दति तस्येच्छाविघातादिरूपां विपदमात्मविपदं मन्वानः शोचति यः स सर्वोऽप्रतिबुद्धोऽविद्वानिति । एषैव चतुष्पदाऽविद्याऽस्य संसारस्य मूलमित्यर्थेवोक्ता । अतः शुक्तिरजताद्यविद्यानामगणनेऽपि न न्यूनता ।

न चाविद्याशब्दस्याभावविशिष्टा विद्या तदभावो वा नञ्तत्पुरुषाव्ययीभावाभ्यामर्थः । नञ्तत्पुरुषस्योत्तरपदार्थप्रधानतया किंचिद्धर्माभावविशिष्टविद्याप्रतीतिः । बहुव्रीहिणाऽप्युक्तमविद्यात्वं बाधो न तु विपरीतख्यातिः । उक्तार्थानां च न क्लेशबीजत्वमिति वाच्यम् । अमित्रागोष्पदवदविद्याशब्दस्य सतत्त्वापरपर्यायतत्त्वभूतवस्तुविरुद्धे निरूढेः । तथा हि । यथाऽमित्रो न यत्किंचिदभावविशिष्टं मित्रम् । नापि मित्राभावः । नोत्तमं मित्रम् । किं तु मित्रविरुद्धः सपत्नः । यथा वाऽगोष्पदं न यत्किंचिदभावविशिष्टं गोष्पदम् । नापि तदभावः । नाप्युत्तमगोष्पदम् । किं तु देशविशेष एव । एवमविद्या नोत्तमा विद्या । नापि प्रमाणरूपविद्याभावः । नापि यत्किंचिदभावविशिष्टा विद्या । किं तु विद्याविपरीतज्ञानान्तरमविद्या । नञ्तत्पुरुषः । आरोपितत्वं च नञर्थः । आरोपिता विद्येति च बाधः । कश्चित्प्रधानेऽविद्याशब्दस्तु गौणोऽविद्याधर्मकत्वादिति दिक् ॥ ५ ॥

अथास्मितां तत्कार्यभूतां लक्षयति—

## दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥

दृक्शक्तिर्द्रष्टा पुरुषः । दर्शनशक्तिः करणं बुद्धिः । प्रलये फलोपधानाभावाच्छक्तिग्रहणम् । तयोरेकात्मतैवैकाकारताख्यैकस्वरूपापत्तिरिव या साऽस्मिता

1 B. reads एवम् for एव.
7. A. C. read चतुर्थी for चतुर्थ.
8. B. reads गृहीतत्वात् for गृहीत्वा.
13. A. C. om. किंचिद्धर्म.
16. B. om. यथा.
25. A. reads एव for इव.
27. A. reads एव for इव.

क्लेश इत्यर्थः । अविद्यातोऽस्मिताया अयं भेदः—यद्बुद्ध्यादौ सामान्यतो भेदाभेद-
विषयाहंबुद्धिरविद्या । अत्यन्ताभेदाग्रहणात् । अस्मिता तदुत्तरकालिकस्तज्जन्य-
पुरुषे बुद्ध्यादिगुणदोषारोपादीश्वरोऽहमहं भोगी (गी. १६।१४) इत्यादिरूपो दूरस्थ-
वनस्पत्योरिव तयोरत्यन्तमेकताभ्रमः । भ्रमत्वाविशेषेपि कार्यकरणरूपावान्तर-
५ विशेषादनयोर्भेदेनोपन्यासः । कार्यकारणभावश्चानयोर्लोकादवगन्तव्यः । लोके
ह्यादौ कलत्रपुत्रादिष्वात्मभावो जायते । ततस्तेषां सुखदुःखाद्यात्मनि मन्यते । तथा
जलादिष्वादौ प्रतिबिम्बरूपेण चन्द्राद्यारोपः । ततश्चन्द्रादिषु तद्गतकम्पमालिन्या-
द्यारोप इति । ननु बुद्धिपुरुषयोरन्योन्यधर्मारोपेणैवाहं सुखीत्यादिव्यवहारोपपत्तौ
किमेकात्मतारोपेण । परस्परधर्मारोपश्चाभेदग्रहं विनापि रक्तस्फटिकयोरिव संभवत्ये-
१० वेति चेन्न । परिणामित्वापरिणामित्वाभ्यां भोग्यभोक्तृत्वाभ्यामत्यन्तभिन्नधर्मत्वे-
नात्यन्तविभक्तयोर्भोक्तृभोग्यशक्त्योः पुरुषबुद्ध्योरविभागरूपैकत्वमन्यथे सत्येव
भोगसंभवात् । भेदग्रहरूपे स्वरूपप्रतिलम्भे तु कैवल्यमन्योन्यवियोग एव न तु
भोगः । एवं च भोगानुपपत्त्यैव तत्कल्पनम् । योऽहं सुखी सोऽहमनुभवितेत्येवं
प्रत्ययस्यैव भोगत्वात् । जीवन्मुक्तस्य तु गौणो भोगः सुखादिसाक्षात्का-
१५ रमात्ररूप इति वक्ष्यते । अस्मितारूपमविद्याजन्यत्वं चोक्तं पञ्चशिखाचार्यैः ।
वस्तुतो बुद्धेर्भिन्नं पुरुषं बुद्धेराकारशीलविद्यादिभिर्विविक्तमसंमृष्टमपश्यन्नविवेकी
बुद्धौ शान्ताद्याकारोऽस्मि जाग्रदादिशीलोऽस्मि सुखादिमानस्मीत्याकारमात्मबुद्धिं
मोहेनाविद्यया कुर्यादिति । तत्र पुरुषाकारः सदाशुद्धत्वशीलमौदासीन्यं विद्या
चैतन्यम् । बुद्धिस्त्वशुद्धानुदासीना जडा च ॥ ६ ॥

२० अथास्मिताकार्यं रागं लक्षयति—

## सुखानुशयी रागः ॥ ७ ॥

सुखाभिज्ञस्य सुखस्मरणात्तत्साक्षात्कारतो वा यः सुखे तत्साधने वानुशेते त-
द्विषयक इच्छाविशेषरूपः क्लेशो राग इत्यर्थः । तत्र साधने स्मर्यमाणेऽनुभूयमाने
वा सुखानुस्मृतिपूर्वक एव रागः । दृश्यमानमपि सुखसाधनं तज्जातीयस्य सुखहे-
२५ तुतां स्मृत्वा तज्जातीयतया सुखहेतुत्वमनुमाय वेच्छति । जीवन्मुक्तेच्छायाः सं-
सारहेतुत्वेन क्लेशत्वाभावान्न तस्यामतिव्याप्तिः ॥ ७ ॥

अथ रागप्रतिघातोत्थतया द्वेषं लक्षयति—

## दुःखानुशयी द्वेषः ॥ ८ ॥

दुःखाभिज्ञस्य दुःखस्मरणात्तत्साक्षात्काराद्वा दुःखे तत्साधने च या जिहासा
३० स क्रोधरूपो द्वेषः । अयमपीच्छाविशेष एव । प्रतिघो मन्युर्जिघांसेति भाष्योक्तेः ।
प्रतिहन्त्युद्वेजयतीति प्रतिघः ॥ ८ ॥

4. A. reads कारणत्व for करण.

अथ तन्मूलकमभिनिवेशं लक्षयति—

## स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ॥ ९ ॥

स्वस्य रसेन संस्कारमात्रेण वहतीति स्वरसवाही । अपिशब्दसमुच्चितमाविद्वांसं तथेति तच्छब्दः परामृशति । आविदुष इत्यर्थः । रूढः प्रसिद्धः । अस्या-
५ त्यन्तदुरन्तत्वप्रतिपादनाय विद्वत्परिहार्यत्वमुखेन लक्षणं कृतम् । सर्वस्य विदुषोऽविदुषश्चेयमात्मन्याशीः प्रार्थना दृश्यते सदैव यन्मा न भूवामिति माहमभावी भूयामित्यर्थिका । तथा जीव्यासमित्यर्थिका भूयासमिति च । इयमाशीस्त्रासो भयमित्युच्यते । अननुभूतमरणदुःखस्येदृशप्रार्थनाऽसंभवात् । तया प्रार्थनया पूर्वजन्मनि मरणदुःखानुभवः स्वकारणमनुमीयते । धनादिनाशजन्यदुः-
१० खज्ञस्यैव धनं मे मा नश्यतु सदैव भूयादितीच्छादर्शनात् । एवं च जीवस्यानादित्वं सिद्धम् । जन्म तु तस्य देहेन्द्रियवेदनाभिरायः संबन्ध इति । नन्विह जन्मन्येव मरणदुःखानुमानेनेदं भयमस्त्विति चेन्न । यतोऽयमुक्तरूपोऽभिनिवेशः स्वाभाविक एवात्यन्तमूढस्य जातमात्रस्य कृमेरपि प्रत्यक्षानुमानागमैरसंभावितो मरणत्रास उच्छेददृष्टिकार्यको दृश्यते तस्तेन पूर्वजन्मानुभूतमरण-
१५ दुःखानुभवानुमानाद्यदनुभवोत्थमरणत्रासजन्यवासनैर्यदानीं स जायते । इच्छारूपस्याप्यस्य संस्कारजनकत्वं फलबलात्कल्प्यते । दुःखानुभववासनैव तत्स्मरणद्वारा त्रासकारणमित्यन्ये । तथा हि । जातमात्र एव बालो मारकवस्तुदर्शनेन कम्पमानः कम्पाद्नुमितमरणसंबन्धत्रस्तो विश्यमुपलभ्यते । दुःखादुःखहेतोश्च भयं दृष्टम् । न चात्र जन्मनि मरणमनुभूतं सुतरामस्य दुःखत्वं तद्धे-
२० तुत्वं वा । तस्मात्स्मृतिः परिशिष्टा । सा च न संस्काराहते । न च सोऽनुभवं विना । न चात्र जन्मनि स इति प्राग्भवीयः परिशिष्ट इत्यात्मनः पूर्वजन्मसंबन्ध इति ।

यथा चायं क्लेशोऽत्यन्तमूढेषु दृश्यते तथा श्रवणज्ञातयोगेन साक्षात्कृततत्त्वस्यापि पूर्वापरान्तयोरात्यन्तयोरवशिष्यमाणं तत्त्वभूतं ब्रह्म येन तत्तथा तत्त्वज्ञस्य विदुषोऽपि रूढः । विदुषोऽविद्याप्रमितत्वाभावेऽपि वासनामत्त्वात् । इयं च वासना
२५ चित्तेन सह नश्यत्येव न तु ज्ञानेन इत्यात इत्यविद्यासंस्काराभ्यां विशेषः । न च तस्यात्मनित्यत्वनिश्चयात्कथं जीव्यासमितीच्छा । सिद्ध इच्छाविरहादिति वाच्यम् । सत्यपि तस्मिन्निच्छादर्शनेनदृशसंस्कारस्यैवानिजकत्वकल्पनात् । न

6–7. B. reads भवान्येव for माहमभावी भूयम्.
8. A. C. om. प्रार्थनया.
11. B. om. तु.
14. A. om. कार्य.
16. B. C. read अजनकत्वम् for जनकत्वम्.
25. to P. 274 line 29. A. om. रूपा विशेषः । न च त०...मरणपर्यन्तकाले.

चैवमाविद्यानाशेऽप्यभिनिवेशसत्त्वेन कथं तस्याविद्याव्याप्यत्वमुक्तमिति वाच्यम् । संसारहेतुतावच्छेदकरूपेणैव तद्व्याप्यत्वकल्पनात् । तद्धेतुतावच्छेदकं च मरणत्रासातिरिक्तभयत्वमेव । फलबलाद्भयसामान्यमेव तु रागवदिहाभिनिवेशो विवक्षित इति दिक् । एवं च पूर्वपूर्वजन्मीयत्रासवासनयैव यथोक्तनिरुपाधीच्छासंभवेनैतद्बलेनात्मनः सुखरूपत्वसाधनं चिन्त्यम् । आत्मत्वस्यैव प्रियतावच्छेदकत्वौचित्याच्चेति दिक् । मिश्रास्तु विद्वच्छब्देनात्र न संप्रज्ञातयोगवान् । किं तु श्रुतानुमानाभ्यामेव यस्य तत्त्वज्ञानं जातमग्रे निदिध्यासनं च नास्ति स एव गृह्यत इत्याहुः ॥ ९ ॥

अथ क्रियायोगेन क्लेशतनूकरणस्य फलमाह—

## ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

प्रसवविरुद्धः प्रतिप्रसवः प्रलयः । ते पञ्च क्लेशाः सूक्ष्मा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सति तेन चित्तेन सहास्तं गच्छन्तीति तत्प्रलयेनैव ते हेया इत्यर्थः ॥ १० ॥

तनूकरणेन प्रलये जननीये द्वारभूतं दग्धबीजभावमाह—

## ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

तेषां स्थितानां बीजभावोपगतानां या वृत्तयः स्थूला अभिव्यक्तावस्थास्ताः प्रथमं क्रियायोगेन तनूकृताः सत्यो ध्यानेन प्रसंख्यानेन समाधिजप्रज्ञारूपेण हातव्याः प्रतिबद्धाः कार्या इत्यर्थः । यावद्दग्धबीजकल्पा भवन्तीति शेषः । यथा च वस्त्राणां स्थूलो मलः पूर्वं पाषाणप्रक्षेपाद्यल्पयत्नेन निर्धूयते । पश्चात्सूक्ष्मः क्षारसंयोगादिनोपायेनाधिकयत्नेन च दूरीक्रियते । तथा स्थूलाः स्वल्पाः क्रियायोगसंपाद्यतनुत्वतया स्वल्पाः प्रतिपक्षाः । तादृशाश्चाधिकयत्नसाध्यप्रसंख्यानाग्निना दग्धबीजकल्पाः । तादृशाश्चासंप्रज्ञातयोगसाध्यचित्तनाशेन नाश्या इति महाप्रतिपक्षाः । एवं च जीवन्मुक्तानां वृत्तिरूपाविद्यालेशाभ्युपगमश्चिन्त्यः । एवं हि स्थूलानामपि प्रतिपक्षहेयतापत्तौ पूर्वसूत्रविरोधापत्तेरिति दिक् ॥ ११ ॥

तत्र क्लेशानां हेयत्वोपपादनाय तेषां दुःखोत्पादने द्वारमाह—

## क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥

दृष्टादृष्टजन्मनी वर्तमानभविष्यती । ताभ्यां वेदनीयो भोग्यः । कर्माशयः पुण्यापुण्यरूपः । स च क्लेशमूलः । रागमोहक्रोधप्रभवत्वात् । तत्र रागात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति । एवं तत एव परद्रव्यापहारादावधर्मः । मोहाद्-

---

2. C. reads व्याप्तत्व for व्याप्यत्व.
4. B. om. पूर्व after पूर्व.
21. C. reads स्वल्प for स्वल्पाः.
23–4. C. om. एवं च०... विरोधापत्तेरिति दिक्.

धर्मे हिंसादौ धर्मबुद्ध्या प्रवर्तमानस्याधर्म एव । मोहाद्धर्मस्तु नास्त्येवेति मिश्राः । उदासीन आप्तत्वमोहाद्द्रव्यदानान्मोहजो धर्मोऽस्त्येवेत्यन्ये । क्रोधजो धर्मो यथा ध्रुवस्य । स हि पित्रवमानक्रोधात्ताज्जिगीषया कृतेन पुण्यकर्मणा सर्वोपरिस्थानं लब्धवान् । क्रोधजोऽधर्मस्तु प्रसिद्ध एव प्राणिवधादेः ।

> रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ।
> कार्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः ।
> तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः ॥

इति कौर्मोक्तेः। स द्विधा दृष्टजन्मवेदनीयोऽदृष्टजन्मवेदनीयश्च । तत्राद्यो यथा तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्य उत्पन्नः पुण्यकर्माशयः स इहैव जन्मनि कालेन फलदः । तथा तीव्रसंवेगेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु तपस्विषु कृतेन पुनः पुनरपकारेणोत्पादितः पापकर्माशय इहैव फलदः । यथा नन्दीश्वरोऽष्टवर्षः कुमारो महादेवप्रसादान्मनुष्यपरिणामं हित्वा देवत्वेन परिणतः । देवानामिन्द्रो नहुष ऋषीणामपकारात्स्वं परिणामं हित्वाऽहित्वेन परिणतः । अदृष्टजन्मवेदनीयस्तु प्रसिद्ध एव । तत्र नारकाणां धर्मापनुत्यस्याऽऽद्यः कर्माशयो नास्ति । स्वर्गिणां त्वस्त्येव । देवानां लीलामानुषविग्रहेण प्रयागादौ कर्मानुष्ठानस्य तत्फलस्य च श्रवणात् । क्षीणक्लेशानां त्वन्त्यो नास्तीति दिक् ॥ १२ ॥

इदानीं कर्माशयफलानामपि क्लेशमूलकत्वमाह—

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

क्लेशरूपे कर्माशयस्य मूले सत्येव जात्यायुर्भोगरूपो विपाकः फलं भवति । विपच्यते साध्यते कर्मभिरिति व्युत्पत्तेः । तत्र जातिर्जन्म । आयुर्जीवनकालः । भोगः सुखदुःखात्मकशब्दादिवृत्तिः । सुखादिसाक्षात्कारस्य तु विपाकजन्यतां वक्ष्यति । ननु क्लेशानां कर्मसहकारित्वे न मानम् । क्लेशाभावकाले च "ज्ञानाग्निः सर्वकर्माणि" (भ. गी. ४।३७) इति वाक्येन कर्मक्षयस्याप्यवगमेन तत एव विपाकाभावोपपत्तेरिति चेन्न । यत्रैवान्तकाले रागाद्युद्बोधो मरणानन्तरं तद्योनेरेव प्राप्तिरित्यन्वयव्यतिरेकाभ्यां कर्मवद्रागादेरपि विपाकहेतुत्वात् ।

तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य ( बृ. ४।४।६ ) इति श्रुतेश्च । नरकादावपि परस्त्र्यादिसक्तानामेव तप्तलोहमयनारीसमालिङ्गनादिफलश्रवणेन रागानुसारेणैव विपाकाच्च । ज्ञानोत्तरं चारब्धो विपाकः समाप्यत एव न त्वारभ्यत इति न तत्र क्लेशापेक्षा । तथा हि । सत्सु हि क्लेशेषु कर्माशयो विपाकारम्भी न च्छिन्नक्लेशमूलः । यथा तुषावनद्धाः शालित-

---

15. A. reads नारकीयाणाम् for नारकाणाम्- ,

26. A. reads कर्मवशात् for कर्मवत्-

ण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा। तथा क्लेशावनद्धो ज्ञानाग्न्यदग्धबीजभावश्च कर्माशयो विपाकारम्भी न स्वविपाकगोचरक्लेशशून्यो न क्लेशसामान्याभावकालिकप्रसंख्यानदग्धबीजभावो वा। प्रसंख्यानेनापि कर्माशयस्य दाह एव न नाशः। दाहश्च क्लेशाख्यसह-
५ कार्युच्छेद एव। ज्ञानस्य हि व्यापारद्वयं क्लेशाख्यहेतूच्छेदेन कर्मानुत्पादः प्राचीनकर्मणां दाहश्च। न तु नाशः। प्रारब्धकर्मणोपि नाशप्रसङ्गात्। न च तदतिरिक्तकर्मत्वेन ज्ञाननाश्यता। क्लेशस्यैव विपाकारम्भहेतुत्वे लाघवात्। प्रारब्धफलकस्य कर्मणो बीजशक्तिनाशेपि फलसमापकत्वं बीजनाशेप्युत्पन्नाङ्कुरवत्। क्षीयन्ते चास्य कर्माणि (मु.२।२।८) इत्यपि दाहपरमेव। एवं च जीव-
१० न्मुक्तस्य भोगार्थमविद्यालेशकल्पनं चिन्त्यम्। आरब्धविपाके क्लेशानामहेतुत्वात्। एतेन सत्यपि ज्ञानेऽविद्याविनाशात्कर्मान्तरानुत्पत्तावपि प्राक्तनानामनादिभवपरंपरासंचितानामसंख्यानामनियतविपाककालानां भोगेन क्षेप्तुमशक्यत्वादशक्योच्छेदः संसार इत्यपास्तम्।

तत्र कर्मणो जन्मकारणत्वे विचार्यते। किमेकं कर्मैकस्य जन्मनः
१५ कारणमुतानेकजन्मनः फलदानायोत्पादक्रमित्येको विचारः। किमनेकं कर्मानेकजन्मकारणमुतैकजन्मन इत्यपरः। तत्र नैकं कर्मैकजन्मकारणम्। अनादिकाल एकैकजन्मसंचितस्यात एवासंख्येयस्यैकैकजन्मभुक्तादेकैककर्मणोऽभुक्ततया त्ववशिष्टस्यैहिकस्य चानन्तकर्मणो मध्ये किं कर्म प्रथमं फलं दास्यति किं च पश्चादिति फलक्रमे नियमाभावाल्लोकानां पुण्याद्यनुष्ठाने फलाना-
२० श्वासापत्तेः। भाव्यनन्तकालमध्ये भाविबलवत्तरपापादिनानुष्ठीयमानकर्मादृष्टानां नाशसंभवात्। झटिति भोगकामनयैव कर्मानुष्ठानाच्च। नाप्येकमनेकस्य कारणम्। अनेकेषु जन्मसु क्रियमाणकर्मणामेकैकमेवानेकासंख्यजन्मनः कारणमतोऽवशिष्टस्य तदितरस्य तद्विरुद्धफलदस्य विपाककालाभावप्रसक्तेः कर्मवैफल्यशङ्कया तदननुष्ठानप्रसङ्गात्। नाप्यनेकं कर्मानेकजन्मकारणम्। अनेकस्य जन्मनो
२५ यौगपद्यासंभवेन क्रमस्वीकारे प्रथमपक्षोक्तस्यानाश्वासरूपदोषस्य प्रसङ्गात्। यदि हि कर्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत ततः कर्मसहस्रक्षयादवशिष्टस्य विपाककालः फलक्रमानियमश्च स्यात्। नास्ति तु तदयोगिन इति। अतश्चतुर्थः सिद्धान्तः।

तथा हि। जन्मारभ्य मरणपर्यन्तकाले विहितनिषिद्धानुष्ठानसंपादितो
३० धर्माधर्मसमूहो गुणप्रधानभावेनोत्पन्नो नानाविधविचित्रफलो मरणकाल आरब्धकर्मभोगसमाप्त्या लब्धावसरः सर्वैकप्रघट्टकेन मिलित्वा स्वफलदानार्थं मरणं प्रसाध्य प्रवृद्धवेगत्वरूपसंमूर्छितत्वावाप्तगुणप्रधानभावापन्नः स्वफलयोग्यमेकमेव जन्म करोति नानेकम्। यस्त्वत्यन्तमुद्भूतमनन्तरमेव फलं

दास्यति स प्रधानम्। यस्तु किंचिद्विलम्बेन स गौणः। मरणं च लिङ्गदेहस्य स्थूलदेहादुत्क्रमणं न तु नाशः। गमनश्रुतेः। तत्र जन्म तेनैव कर्मणा लब्धायुष्कम्। तस्मिन्नायुषि तेनैव कर्मणा भोगः संपद्यत इति भोगो मुख्यं फलम्। अतो जन्महेतुः कर्माशयस्त्रिविपाक इत्युच्यते। अतोऽयं कर्माशय एको भवो जन्म कार्यतयास्यास्तीत्यैकभविकः पूर्वाचार्यैरुक्तः। न चैवं स्वर्गिनारकिणां तच्छरीरैर्धर्माद्यनुत्पत्तेः प्राचीनकर्मणां च तत्रैव समाप्तेः पुनर्जन्मानुपपत्तिरिति वाच्यम्। स्वर्गादिजनककर्मणामेव ब्राह्मणस्थावरादियोनिलाभपर्यन्तफलश्रवणात्। शास्त्रानुक्तकालविशेषफलकस्यैवैकभविकत्वनियमात्।

दृष्टजन्मवेदनीयस्तु कश्चिदेकविपाकारम्भी कश्चिद्द्विविपाकारम्भी। तत्राद्यो नहुषस्य। तस्य हीन्द्रत्वसंपादककर्मणैव दीर्घायुष्ट्वस्य लाभात्पापविशेषेण सार्पभोगरूप एक एव विपाक उत्पन्नः। द्वितीयो नन्दीश्वरस्य। तस्य ह्यष्टवर्षायुर्मनुष्यजन्मनः पुण्यविशेषेणायुर्भोगरूपं विपाकद्वयमुत्पन्नम्। अनयोश्च मनुष्यशरीरस्यैव वार्धकादिवत्सर्पदेवशरीररूपपरिणामान्तरान्न जन्मान्तरम्। वासनानां तु नैकभवभवत्वरूपमेकभविकत्वम्। यतः क्लेशकर्मणोर्विपाकस्य योऽनुभवश्चित्तवृत्तिनिवहो ज्ञानरूपस्तन्निष्पादिताभिर्वासनाभिरनादौ काले संमूर्छितं पुष्टमिदं चित्तं पटवत्सर्वतस्ताभिश्चित्रितमिव ग्रन्थिभिराततं मत्स्यजालमिव वर्ततेऽतो वासना अनेकभवपूर्विका एव। अन्यथा मनुष्यदेहानन्तरं देवतिर्यग्योनिभोगानुपपत्तेः। मनुष्यदेहे तद्वासनानुत्पत्तेः। पूर्ववासनानां च मनुष्यजन्मना क्षयात्। भिद्यते हृदयग्रन्थिः (मु.२।२।८) इत्यत्र ग्रन्थिपदेन वासना एव। भाष्ये तासां ग्रन्थित्वेन रूपणात्। न त्वहंकारादिरिति बोध्यम्। एवं च धर्माधर्मसंस्काररूपकर्माशयस्यैवैकभविकत्वं स्मृतिहेतुसंस्काररूपवासनानां चानादित्वमिति सिद्धम्। योऽप्यदृष्टजन्मवेदनीयकर्माशयस्यैकभविकत्वनियम उक्तः सोऽपि नियतविपाकस्यैव। नियतविपाकत्वं च कर्माशयेऽवन्ध्यत्वे सत्यनन्यशेषत्वे सति कर्मान्तरानभिभूतत्वम्। दृष्टजन्मवेदनीयस्य तु भवाहेतुत्वादेवैकभविकत्वाभावः।

अदृष्टजन्मवेदनीयस्य नियतविपाकभिन्नस्य तु त्रयी गतिः। तत्राद्या-ऽदत्तफलकस्यैव विनाशः। अतोऽस्य नास्त्येकभविकत्वम्। द्वितीया तु प्रधानकर्मण्यावापगमनम्। तत्र प्रधानकर्मणा यागादिना सहैव तदङ्गपशुहिंसादीनां स्वफलदानोन्मुखत्वम्। यथा धान्यबीजैः सहान्यानां तृणबीजानां तैः सहैव कुसूलप्राप्तिः कुसूलस्थितानां च धान्यबीजेन सहै-

---

5. B. om. अस्य.
6 A. om. प्राचीन०....समाप्तेः.
26. A. reads विभाग for विपाक.

वावापभामिर्न स्वातन्त्र्येण तद्वत् । परोपसर्जनतयानुष्ठितत्वाच्च न स्वातन्त्र्येण फलदातृत्वम् । अत्रापि प्रधानकर्मापूर्वस्य बलवत्तरकर्मान्तरेणाभिभवे तदुपसर्जनस्यापि नैकभविकत्वम् । यद्यपि प्रधानोपकार एव तेषां फलं तदङ्गत्वेन विधानात्तथापि न हिंस्यात्सर्वा भूतानि ( भा. शा. २७८।५) इति
५ निषेधादनर्थोऽपि तत्कार्यम् । प्रधानाङ्गत्वेन तदनुष्ठानविधिर्न तन्निरपेक्षता फलदान इति बोध्यम् । तृतीया तु बलवत्तरेणोत्कटेन नियतविपाककर्मणा स्वविरुद्धफलत्वेन प्रतिबद्धस्य चिरं द्विजजन्मादिपर्यन्तं प्रसुप्ततयावस्थानम् । अतोऽस्यापि नैकभविकत्वम् । तत्राद्या यथा धर्मरूपशुक्लकर्मोदयात्पापरूपकृष्णस्य पापरूपकृष्णमिश्रस्य धर्मरूपकृष्णशुक्लस्य च । यथा तपःस्वाध्यायादिसाध्यः
१० शुक्लकर्माशय उदित एवाद्यफलस्य कृष्णस्य नाशकोऽविशेषाच्च शबलस्यापि। कृष्णभागयोगात् । तथा च श्रुतिः—

द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोपहन्ति ।
तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ते॥

इति । पुण्यपापरूपे द्वे कर्मणी पुरुषैर्वेदितव्ये। वीप्सा पुरुषभेदात् । तत्र पुण्यकृत
१५ एको मुख्यो राशिः । समूहस्य समूहिकार्यत्वात् । पापकस्य राशेरपहन्ति । तमपहन्ति । शेषे षष्ठी । तस्मात्सुकृतानि कर्तुमिच्छस्व । इह लोक एव ते तुभ्यं कवयो वेदयन्ते न तु लोकान्तर इत्यर्थः । इच्छस्वेति च्छान्दसम् । परपीडादिसाधनासाध्योऽयं शुक्लः कर्माशय एवमुक्तो यदेकोऽपि सन्कृष्णान्कृष्णशुक्लांश्चापहन्ति । अत्यन्तविरोधिनः कर्माशयान्भूयसोऽपीति भावः । यत्तु स्वाध्यायादिजन्यदुःखा-
२० त्पापनाश इति तन्न । अधर्मस्य स्वकार्यदुःखविरोधित्वात् । न हि तपआदिजन्यं दुःखं तत्कार्यम् । तद्विध्यानर्थक्यापत्तेः । तद्बलादेव तद्बलासिद्धेः । विधिं विना तदनुत्पत्तौ च कुम्भीपाकादेरपि विधानापत्तेरिति दिक् । द्वितीया तु पञ्चशिखाचार्येणोक्ता । स्वल्पः संकरः सुपरिहरः सप्रत्यवमर्शः कुशलस्य नापकर्षायालम् । कस्मात् कुशलं हि मे बह्वन्यदस्ति यत्राय-
२५ मावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति । अस्यार्थः—हिंसादिजन्यपापेन यागापूर्वस्य स्वल्प एव संकरः स्यात् । सोऽपि स्वल्पेनैव प्रायश्चित्तेन परिहर्तुं

---

1. B. C. read वाप for आवाप.
5–6. C. om. नविधे॰ बोध्यम्.
7. A. reads फलेन for फलत्वेन.
7. A. C. read द्विजि for द्विज.
9. A. Reads शुक्लकृष्णस्य for कृष्णशुक्लस्य.
17–8. B. reads साध्यः for असाध्यः.
20. B. C. read अविरोधित्वात् for विरोधित्वात्.
26. C. reads आदि after याग.

शक्यत्वात्सुपरिहरः । प्रमादतः प्रायश्चित्ताकरणेपि सम्यग्यवमर्शः । बहुसुखमध्ये-
ऽल्पदुःखदत्वात्सहनयोग्यो भोजननान्तरीयकदुःखवत् । अतः कुशलस्य यागादे-
रपकर्षाय हेयत्वाय नालं समर्थः । कस्मादिति प्रश्ने पुण्यवत उत्तरम् । दीक्षणीया-
दिदक्षिणान्तजन्यं पुण्यं मे बह्वस्ति यत्रायं संकरः स्वल्पोस्य फले स्वर्गे सर्वथा
५ दुःखासंभिन्नेप्यल्पमपकर्षमल्पदुःखसंभेदं करिष्यति स्वर्गादल्पं दुःखमित्यर्थः ।
ननु तृतीया गतिः कथम् । कर्मविशेषस्य चिरमवस्थाने सर्वकर्मणामेकदैव मर-
णादभिव्यक्तेरुक्ताया अनुपपत्तेरिति चेन्न । नियतविपाककर्मणो दृष्टजन्मवेद-
नीयस्यैवैकमरणेनाभिव्यक्तौ तात्पर्यात्त्वनियतविपाकस्यापीति बोध्यम् । ननु
तृतीयगतौ चिरावस्थानस्य कोवधिरिति चेच्छृणु । यावदेतद्विरुद्धं बलवत्कर्म
१० तदभिव्यञ्जकं निमित्तमेतस्य फलोन्मुखत्वं करोति । बलवत्त्वं च नियतविपाक-
त्वेनानवकाशत्वात् । अनियतविपाकस्य त्वन्यदा सावकाशत्वाद्दुर्बलत्वम् ।
चिरावस्थानं च बीजरूपेण बोध्यम् । अत एवेयमभिभूतकर्मगतिस्तद्विपाक-
देशकालनिमित्तानामनवधारणाच्चित्राऽद्भुतरूपा दुर्विज्ञाना चेत्युच्यते । न चैवमे-
कभविकत्वं क्षतम् । क्वचिदपवादेऽप्युत्सर्गस्याक्षतेः । एवं चौत्सर्गिकमेकभवि-
१५ कत्वं कर्माशयस्याप्यनुमन्यत इति दिक् । न चापवादाशङ्कयानाश्वासतादवस्थ्यम् ।
अपवादनिश्चयस्यैव स्वानुष्ठानपरिहारानिमित्तत्वादित्याहुः ॥ १३ ॥

इदानीं क्लेशानां कर्मतद्विपाकद्वारकं मुख्यं फलमाह—

## ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥

ते जात्यायुर्भोगरूपा विपाका पुण्यहेतुकत्वादारोग्यतया सुखफला अपुण्यहेतु-
२० त्वाद्दुःखफला इत्यर्थः । विपाकान्तर्गतभोगश्च शब्दाद्याकारा वृत्तिरेवेति तस्यापि
सुखदुःखफलकत्वम् । ननु ब्रह्मलोकादौ दुःखासंभिन्नसुखसत्त्वात्कथं सर्वविपा-
कानामुभयफलकत्वमिति चेन्न । यथेदानीं परिदृश्यमानसुखकाले दुःखं द्वेष्य-
स्वभावप्रतिकूलात्मकं तथा ब्रह्मलोकादौ भोगिनां विषयसुखकालेपि । प्रति-
कूलात्मकस्य सूक्ष्मदुःखस्य सत्त्वात् । मूढानां तु सुखनान्तरीयकसूक्ष्मदुःखेषु
२५ दुःखभावायोगिन्यामित्युक्तम् । तेषां हि तत्राल्पदुःखमपि बलवदद्वेषविषयः । बल-
वत्त्वं च सुखाभिलाषाभिभावकत्वम् । यथा दुःखाद्द्वेषः पुरुषस्य न तथा सुखाभि-
लाष इति सांख्यसूत्रोक्तेः । जीवन्मुक्तानामपि प्रारब्धविपाके च सुखदुःखे शारीरे
भवत एव । आभिमानिके तु न । तत्कारणक्लेशाभावादिति सिद्धान्तः । " न ह
वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति " ( छा. ८।१२।१ ) इति,

३० आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ( बृ. ४।४।१२ )

---

3. B. reads पुण्यवत् for पुण्यवतः.
27. A. reads विपाकेषु for विपाके च.

इति च श्रुतेः ॥ १४ ॥

कथमेतदुपपद्यते तत्राह—

## परिणामतापसंस्कारदुःखैर्गुणवृत्त्यविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥

५　परिणामतापसंस्कारैर्जन्यानि यानि दुःखानि तैः संबन्धात्तत्कारणत्वाद्गुण-वृत्त्यविरोधाच्च विवेकिनः सुखदुःखसाक्षात्कारवतः सर्वं प्रकृतितत्कार्यसुखादिकं दुःखमेवेत्यर्थः। मूढस्तु सुखकाले दुःखतया न जानातीति विवेकिन इत्युक्तम्। स हि सुखकालेपि तस्य दुःखात्मकत्वं पश्यति। दुःखसंभिन्नत्वात्। सुखमेव तु न सर्वम्। दुःखे बलवद्द्वेषाद्दुःखबाहुल्याच्च।

१०　　　कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः।
　　　क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम् ॥

इति स्मृतेः। तत्र परिणामदुःखहेतुतया सुखस्यापि दुःखतोच्यते। सर्वस्यापि चेतनस्याचेतनक्षेत्रादिसाधनकसुखानुभवकाले सुखे रागो जायते। रागाच्च "सुखमिदं मे स्थिरं भवतु परमेश्वर, मा नश्यतु" इत्यादिसंकल्पात्मको

१५ मानसः कर्माशयो धर्माधर्मरूपो भवति। तस्माच्च जन्मादिदुःखम्। एवं तत्काले सुखविरोधिदुःखसाधनानि द्वेष्टि। "सुखभ्रंशदुःखं मे मा भूयात्। शत्रुश्च मे नश्यतु" इत्यादिरूपेण। तथा दुःखसाधनानि परिहर्तुमशक्तो मुह्यति चेति द्वेषमोहकृतोपि कर्माशयः। रागद्वेषमोहानां च प्रवृत्त्यादिद्वारा दृष्टहेतुत्वम्। एतच्च सुखस्य रागानुबद्धत्वं "सुखानुशयी रागः" (योग. सू. २।७) इति

२० सूत्रे प्रतिपादितम्। एवं रागकालेपि द्वेषमोहौ विच्छिन्नावस्थक्लेशोपपादनावसरे प्रतिपादितौ। संकल्पस्य च साभिलाषत्वाद्वाचिकत्वमपि।

　　साभिलाषश्च संकल्पो वाच्यार्थान्नातिरिच्यते।

इत्युक्तेः। एवं नानुपहत्य भूतान्युपभोगः संभवतीति हिंसाकृतः शारीरसाध्योपि कर्माशयस्तत्रास्ति दुःखभोगकारणम्। एवं शापाशीर्वादजो वाचिकोपि। अत

२५ एव मधुविषसंपृक्तान्नवद्विषयसुखज्ञानमविद्येत्यविद्यासूत्रे उक्तम्। भोगेन सुखं भवतीत्येवंरूपा भोगजदुःखे सुखबुद्धिरप्यविद्या।

नन्रु किं परमार्थतः सुखं किं च तथा दुःखमिति चेच्छृणु। भोगेष्विन्द्रियाणां तृप्तेरिच्छाविच्छेदाज्जायमाना योपशान्तिश्चित्तस्य व्यापारोपरमस्तन्निमित्तिका या दुःखनिवृत्तिस्तत्सुखम्। विषयसुखं तु बहुलदुःख-

3. B. reads विरोधाच्च for अविरोधाच्च.
6. B. reads विरोधाच्च for अविरोधाच्च.
12. B. om. अपि after सुखस्य.
18. A. reads अदृष्ट for दृष्ट.
22 B. Reads बाह्य for वाच्य.

संभिन्नत्वेन विवेकिनां निरुपाधिप्रियत्वाभावेन न पारमार्थिकम् । तस्यापि दुःखसंभिन्नत्वेनाविघात्वात् । निरुपाधिप्रियत्वस्यैव सुखलक्षणत्वात् । अत एव सुखं दुःखसुखात्यय इति स्मृतिः । तृष्णादिदुःखासंभिन्नत्वेन विवेकिनामपि परमप्रियत्वाच्च । "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" ५ (तै. २।८।१) इति श्रुतेश्च । तस्य शान्तिर्निमित्तकाष्ठापि सुखमेव । या त्विन्द्रियाणां भोगतृष्णातश्चित्तस्य वृत्तिबाहुल्यरूपानुपशान्तिः सा दुःखबहुलत्वेन विवेकिद्वेष्यत्वाद्दुःखम् । एवं च विषयसुखतत्साधनभोगयोगाविषयकसुखत्वतत्साधनत्वे सिद्धे । एवं चेतोपि परिणामदुःखता सुखस्य । तथा हि । न हीन्द्रियाणां विषयभोगेन वितृष्णता । भोगाभ्यासेनेन्द्रियाणां तृष्णाविवृद्धेः । रागविवृद्धेश्च । १० भोगेच्छुर्हि कामादिक्षुद्रदुःखरूपवृश्चिकभीतस्तन्निवृत्त्यात्मसुखार्थी विषयसंस्कारसंस्कृतः स्त्रीपुत्रादिमयमहादुःखरूपैः सर्पैर्दष्टो महादुःखपङ्के निमग्न इति । एष परिणामदुःखसमूहो द्वेष्यः सुखावस्थायामपि योगिनमेव क्लिश्नाति । अन्येषां तु "भूते पश्यन्ति बर्बरा" इति न्यायेन परिणामकाल एव दुःखत्वज्ञानम् । योगिनां तु स्वकाल एवानर्थहेतुतादर्शनेन दुःखत्वज्ञानमिति विशेषः ।

१५ अथ तापजन्यदुःखतोच्यते । सर्वस्य जनस्य सुखकाले द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनो दुःखत्वरूपतापानुभवोऽस्ति । पूर्वोक्तरीत्यैव तथापि द्वेषजः कर्माशयः सुखसाधनप्रार्थनया कायवाङ्मनोभिः परिस्पन्दते । ततः परमनुगृह्णात्युपहन्ति च । ताभ्यां च धर्माधर्मौ ताभ्यां च जन्मादिदुःखमिति तापकालीनः कर्माशयो द्वेषेणेव रागमोहाभ्यामपि । यद्यप्येषापि परिणामदुःखतैव तथापि पूर्वकालोत्तर- २० कालयोः सर्वदैव दुःखत्वात्पृथङ्निर्देशः ।

अथ संस्कारदुःखता सुखदुःखसंस्कारजन्यं दुःखमुच्यते । सुखदुःखानुभवैस्तत्संस्कारा जायन्ते । ततः कालादिविशेषादुद्बुद्धेभ्यः स्मृतिः । ततो रागद्वेषौ । ततः प्रवृत्तिः । ततः पुनर्दुःखम् । एवं कर्मजसंस्कारेभ्यः सुखदुःखरूपं विपाकमनुभूयमाने पुनः कर्माशयप्रचय इति । यद्यप्येषापि परिणामदुःखतैव तथापि संस्कारपरंपर- २५ याऽनन्तदुःखप्रतिपादनाय गोबलीवर्दन्यायेन पृथगुक्तिः ।

एवमिदं सर्वमनादिदुःखस्रोतो विस्तीर्णं योगिनमेवोद्वेजयति नान्यम् । अक्षिपात्रकल्पो हि विद्वान् । तत्र यथोर्णातन्तुरक्षिगोलकरूपेऽक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु तथा निर्मलचित्तत्वान्नमेवै-

1–2. B. om. तस्यापि॰ घात्वात्.
5. O. om. तस्य शान्ति॰ सुखमेव.
7. A. B. read आविषयक for अविषयक.
13. O. om. तु after दुःख.

तानि क्लिश्नन्ति नेतरमयोगिनम् । तं तु स्वकर्मोपकृतदुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तं चोपाददानमनादिवासनाभिर्नानारूपया चित्तवृत्त्या चित्तनिष्ठाविद्यया लिप्तमिव हातव्येष्वेव देहेन्द्रियाद्यवहंकारममकारान्कुर्वन्तं जाता जाता आधिभौतिकाधिदैविकाध्यात्मिकनिमित्तास्त्रिविधास्तापा अनुस्त्रोतस्त्वनन्तर-
५ मेव प्लवन्ते व्याप्नुवन्ति न तु पूर्वम् । तदेवमनादिदुःखस्रोतसोह्यमानमात्मानं भूतग्रामं च दृष्ट्वा योगी सर्वदुःखकारणक्षयकारणं सम्यग्दर्शनमेव शरणं प्रपद्यते ।

गुणवृत्त्यविरोधाच्चेति प्रकाशक्रियास्तम्भधर्मका गुणाः सत्त्वादयो बुद्धिरूपेण परिणताः परस्परसहाया भूत्वा शान्तं घोरं मूढं वा वृत्तिरूपं तस्योपभोगरूपमपि प्रत्ययं सुखदुःखमोहरूपगुणत्रयवन्तमेवारभन्ते नैकै-
१० कगुणम् । शान्तादिसंज्ञात्रयं च सुखदुःखमोहाधिक्यमात्रेण । एवं च सुखवत्यामपि वृत्तौ सुखेन दुःखस्याविभागलक्षणोऽभेदोऽस्त्येव हरीतक्यामिव षण्णां रसानाम् । वृत्तेश्च द्रव्यत्वात्सुखादिगुणवत्ता युक्ता । न च सुखकाले दुःखरूपरजःपरिणामे मानाभावः । गुणानां वृत्तस्य क्रियायाः प्रतिक्षणमन्योन्यस्वरूपचञ्चलत्वेन चित्तस्य क्षिप्रपरिणामिता यास्तान्त्रिकैरुक्तेः । चित्तेत्युपलक्षणं
१५ जडवस्तुमात्रस्य क्षिप्रपरिणामित्वात् । एवं च चित्तगतसत्त्ववृत्तिकाले रजसोपि वृत्तिरावश्यकी । न चैका वृत्तिः कथं विरुद्धत्रयात्मिका । बुद्धेरष्टौ रूपाणि धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि । वृत्तयश्च शान्तादिनामकाः परिणामा द्रव्यरूपाः । तेषामुत्कर्षाणां परस्परं विरोधेप्यनुत्कृष्टसामान्यानामतिशयैः सह विरोधाभावात् । यथा चित्तस्य प्रत्ययास्त्रिगुणा एवं सर्वे पदार्थाः । यत एते
२० गुणा घटादिरूपेण परिणताः परस्परसाहित्येनोत्पादितसुखदुःखमोहप्रत्ययाः । न हि विषयगतविशेषं विना विषयसंबन्धमात्रेण सुखाद्यात्मका चित्तवृत्तिरुदेति । अव्यवस्थापत्तेः । तस्मात्सुखादिनियामकतया विषयगतो विशेषः सुखादिरूपः सिध्यति । बुद्ध्याख्यत्रिगुणमहत्तत्त्वकार्यत्वाच्च । अतस्मिंस्तदाकारतारूपश्च मोह इति तस्यापि विषयगतत्वेन विरोधः। नन्वेवं सति सर्वस्य सुखरूपत्वादहेयत्वं स्यादिति
२५ चेन्न । गुणप्रधानभावकृतविशेषाद्दुःखबहुलत्वाच्च हेयत्वसिद्धेः । तस्माद्दुःखमेव सर्वं विवेकिन इति तात्पर्यम् ।

तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या । तस्याश्च सम्यग्दर्शनमभावहेतुरिति सिद्धम् । एवं च यथा चिकित्साशास्त्रं रोगंरोगहेत्वारोग्यभै-

---

1–2. A. reads त्यजन्तम् for उपात्तं त्यजन्तं त्यक्तम्.

8. B. reads व्याप्तृत्तिरूपम् for वा वृत्तिरूपम्.

9. B. reads सुख for तस्य.

9. B. reads पर्यन्तम् for वन्तम्.

11. A. O. read लक्षण for लक्षणः.

24. B. reads तस्या विषय for तस्यापि विषय.

पञ्चरूपचतुर्व्यूहमेवमिदमपि संसारसंसारहेतुमोक्षमोक्षोपायरूपचतुर्व्यूहम् । तत्र दुःखबहुलत्वात्संसारो हेयः । बुद्धिरूपप्रधानपुरुषयोर्जन्मात्स्यसंयोगोऽविद्यामूलको हेयसंसाररूपदुःखहेतुः । उक्तसंयोगस्यात्यन्तिकी निवृत्तिरेव दुःखहानस्य चरमकारणत्वाद्दुःखहानम् । प्रकृतिपुरुषविवेकसाक्षात्काररूपं सम्यग्द-
५ र्शनं मोक्षरूपहानोपायः । तत्रैतेषां व्यूहानां मध्ये दीपस्य निर्वाणमिव हातुरात्मनो हानमुपादानं वा न पुरुषार्थः ।

प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतसः ।

इति बौद्धोक्तहाने तस्योच्छेदवादः प्रसज्येत । स चायुक्तः । स्वनाशस्य लोके पुरुषार्थत्वादर्शनात् । स्वीयतयैव सुखदुःखाभावयोः पुरुषार्थत्वदर्शनात् ।
१० स्वयं म्रियमाणोऽपि दुःखहानार्थमेवाभिप्रवेशादौ प्रवर्तते न तु स्वनाशार्थमिति बोध्यम् । सवासनक्लेशसमुच्छेदाद्विशुद्धज्ञानोत्पादरूपे बौद्धविशेषसंमत उपादाने स्वरूपस्य सकारणतावादापत्तिः । तथा च भावकार्यत्वेन विनाशप्रसङ्गः । ज्ञानसंतानातिरिक्तसंतानिनोऽभावाच्च । उभयोर्निषेधं च नित्यतावाद एव परिशेषात्सिध्यतीत्येतच्चतुर्व्यूहशास्त्रमेव सम्यग्दर्शनं न तु हानोपादानवादिनां
१५ नास्तिकानामिति दिक् ॥ १५ ॥

तानेतांश्चतुरो व्यूहान्संक्षेपेणोक्तानपि विस्तरेण प्रतिपादयितुमादौ

## हेयं दुःखमनागतम् ॥ १६ ॥

तत्रातीतं दुःखमुपभोगेनातिक्रान्तमिति सिद्धतया तद्धानस्य तद्धानं न पुरु-
२० षार्थः । वर्तमानमपि स्वसत्ताक्षणे भुज्यत एवेति तदाऽशक्यत्यागम् । उत्तरकाले च स्वोत्तरोत्पन्नगुणेन स्वयमेव नङ्क्ष्यतीति तद्धानार्थः प्रयासो विफल एव । तस्माद्यदनागतं दुःखमक्षिपात्रकल्पं योगिनं क्लिश्नाति नेतरं तदेव हेयमित्यर्थः । तत्र स्वचित्तस्थस्यानागतावस्थदुःखस्य कारणोच्छेदेनानुत्पत्तिरेव हेयत्वम् । कदाप्यवर्तमानावस्थस्य तस्यानागतावस्थस्य सत्त्वं तृतीयपादे " शान्तोदित "
२५ ( यो. सू. ३।१४ ) इति सूत्रेणुमानाद्वक्ष्यते । एवं च भोग्यतारूपस्वत्वसंबन्धेन धनादीनामिव तद्धानं पुरुषे न नित्यसिद्धमिति तेन संबन्धेन तद्धानं पुरुषार्थः । एवं चात्यन्तिकदुःखनिवृत्तिर्मोक्ष इति सिद्धम् । यत्तु

आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ।

इति तदपि दुःखनिवृत्त्यात्मसुखपरमेव नित्यसुखेऽभ्रमाविभागाभिप्रायं चेति
३० दिक् ॥ १६ ॥

---

7. A. reads चेतसि for चेतसः.

अथ हेयहेतुमाह—

## द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

द्रष्टा बुद्धिवृत्तिप्रतिबिम्बवत्स्वरूपप्रतिसंवेदित्ववान्पुरुषः। दृश्या बुद्ध्युपारूढ-
त्वेन बुद्धिधर्मत्वं प्राप्ताः प्रधानादयः। यद्यपि बुद्ध्यारूढो भवन्पुरुषोपि दृश्य-
५ स्तथापि निर्दुःखतया तद्दर्शनस्य हानहेतुत्वान्न स दृश्यत्वेन गणितः। एवं च
सुखाद्यात्मकदृश्यवत्या स्वयं च दृश्यया बुद्ध्या सह द्रष्टुः साक्षिणः काष्ठाग्नि-
वद्धन्धाख्यः संयोगः पुरुषस्य दुःखहेतुरित्यर्थः। न तु बुद्ध्यारूढैर्दृश्यैर्द्रष्टृसंयोगो
हेयहेतुरित्यर्थः। "स्वस्वामिशक्त्योः" (यो. सू. २।२३) इत्यागामिसूत्रेणास्य
संयोगस्य हानहेतुत्वेन लक्षणीयत्वात्। एवं च बुद्ध्यात्मसंयोगवद्बुद्ध्यवच्छेदेन
१० घटादिविषयात्मकसंयोगोपि भोगहेतुः। लाघवेन सामान्यतो भोक्तृभोग्यसंयोगस्यैव
भोगहेतुताया औचित्यात्। अस्य च संयोगस्य पुरुषार्थो हेतुः। तथा हि।
तदेतद्दृश्यं बुद्धिसत्त्वमयस्कान्तमणिवत्संनिधिमात्रेणोपकारितया स्वयं दृश्यत्वेन
ज्ञानमात्रस्वरूपस्य बुद्ध्युपनीतसुखादिभोक्तृत्वेन स्वामिनः पुरुषस्य स्वं भवति।
ननु बुद्धिः स्वतन्त्रत्वात्स्वयं द्रष्ट्री स्वार्थावास्तु किं स्वामिकल्पनेनेति
१५ चेन्न। कर्तृकर्मविरोधेन स्वदृश्यत्वानुपपत्त्या प्रतिबिम्बरूपानुभवाख्यं यत्पुरुषस्य
कर्म तद्विषयतापन्नस्यैवान्यरूपेण पुरुषचैतन्येन प्रतिलब्धात्मस्वरूपस्य
पुरुषानाश्रितत्वेन स्वतन्त्रस्यापि परस्य भोगाद्यर्थत्वेन परस्वत्वरूपपरतन्त्र-
त्वात्। एवं च दृश्यरूपभोग्यात्मकाखिलपुरुषार्थस्य बुद्धिनिष्ठत्वं सिद्धम्। एवं
चानागतावस्थपुरुषार्थकृत एव तयोः प्रवाहरूपेणानादिः संयोगो हेयहेतुर्दुःखस्य
२० कारणमित्यर्थः। न च पुरुषस्य तत्संयोगाङ्गीकारे परिणामित्वापत्तिः। संयोग-
विभागसंख्यादीनां द्रव्यसामान्यगुणत्वेन तद्व्यतिरिक्तधर्मोत्पत्तेरेव परिणामशब्दार्थ-
त्वात्। घटात्मसंयोगाद्यैः पुरुषस्य परिणामव्यवहाराभावात्। पद्मपत्रस्थतोयेन पद्म-
पत्रस्य परिणामसङ्कराव्यवहाराच्च। सुखादिरूपपरिणामानामेव पुरुषे श्रुत्यादि-
भिरनभ्युपगमाच्च। मनोन्वयव्यतिरेकेण मनस्येव लाघवात्सुखादिकल्पना।
२५ मनसोवच्छेदकत्वं परिकल्प्यान्यत्र तत्कल्पने गौरवात्। संयोगादिकं प्रति तु
द्रव्यत्वेनैव हेतुतेति पुरुषेऽपरिणामाद्यनाश्रितत्वाच्च द्रव्यरूपे तत्संभवात्। यद्यपि
बुद्धिपुरुषौ विभू तथापि तयोः परिच्छिन्नगुणान्तरावच्छेदेन संयोगसंभवः। न
च संयोगजः संयोगः। न तु कर्मजः। अवयवसंयोगादवयविसंयोगवदवच्छे-
दकीभूतगुणसंयोगादेव विभुनोः संयोगोत्पत्तेः। भूतलस्य घटसंयोगेन घटावच्छि-

3. A. reads चितिच्छायापत्तिरेव बुद्धेर्बुद्धिप्रतिसंवेदित्वं पुंस इति विभेरप्यु-
क्तत्वात् after पुरुषः.
15. B. om. स्व before दृश्यत्व.
26. A. reads पुरुष for पुरुषे.

नाकाशसंयोगोत्पत्तिवत् । अत एव प्रकृतिपुरुषसंयोगात्सृष्टिस्तद्वियोगतश्च
प्रलय इत्यादिश्रुत्यादय उपपद्यन्ते । न च स्वस्वामिभावरूपा भोग्यभोक्तृयोग्य-
तैवात्रौपचारिकः संयोगोऽस्तु । तस्या अविनाशित्वे ज्ञाननाश्यत्ववचनविरोधः ।
नाशित्वे पुरुषे परिणामापत्तिः । ईदृशसंयोगस्वीकारेऽपि पुरुषस्य पद्मपत्रवदसङ्ग-
तैव । स्वाश्रयविकारहेतुसंयोगस्यैव सङ्गत्वात् । एकस्यैव बुद्धौ विकारहेतुत्वं
न पुरुष इत्यपि पद्मपत्रदृष्टान्तेनैव निर्णेयम् । जले तत्सौगन्ध्यरूपविकारदर्श-
नात् । तस्मात्पुरुषार्थनिमित्तको बुद्धिपुरुषयोः संयोगः । स एव जन्मरूपतया
दुःखहेतुरिति सिद्धम् ।

अयमेव संयोगविशेषः परमेश्वरस्य योगमाया योगीन्द्रैरप्यचिन्त्या श्रुतिस्मृति-
१० गम्या न विशेषतस्तर्कगोचरा । यया खलु नित्यमुक्तमसङ्गमसंयोगमविकारहितं
विभु चिन्मात्रं जीवजातमीश्वरो बध्नाति । तदुक्तम् —
अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत ।
इति दिक् ।

संयोगस्य चाविवेकोत्पत्तिकारणं पुरुषार्थः स्थितिकारणम् । तद्वशेन तस्य
१५ स्थितेः । संयोगस्य च दुःखहेतुत्वं पञ्चशिखाचार्यैरप्युक्तं "तत्संयोगरूपदुःखहेतो-
रत्यन्तोच्छेदरूपविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः" इति । न चाना-
दिकालप्रवृत्तदुःखहेतुसंयोगस्योच्छेदोऽशक्य इति वाच्यम् । अनित्यस्य दुःख-
हेतोः परिहार्यतया प्रतीकारदर्शनात् । यथोपानहौ विना कण्टकस्य भेत्तृता
भेदद्वारा दुःखजनकता पादयोर्भेद्यदुःखभागित्वरूपं भेद्यत्वं तत्परिहारश्च यदा
२० कण्टकस्यानारोहणमुपानद्व्यवहितेन वारोहणमेतत्त्रयं दुःखाश्रयदुःखहेतुतत्परि-
हाररूपं जानतस्तत्परिहारोपायं कुर्वतस्तज्जन्यदुःखाभावो भवति । एवं चैतत्त्र-
यज्ञानं मुमुक्षुभिः संपाद्यम् । यो वदति भाष्योक्तेः । न च प्रकृते पुरुषस्य
निर्दुःखत्वेन बुद्धेरेव तप्यतापकोभयरूपत्वादेतत्त्रितयाभावः । एवं च तपेः
कर्मस्थक्रियतया पृथक्तप्याभावे तापस्यैव निवृत्त्यापत्तिरिति वाच्यम् । बाह्यदुःख-
२५ स्थल उक्तत्रयोपलब्धिबलेनान्तस्थलेऽपि त्रयसिद्धेः । तथा हि । बुद्धेरेकत्वेऽपि
त्रिगुणात्मकत्वादंशत्रयमस्ति । तत्र तापकस्य रजसः सत्त्वांशस्तप्यः । तापो
दुःखम् । बुद्धिपुरुषयोर्वियोगश्च तत्प्रतीकार इत्यदोषात् । तपेः सकर्मकत्वात् । न
च पुरुष एव तप्यत्वमस्तु । अपरिणामिनि निष्क्रिये क्षेत्रज्ञे क्रियाजन्यफला-
श्रयत्वरूपकर्मत्वासंभवात् । ज्ञानक्रियाकर्मत्वं तु विषयतारूपं तस्योपपद्यत एव ।
३० न चैवं दुःखनिवृत्तेः पुरुषार्थत्वं न स्यात् । अन्यदीयदुःखनिवृत्तेरन्यापुरुषार्थत्वात् ।

15. B. om. च.
20. A. om. दुःख before हेतु.
22. B. reads प्रकृतेः for प्रकृते.

किं चाचेतनस्य सत्त्वस्य तापेपि का क्षतिरिति वाच्यम्। पुरुषस्य बुद्धिसत्त्वेन निवेदितविषयत्वात्। एवं च सत्त्वे तप्यमाने पुरुषोपि प्रतिबिम्बरूपेण तत्समानाकारो भवन्ननुतप्यत इति मूढैर्दृश्यते। एवं च प्रतिबिम्बरूपेण भोगाख्यसंबन्धेन विदुषामपि दुःखस्य हेयत्वात्पुरुषार्थत्वोपपत्तिः। एवंविधभोक्तृत्वं च
५ पुरुषस्य स्वीक्रियत एवेति दिक्॥ १७॥

द्रष्टुरखिलदृश्यभेदेन प्रतिपादनाय पूर्वं दृश्यमाह—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्॥ १८॥**

प्रलये प्रकाशादिकार्याभावाच्छीलपदोपादानम्। बुद्ध्यादिवृत्तिभौतिकालोको-
१० भयरूपप्रकाशशीलं सत्त्वं क्रियाशीलं रजः प्रकाशक्रिययोः प्रतिबन्धरूपस्थितिशीलं तम एतद्रूपं गुणत्रयम्। अग्रे गुणपर्वाणि (यो. सू. २।१९) इति विभागवचनाद्गुणत्रयमिति विशेष्यं लब्धम्। एतद्गुणत्रयरूपं प्रधानं दृश्यमित्यर्थः। गुणत्रयमेव च प्रधीयते कार्यमेभिरिति व्युत्पत्त्या प्रधानशब्देनोच्यते। सत्त्वादीनां गुणत्वं च पुरुषोपकरणत्वान्नद्बन्धकत्वाच्च। न तु क्रियादिवत्परसमवेतत्वेनेति
१५ बोध्यम्।

एवं च ते गुणा एव जगन्मूलकारणं नित्याश्च। तथा हि। सत्त्वस्याधिकभागरूपः प्रविभागः स्वल्परजस्तमोभ्यामुपरक्तः संसृष्ट एवं रजसस्तमस इत्येवं परस्परोपरक्तप्रविभागाः परिणामिनो गुणाः संयोगविभागधर्मत्वेन द्रव्यरूपा इतरेतरसाहित्येनोत्पादितावयावनोन्योन्यमङ्गाङ्गिभावेप्युत्पादिते द्रव्ये सत्त्वाधिक्य एव
२० प्रकाशगुणो रजआधिक्य एव क्रियागुणस्तमआधिक्य एव स्थितिगुण इत्यसंमिश्रप्रकाशादिशक्तिप्रविभागाः। न तु सर्वदैकरूपशान्ताद्यन्यतमप्रत्ययजनकाः। सत्त्वादीनां च व्यक्तिरूपेणानन्त्यात्सत्त्वादिजात्या सजातीया विजातीयाश्च ये सहकारिशक्तिविशेषास्तेषामविशेषेणोपष्टम्भकस्वभावतया तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनो विकारेषु स्वस्वप्राधान्यकालेप्यनभिव्यक्तसांनिध्येतरका
२५ इतरोपसर्जनतादशायामपि सहकारितारूपव्यापारमात्रेण प्रधानगुणान्तर्गततयानुमितास्तित्वभावाः पुरुषार्थेषु या कर्तव्यता तया प्रेरितकार्यजननसामर्थ्याः प्रतिबिम्बरूपसांनिध्यमात्रेण पुरुषस्योपकारिणो न तु बुद्धाविव स्वाकारपरिणामजनने तदुपकारिणो विषयविधयायस्कान्तमणिवाच्चित्ताकर्षकाः स्वस्यातिशयेनाभिव्यक्त्यभावकालेपि यस्य कस्याचिद्गुणान्तरस्य वृत्तिमनु सूक्ष्मवृत्तिमन्तः
३० प्रधानमुच्यते। मिश्रास्तु तुल्यजातीयेषूपादानशक्तिरन्यत्र सहकारिशक्तिरित्येवं शक्तिभेदानुपातिन इत्यर्थमाहुः। प्रधानत्वकालेभिव्यक्तसांनिध्येतरकत्वं यथा

---

1. A. om. हेयत्वस्य.
16. B. reads भावरूपः for भागरूपः.

दिव्यशरीरे जनयितव्ये सत्त्वं गुणः प्रधानमितरे अङ्गे। मानवशरीरे रजःप्रधान-
मितरे अङ्गे। पश्वादिशरीरे तमःप्रधानमितरे अङ्गे इति। अत एव दृश्यमित्युच्य-
ते। एते एव द्रव्याष्टकरूपेण वैशेषिकैर्विभज्यन्ते। एतदेव वेदान्तिना माया।
"मायां तु प्रकृतिं विद्यात्" (श्वे. ४।१०) इति श्रुतेः। न च गुणानामनन्त-
५ त्वाज्जात्यापि त्रित्वात्प्रकृतावेकत्वमनुपपन्नम्। पुरुषभेदेन सर्गभेदेन च भेदा-
भावस्यैव तत्रैकत्वात्। भोग्यभोक्त्रोर्हि भोक्तारो भोक्तृत्वाभोक्तृत्वाभ्यां सर्गभे-
देन भिद्यन्ते। पूर्वसर्गे भोक्तॄणां मुक्तानामुत्तरसर्गे भोक्तृत्वाभावात्। भोग्यं तु
सर्वदा भोग्यमेवेति न तथा। मुक्तपुरुषोपकरणानामपि सर्गान्तरेऽन्यपुरुषं प्रति
भोग्यत्वात्। प्रधानत्वजात्यैकत्वमित्यन्ये। प्रकृतेरेकव्यक्तित्वं तु "इन्द्रो मायाभिः
१० पुरुरूप ईयते" (बृ. २।५।१९) इति श्रुतिविरोधः। तथा त एव गुणाः सर्वसर्गेषु
सधाराः। विकाराः सर्गभेदेन भिन्ना एव। व्यापकत्वमप्यस्याः कारणशून्यप्रदे-
शाभावात्कारणत्वसामान्येनैव गन्धादेः पृथिव्यादिव्यापकत्ववत्। अंशतः
परिच्छिन्नत्वं च। अत एव वक्ष्यमाणः प्रकृत्यापूरः संगच्छते। अक्रियत्वं
चास्या अध्यवसायाभिमानादिप्रातिनियतकार्यशून्यत्वं न तु चलनादिशून्यत्वम्।

१५ प्रधानात्क्षोभ्यमाणाच्च तथा पुंसः पुरातनात्।
प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम्॥

इति स्मृतेः। क्षोभश्चलनम्। यत्तु पुरुषस्यापि क्षोभश्रवणं तत्तत्संयोगोन्मुखत्व-
रूप गौणम्। प्रकृतिकर्मणैव संयोगोत्पत्तेः। निरवयवत्वं चारम्भकावयवराहित्येन
न तु वनादिवद्देशाभावपरम्। वनस्य वृक्षा इतिवच्च प्रधानस्य गुणा इति व्यवहारः।
२० अत एवाकार्यावस्थारूपसाम्यावस्थोपलक्षितगुणत्वं प्रकृतिलक्षणमाहुः।

तत्र प्रधानं भूतेन्द्रियात्मकम्। अनेन तत्र कार्यरूपं तन्त्र्यमाणमुक्तं स्थूलसूक्ष्म-
भूतरूपेण परिणामाद्भूतात्मकं महदहंकाररूपसूक्ष्मेन्द्रियैकादशस्थूलेन्द्रियरूपेण
परिणामादिन्द्रियात्मकम्। तद्गुणत्रयं न प्रयोजनशून्यं सद्भूतादिरूपेण प्रवर्तते।
किं तु प्रयोजनं स्वीकृत्यैवेत्यतस्तादृशं प्रधानं पुरुषस्य भोगापवर्गार्थं तत्फलक-
२५ मित्यर्थः। तत्र भोगो नाम प्रतिबिम्बाविषया सुखदुःखात्मकशब्दाद्याकारवृत्तिः।
न च जीवन्मुक्तीयशब्दादिवृत्तीनामपि भोगत्वापत्तिः। अहंकारेण ममेत्यात्म-
निष्ठत्वेनाभिमन्यमानत्वरूपपुरुषार्थभागापन्नत्ववत्या एव भोगत्वात्। जीव-
न्मुक्तस्य तु भोगाभास एव। अहं शृणोमीत्याभिमानगर्भवृत्तिस्त्वेव भोगव्यवहारात्।
अपवर्गस्तु भोक्तुः पुरुषस्य स्वस्वरूपमुपार्थविविक्तचैतन्यं तदाकारा बुद्धिवृत्तिः।

---

2. A. C. read स्तत्र for एव after अतः.
11. B. reads अस्याकारण for अस्याः कारण.
24. A. reads फलजनकम् for फलकम्.
27. A. reads वृत्याः for वत्याः.

अपवृज्यतेऽनेनेति व्युत्पत्तेः । तद्व्यतिरिक्तबुद्धिवृत्त्यभावाद्भोगापवर्गातिरिक्तार्थत्वं
न दृश्यस्येति बोध्यम् ।

पुरुषाविभागापन्नत्वं च पञ्चशिखाचार्यैरप्युक्तम् । अयं लोकस्त्रिषु गुणेषु
सर्वकर्तृषु सत्सु गुणत्रयापेक्षया तुरीये पुरुषे सूक्ष्मत्वेन बुद्धितुल्यजातीये-
५ ऽजडत्वादिना च बुद्ध्यतुल्यजातीयेऽत एव विवेकाग्रहणतद्ग्रहणयोग्ये
गुणव्यापाराणां जाग्रदादीनां साक्षिमात्रेऽकर्तर्यपि बुद्ध्या प्रतिबिम्बरूपेण
समर्प्यमाणान्सर्वभावान्गुणपरिणामान्युक्तिरूपोपपत्त्या चेतनत्वेन सिद्धानिव
पश्यन्मूढो गुणेभ्योऽन्यद्दर्शनं चैतन्यं नास्तीति संभावयत इति । अनेन च साक्षि-
त्वमेव पुरुषस्य जाग्रदाद्यवस्थसत्त्वादिगुणत्रयापेक्षया तुरीयावस्थेति गम्यते । न
१० चानयोर्भोगापवर्गयोर्बुद्धिनिष्ठत्वेन बुद्धिकृतत्वेन च कथं दृश्यस्य पुरुषभोगाप-
वर्गार्थतेति वाच्यम् । बुद्धिनिष्ठत्वेऽपि ताभ्यामेव स्वामित्वेन पुरुषस्य तथा व्यप-
देशात् । यथा योद्धृषु वर्तमानौ जयपराजयौ स्वामित्वाद्राज्ञि व्यपदिश्येते तस्य
तत्फलभोक्तृत्वात् । एवमुक्तलक्षणभोगापवर्गरूपौ बन्धमोक्षौ पुरुषे व्यपदिश्येते।
एवं च परिणामरूपौ भोगापवर्गौ न पुरुषस्य स्वीक्रियेते । प्रतिबिम्बरूपो भोग-
१५ स्तु तस्याप्यस्त्येव । एवं स्वरूपप्रतिष्ठारूपो मोक्षश्च । तत्र संसारिणां बुद्धिवृत्त्य-
विविक्तसुखादिसाक्षात्काररूपो भोगो जीवन्मुक्तेश्वरयोः सुखादिसाक्षात्कारमात्र-
रूप इत्यन्यत् । अत एव

पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । ( गी. १३।२० )

इति स्मृतिः संगच्छते । भोक्तृत्वनिषेधश्च परिणामरूपभोक्तृत्वपर इति
२० बोध्यम् । एवं च पुरुषार्थासमाप्तिरूपबन्धतत्समाप्तिरूपमोक्षौ परमार्थतो बुद्धेरेवेति
बोध्यम् । एवं च शब्दादिविषयभोगाविवेकख्यात्योर्यथौपचारिकत्वं पुरुषे तथा
स्वरूपमात्रेणार्थज्ञानरूपग्रहणचिन्तनरूपधारणार्थगताविशेषवितर्कणरूपोहानां वि-
तर्कितान्तर्गतानां केषांचिद्विचारतो निराकरणरूपापोहस्य वितर्कितेष्वेव
विचारतः कियद्विशेषावधारणरूपस्य तत्त्वज्ञानस्य तदाकारापत्तिरूपाभिनिवेशस्य
२५ चेच्छाकृत्यादीनां च बुद्धौ वर्तमानानां पुरुष औपचारिकत्वमेवेति दिक् ।
अवधारणपूर्वं तत्र हानोपादानज्ञानमभिनिवेश इत्यन्ये ॥ १८ ॥

दृश्यानां भेदानाह—

## विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥१९॥

गुणरूपवंशस्यालिङ्गादिविशेषान्तं पर्वचतुष्टयं बीजाङ्कुरवदवस्थाभेदा नात्यन्त-
३० भिन्ना अतो गुणा एव सर्वदृश्यात्मकाः । कार्यैः कारणानुमानाद्विशेषादिक्रमेणो-
क्तिः सूत्रे । तत्राकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणां

---

21. B. om. च.

शान्तादिविशेषशून्यशब्दादिधर्मकसूक्ष्मद्रव्यत्वेनाविशेषसंज्ञकानां यथाक्रमम-
भिव्यक्तशान्तादिविशेषकत्वेन विशेषसंज्ञकाः परिणामाः। एते विकारा एव न तु
तत्त्वान्तरप्रकृतयः। प्रकृतित्वं तु तन्मात्राणामेव सर्वत्र। एवं श्रोत्रत्वक्चक्षु-
र्जिह्वाघ्राणरूपं ज्ञानेन्द्रियपञ्चकं वाक्पाणिपादपायूपस्थरूपं कर्मेन्द्रिय-
५ पञ्चकं मनःसहकारेणैव श्रोत्रादीनां स्वकार्यशब्दादिग्रहजनकत्वात्तद-
र्थैरेवार्थवत्त्वान्मन एकादशमिन्द्रियम्। एतान्यभिमानमात्रधर्मकत्वेनास्मिताल-
क्षणस्य श्रवणादिविशेषराहित्येनाविशेषसंज्ञकस्याहंकारस्य विशेषाः।
तत्र बुद्धीन्द्रियाणि सात्त्विकाहंकारस्य कार्याणि राजसस्य कर्मेन्द्रियाणि मन-
स्तूभयात्मकत्वादुभयप्रधानस्येति बोध्यम्। एष पञ्चभूतैकादशेन्द्रियगणः षोडश-
१० संख्याको गुणानां विशेषपरिणामो बोध्यः। यद्यपि तन्मात्राण्यहंकारस्य विशेषा-
स्तथापि तानि भूतानामविशेषा अपीति विशेषेषु नोक्तानि।

अविशेषाः षट्। तत्र शब्दस्पर्शरूपरसगन्धतन्मात्राणि पञ्च। तानि च क्रमेण
शब्दाद्येकद्वित्रिचतुःपञ्चधर्मकाणि द्रव्याणि। उत्तरोत्तरतन्मात्रेषु पूर्वपूर्वतन्मात्राणां
हेतुत्वेन शब्दतन्मात्रं शब्दमात्रधर्मकं तत्कार्यं स्पर्शतन्मात्रं शब्दस्पर्शो-
१५ भयधर्मकमेवं क्रमेणैकैकवृद्धिः। मात्रशब्देन च शान्तादिविशेषस्यैव व्यावृत्ति-
र्बोध्या। शान्तादिविशेषराहित्यादेव तेषामविशेषसंज्ञकत्वम्। तन्मात्रेषु परस्परं कार्य-
कारणभावश्च स्थूलभूतेभ्यो वाय्वाद्युत्पत्तेः श्रुत्यादिषु श्रवणेन सूक्ष्मभूतेष्वपि तथा
कार्यकारणभावौचित्येन बोध्यः। एतानि तामसाहंकाराच्छब्दादिक्रमेणोत्पद्यन्त
इति बोध्यम्। षष्ठस्त्वभिमानवृत्तिकोऽहंकाररूपोऽविशेषः। एते षट्सद्विशेषाणामहं-
२० कारादीनां तदाऽभावेन सत्सामान्यरूपतया सत्तामात्रस्य सर्वविकारस्वरूपतया
तदात्मनो महत्तत्त्वस्य बुद्ध्याख्यस्य परिणामाः। महत्तत्त्वमेव च संसारवृक्षस्य
षड्भावविकारेषु यास्कपरिगणितोऽस्तित्वाख्यः परिणामोऽहंकारादिश्च वृद्ध्याख्यः
परिणामो बोध्यः। एषु षट्स्वविशेषशब्दः पङ्कजादिवद्योगरूढः। तेन महत्तत्त्वे
नाविशेषत्वम्। तत्र तन्मात्राणां बुद्धिपरिणामत्वमहंकारद्वारा बोध्यम्। पुरुषार्थ-
२५ क्रिया सत्। तस्य भावः सत्ता। तद्रूपं महत्तत्त्वम्। भोगापत्तिलक्षणसर्वक्रियाणां
महति बुद्धौ समाप्तत्वात्। आत्मन इत्यनेनास्य तुच्छत्वं निषेधतीति मिश्राः।

लिङ्गमात्रं त्वविशेषेभ्यो यत्परं पूर्वोत्पन्नं जगदङ्कुररूपं महत्तत्त्वं तस्य चाखिल-
वस्तुव्यञ्जकत्वेन लिङ्गमात्रत्वम्। तद्धि स्वर्गभोगादिपुंसः कार्यवद्रागं उपाधिभूतं
सर्गादौ जगद्भासयद्वोदेति सुप्तोत्थितचित्तवत्। ज्ञानातिरिक्तव्यापारस्त पश्चा-

7. B. reads श्रावण for श्रवण.
19–20. A. om. सद्विशेषा°. रूपतया.
20. B. reads तद्भावेन for तदाभावेन.
25. A. C. read अपवर्ग for आपत्ति.
27. B. reads विशेषेभ्यः for अविशेषेभ्यः.

देवाहंकारोत्पत्ताविति तस्य तत्त्वम् । यत्तु लयं गच्छतीति लिङ्गमिति तन्न । अहंकारादावतिव्याप्तेः । मात्रशब्दवैयर्थ्याच्च । यतश्च तस्मिन्नेतेनागतावस्थया स्थित्वा क्रमेण वृद्धिकाष्ठां स्थावरजङ्गमतां प्राप्नुवन्तीत्यस्य महत्त्वम् । प्रलीयमानाश्च तस्मिन्नेवातीतावस्थयानुगता भूत्वा तेनैव सह साम्यावस्थारूपे प्रधा-
५ नाख्ये मूलकारणे प्रलीयन्ते । एतावतैव महत्तत्त्वोपाधिकस्य कार्यब्रह्मणो जगत्-स्थितिलयहेतुत्वम् ।

तच्च प्रधानं स्वयमव्यक्ततया न कस्यापि व्यञ्जकम् । अतोऽलिङ्गमित्युच्यते । न च पुरुष एव तदस्तु तद्व्यतिरिक्तं तच्छशशृङ्गतुल्यमिति वाच्यम् । पारमार्थिकसत्ताराहित्यात् । पारमार्थिकसत्ता कूटस्थनित्यत्वम् । तद्राहित्यान्न पुरुष-
० रूपता तस्य । तस्य महदाद्यखिलविकाररूपैः प्रलयेष्वसत्त्वात् । अजस्रपरिणामितया प्रतिक्षणं तत्तद्धर्मरूपेणापायाच्च ।

क्षणं न संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्तमानः ।

इति श्रुतेः । पारमार्थिकासत्त्वं च सत्तासामान्याभावः । तदपि न प्रधाने । नित्यत्वादर्थक्रियाकारित्वाच्छ्रुतिस्मृतिसिद्धत्वाच्च । इयमेव च व्यावहारिकी
५ सत्ता यत्सद्यातनत्वमर्थक्रियाकारित्वं च । एतदेव सदसद्भ्यामनिर्वाच्यत्वामिति वेदान्तिसिद्धान्तः । प्रपञ्चे स्वप्नादिदृष्टान्ताश्च क्षणभङ्गुरत्वरूपापारमार्थिकासत्त्वांशमादाय । न हि स्वप्नगन्धर्वनगरादयोऽप्यत्यन्तासन्तः । तत्रापि साक्षिभास्यमानसपदार्थाभ्युपगमात्सुखादिवृत्तिवत् । स्वप्नादिसादृश्यनिषेधश्च केवलमानसत्वानिषेधकः ।

० यत्त्वर्थक्रियाकारित्वमेव सत्त्वम् । तच्च प्रकृतितद्विकारयोर्नास्ति । साम्यावस्थायां तेन कस्यापि पुरुषार्थस्याकरणात् । एवं सूक्ष्मरूपेण विद्यमानस्यापि कार्यस्य तदार्थक्रियाऽकरणादित्याहुस्तन्न । ईश्वरान्यपुरुषस्याप्येवमसत्त्वेन तद्व्यावृत्त्यसंभवात् । जीवानां विषयप्रकाशनव्यापारोपरमरूपलयस्य स्वापापरपर्यायस्य सत्तारूपस्य श्रुत्यादिसिद्धत्वात् । किं च निःसदसत्कार्यकत्वान्न प्रधानस्यापि
५ तत्त्वम् । तथा हि । प्रधानकार्यस्यापि न पारमार्थिकसत्त्वम् । परिणामित्वेन स्वधर्मैः प्रतिक्षणं विनाशात् । आद्यन्तयोर्व्यक्तावस्थयाप्यसत्त्वाच्च । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा. ६।१।४ ) इति श्रुत्या तेषां नित्यतारूपसत्य-

---

2. A. reads अतश्च for यतश्च.
2–3. B. reads अवस्थायास्तित्वादि for अवस्थया स्थित्वा.
7. B. reads यतोऽलिङ्गम् for अतोऽलिङ्गम्.
9. B. reads रहितत्वात् for राहित्यात्.
10–1. B. reads परिणामितायाम् for परिणामितया.
22. A. reads आत्म for अन्य.
24. B. reads असत्ता for सत्ता.

त्वस्य निराकरणाच्च। विकाराणामाद्यन्तयोर्नाममात्रशेषत्वेनास्थिरतया तदपेक्षया स्थिरत्वरूपं सत्यत्वं कारणस्य विवक्षितं न तु विकाराणामत्यन्ततुच्छतया। मृद्विकारस्य लोकेऽत्यन्ततुच्छत्वासिद्ध्या ब्रह्मकार्यदृष्टान्तत्वानुपपत्तेः । एवं तत्कार्यं नात्यन्तासत् । अतीतानागतादिरूपैः सदा सत्त्वात् । "तद्धेदं तर्ह्यव्याकृतमा-
५ सीत्" (बृ. १।४।७) इत्यादिश्रुतेः । न चैवं सविकारस्य प्रधानस्य सदसत्त्वप्रतिषेधे तस्य सदसत्त्वबोधकसदसद्बाधाबाधाभ्यामिति सांख्यसूत्रविरोध इति वाच्यम् । तस्य व्यक्ताव्यक्तत्वरूपव्यावहारिकसत्ताऽसत्तापरत्वात् । सांख्यसूत्रोक्तबाधाबाधौ च रूपभेदेन स्त एव । अङ्कुररूपेण सत्त्वकाल एव वृक्षरूपेणाभावप्रतीतेः। यावद्व्यवहारं सत्त्वादेते व्यावहारिके। मनोमात्रपरिणामानां शुक्तिरजत-
१० त्वाभादिपदार्थानां प्रातिभासिकी सत्तेति बोध्यम्। यत्तु परमात्मचैतन्यस्यैव सत्त्वं न तु जीवचैतन्यानामपीति नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता बोद्धा (बृ.३।७।२३) इत्यादिश्रुतिसिद्धं तत्तु लयशून्यस्वरूपामतिपारमार्थिकसत्तामभिप्रेत्येति बोध्यम् ।

प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनि ।

इति स्मृतेः । परमात्मनश्च सदा जाग्रत्स्वरूपतया लयशून्यत्वमेवेति दिक् । एवं
१५ तेषां गुणानां प्रधानरूपाणां लिङ्गमात्रं महतत्त्वं परिणामः। साम्यावस्थोपलक्षिता गुणा एव प्रधानमिति दिक् ।

तत्रालिङ्गावस्थारूपपर्वण इतरपर्वत्रयाद्गुणेभ्यश्च वैधर्म्यमुच्यते । सुखदुःखाभावरूपपुरुषार्थसमूहरूपपुरुषार्थतायाः कारणत्वाभिमताया अलिङ्गावस्थायां सृष्टेः प्रागनुत्पत्तेस्तस्यां सा न कारणमिति सा नित्या। दुःखनिवृत्तिव्यावर्तनाय
२० कारणत्वाभिमताया इति । प्रलयकालिकदुःखनिवृत्तेः कर्मक्षयादेवोपपत्त्या प्रलयाप्रयोजनत्वेन तस्या दुःखनिवृत्तेः प्रलयकारणत्वाभावात् । व्यक्तावस्थायां गुणेभ्यः शब्दाद्युपभोगरूपपुरुषार्थोत्पत्त्याऽनागतावस्थः स तस्याः कारणम् । साम्यावस्थायां तु तज्जन्यस्य शब्दाद्युपभोगसत्त्वपुरुषान्यताख्यातिमात्ररूपस्य कस्यापि पुरुषार्थस्याभावान्नास्याः पुरुषार्थः कारणमिति तत्त्वम् । सत्त्वे तु
२५ साम्यावस्थात्वमेव भज्येत। पुरुषार्थाकारणकत्वेन स्वाभाविकतया सा नित्येत्याख्यायते । स्वाभाविकत्वेऽपि धर्मादिभिः प्रतिबन्धाच्च सर्गकाले साम्यरूपः परिणाम इति बोध्यम् । नित्यत्वं चैतदस्या व्यक्तावस्थापेक्षया बहुकालस्थायित्वरूपं व्यावहारिकम् । व्यक्तावस्थाया आद्यन्तयोस्तस्याः सत्त्वात् । किं च

7-9. A. om. सांख्यसू० अभावप्रतीतेः.
12. A. reads रूपपार० for रूपामतिपार.
17. A. reads लिङ्ग for अलिङ्ग.
19. B. reads उत्पत्तेः for अनुत्पत्तेः.
22. B. reads उत्पत्ति for उत्पत्त्या.
23. B. om. स्य after तज्जन्य.

सर्वकालेपि सास्त्येव । तथा हि । पूर्वपूर्वतत्त्वानामंशत एवोत्तरोत्तरतत्त्वरूप परिणामः समुद्रस्यांशतः फेनादिरूपतावत् । न तु दध्ना दुग्धस्येव सर्वांशेन परिणामः । उत्पन्नकार्यस्य कारणेन पुनरापूरणार्थं कारणानां स्वकार्यावरकतयाऽवस्थानात् । तस्मात्सर्गकालेपि बहिरलिङ्गावस्थास्त्येव । यत्तु ब्रह्माण्डस्य ५ प्रकृत्या सप्तावरणत्वश्रवणं तत्तु स्थूलसूक्ष्मभूतयोरेकत्वाविवक्षया । वस्तुतस्त्रयोदशावरणानि । अत एव श्रीभागवतद्वितीयस्कन्धे पञ्चभूतेभ्यो बहिस्तन्मात्रावरणेपि मतिरुक्ता । इन्द्रियाणि चाकारणत्वान्नावरणानि । तेषामुत्पत्तिरपि तन्मात्रसमानदेशा । यथा तिलसमानदेशा सूक्ष्मतैलोत्पत्तिरिति दिक् । इतरधर्मत्रयं त्वनियम् । तेषामनागतावस्थपुरुषार्थसमूहकार्यत्वात् । पुरुषार्थश्च तेषां १० निमित्तकारणमेव नोपादानम् ।

गुणानामपि धर्मेभ्यो वैधर्म्यमुच्यते । यतस्ते सर्वविकारेष्वनुगता अत उत्पत्तिविनाशशून्यत्वेनानुपचरितनित्याः । अलिङ्गावस्थापि नैवंविधनित्या । न चैवं

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ( भा. शा. ३३४।३१ )

१५ इति स्मृतौ प्रकृतेरुत्पत्तिवचनमसंगतं स्यादिति वाच्यम् । तेपि गुणान्वयिनीभिर्गुणधर्मभूताभिः कार्यव्यक्तिभिरेवातीतानागतव्ययोपचयापचयावस्थावतीभिर्हेतुभिर्जन्मविनाशधर्मका इव प्रतीयन्ते न तु तेषां ते वास्तवे इत्यदोषः अत एव

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।

२० क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥

इति तत्पूर्वश्लोकः संगच्छते । यथा धनक्षयादिना देवदत्तस्य क्षीणत्वादिव्यवहारो न स्वरूपनाशेन तद्वत् । अत्यन्ताभिन्नत्ववादीनामुपचयापचयौ चेद्वेदत्तोपचयापचयहेतू तत्र कैव कथा गुणेभ्यो भिन्नाभिन्नानां व्यक्तीनामुपजननापाययोरिति बोध्यम् । एवमेव भूयश्चान्ते विश्वमायानिवृत्तिः,

२५ प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनि ।

इत्याद्यपि व्याख्येयम् । व्यापारोपरमास्यलयस्यैव पुरुषसाहचर्येण तथावधारणाच्च ।

वियोजयत्यथान्योन्यं प्रधानपुरुषावुभौ ।
प्रधानपुंसोरुभयोरेष संहार ईरितः ॥

३० इति कौर्माच्च । अत एव प्रकृतिनित्यताश्रुतिविरोधोपि न । एवं प्रकृतिपुरुषयोः श्रूयमाणोत्पत्तिरप्यन्योन्यसंयोगेनाभिव्यक्तिरेव बोध्येति दिक् ।

---

21. B. reads व्ययात् for व्ययाव्ययौ.
30. B, C, read मित्र for नित्यता.

तत्र लिङ्गमात्रं महानलिङ्गस्य प्रत्यासन्नमव्यवहितकार्यम्। यतस्तत्प्रागलिङ्गे संसृष्टमनागतावस्थया ऽविभक्तं ततो विविच्यते विभक्तं जायते। महदाद्युत्पत्तिक्रमस्य कदाप्यनतिक्रमात् । असदुत्पत्तिस्तु न । सर्वस्य सर्वत्रोत्पत्त्यापत्तेः । प्रागभावस्यासिद्धेः । किं चाभावस्योपादानकारणत्वमभिमित्तत्वमपि न क्वापि दृष्टम् । अन्यथा तस्यैवोपादानत्वापत्तौ शून्यवादापत्तिः । तथा षडविशेषा लिङ्गमात्रे संसृष्टास्ततो विविच्यन्ते । परिणामक्रमनियमात् । गोपालतापनीये 'एकमेवाद्वितीयं ब्रह्मासीत् । तस्मादव्यक्तम् । अव्यक्तमेवाक्षरम् । तस्मादक्षरान्महत् । महतो वै अहंकारः । तस्मादेवाहंकारात्पञ्च तन्मात्राणि । तेभ्यो भूतानि' इत्युक्तेः । तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते । तदुक्तमस्यैव सूत्रस्यादौ । न च ब्रह्माण्डस्थावरजङ्गमादिरूपैः पर्वणामानन्त्यात्कथं चतुर्विधत्वम् । एभ्यो विशेषेभ्यः परस्य तत्त्वान्तरपरिणामस्याभावात् । ब्रह्माण्डादेः सर्वस्य विशेषपर्वत्वेनैव ग्रहात् । तत्त्वान्तरत्वं चोक्तत्वाद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वम् । न च तत्त्वभेदात्कथमन्तःकरणस्यैकत्वं तत्र तमोच्यत इति वाच्यम् । यथा पञ्चतत्त्वात्मिका विशेषाख्या पृथिव्येकैव प्रागुत्पद्यते ततस्तस्याः खननमन्थनादिना जलतेजसी अभिव्यक्ते भवतस्तथा तत्त्वत्रयात्मक एवादौ महाञ्जायते पश्चाच्च तस्याहंकारादिर्वृत्तिभेद इत्यङ्गीकारात् ।

तत्र प्रकृतिमहान्तौ मैत्रेयोपनिषदि श्रूयेते "यथा तमो वा इदमेकमास तत्परं स्यात् तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं रसः संप्रास्रवत्सोऽंशोऽयं यश्चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायलिङ्गः प्रजापतिस्तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुः" इति । गर्भोपनिषदौ प्रकृतयः षोडशविकाराः शरीरमिति । अद्वैतश्रुतिस्तु न तासां बाधिका । व्यवहारपरमार्थभेदेन विषयभेदात् । व्यावहारिकाद्वैतश्रुतयोऽप्यविभागलक्षणाभेदपराः । नदीसमुद्रादिदृष्टान्तैस्तथाऽवगमात् । महत्तत्त्वोपाधिकहिरण्यगर्भरूपचेतनेऽहंकारोपाधिकप्रजापतिरूपे चेतने च शक्तिशक्तिमदभेदेन महदादिशब्दप्रयोगः । ज्ञानैश्वर्यादिरूपमहत्त्वस्याभिमानरूपाहंकारस्य च जडान्तःकरणधर्मत्वात् । गुणाश्चासंख्यव्यक्तिकाः । एकत्वं तु जात्या । गुणत्रयं च सुखादिधर्मकत्वात्तदात्मकमप्युच्यते । गुणत्रयस्य पुरुषाणां सर्वार्थसाधकत्वाद्राजामात्यवत्प्रधानत्वं जगदुपादानत्वात्प्रकृतित्वं जगन्मोहकत्वाच्च मायात्वम् । एतदेव वैशेषिकादिभिः स्वस्वपरिभाषया परमाण्वज्ञानादिशब्दैरुच्यते ।

---

16. B. reads अहंकारादि for अहंकारादिः.

26. B. reads महत्तत्त्वस्य for महत्त्वस्य.

मामाहुः प्रकृतिं केचिन्मायामेके परे त्वणून्।

इति वसिष्ठोक्तेः । तत्र विशेषरूपेभ्यः पञ्चभूतेभ्यः स्थूलशरीरं सूक्ष्मं च शेषेभ्यः । तच्चाहंकारस्य बुद्धौ प्रवेशात् " सप्तदशैकं लिङ्गम् " इति सांख्ये उक्तम् । स्थूलसूक्ष्मशरीरसमष्टिर्हिरण्यगर्भः । तत एवाखिलपुंसां शरीरद्वयोत्पत्तिः ।

५ तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह । क्षेत्रज्ञाः समजायन्त

इति मनुस्मृतेः । अत एव तस्य वनवृक्षवन्न समष्टित्वं किं तु पितापुत्रवत् । वनवृक्षयोरेव कार्यकारणभावाभावादिति दिक् । विशेषाणां तु धर्मलक्षणावस्थापरिणामा उत्तरपादे वक्ष्यन्ते सूत्रेण ॥ १९ ॥

अथ द्रष्टुः स्वरूपमाह—

१० **द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

दृशिमात्रो विशेषणापरामृष्टदृक्शक्तिरित्यर्थः । विशेषणानि पूर्वसूत्रोक्तप्रकाशादिगुणाः । तेष्वेव वैशेषिकाद्युक्तविशेषगुणान्तर्भावः । तैः कालत्रयेऽप्यसंबद्धः । एवं च संयोगसंख्यापरिमाणादिसत्त्वेऽप्यक्षतिः । प्रलये मोक्षादौ दर्शनाख्यफलोपधानाभावाच्छक्तिरित्युक्तम् । एवं च प्रकाशस्वरूपं द्रव्यं दृशिरिति सिद्धम् ।

१५ अग्नेरौष्ण्यादिकं च भेदाभेदापन्नम् । औष्ण्याग्रहणेऽपि चक्षुषाग्निग्रहणात् । पुरुषस्तु ज्ञानग्रहणं विना न गृह्यत इति बोध्यम् । द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः । बुद्धेः संवेदनमर्थाकृतिः । तस्याः प्रतिसंवेदनं प्रतिबिम्बः । तद्वान्बुद्धेः साक्षीति फलितम् । एवं च प्रतिबिम्बरूपारोपितक्रियया कल्पितं दर्शनकर्तृत्वं द्रष्टृत्वमस्य । तस्य ज्ञानस्वरूपत्वं च

२० ज्ञानं नैवात्मनो धर्मो न गुणो वा कथं च न ।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः ॥

इत्यादिवाक्यशतानुग्रहेण लाघवतर्कसहकारेण चात्मत्वादिरूपव्यतिरेक्यादिलिङ्गैरनुमेयम् । ज्ञानाश्रयत्वे तु धर्मधर्मिणोरुभयोः कल्पने गौरवम् । अहं जानामीति प्रत्ययस्त्वहं गौर इति भ्रमशतान्तःपातितयाऽप्रामाण्यज्ञानशङ्कास्कन्दित-

२५ त्वेन दुर्बल इति बोध्यम् । शुद्धः परिणामित्वाचेतनत्वपरार्थत्वादिधर्मवत्या बुद्धेर्न परमार्थतः सरूपः । तेन तद्राहित्यमेवास्य शुद्धत्वम् । प्रत्ययानुपश्यः प्रत्ययं बौद्धमनुपश्यति । तेन प्रत्ययसमानाकारतापन्न इवेत्यतो न तस्या अत्यन्तं विरूपः । अनेन द्रष्टरि बुद्धिवृत्तिसाक्षित्वरूपं प्रमाणमप्युक्तम् । एतेनैक्यमेव बुद्धिचैतन्ययोरित्यत्यन्तवैरूप्ये तच्छायापत्तिरपि कथमिति च परास्तम् । ज्ञाता-

३० ज्ञातविषयत्वाद्बुद्धिः परिणामिनी । यतो बुद्धेर्विषयो गवादिर्धर्मधर्मिरूपो-

---

2. B. reads सूक्ष्म for सूक्ष्मं च, C. om. च.

5. B. reads कारणैः for करणैः.

29–30. B. reads ज्ञातविषयत्वात् for ज्ञाताज्ञातविषयत्वात्.

ऽशेषः कदाचिद्वृत्तिव्याप्यत्वरूपज्ञानत्वधान्कदाचिदज्ञातश्चेति परिणामित्व,एव कदाचिच्छब्दाद्याकारत्वतदभावावुपपद्येते इति तस्याः परिणामित्वमनुमीयते। ननु बुद्धावपि विषयप्रतिबिम्बनमेव विषयाकारतास्तु तत्कादाचित्कत्वेनैव ज्ञाताज्ञात-विषयत्वमुपपन्नमिति चेन्न। स्वप्नध्यानादौ शाब्दबोधादौ च विषयासांनिध्येन तत्प्र-
५ तिबिम्बासंभवात्। शास्त्रेषु बुद्धौ प्रतिबिम्बवचनं तु तत्समानाकारपरिणाममात्रे-णेति बोध्यम्। पुरुषस्य तु सदाज्ञातबुद्धिवृत्तिरूपविषयकत्वमपरिणामित्वमनु-मापयति। यदि पुरुषः परिणामी स्यात्तदा जाड्यवशात्कदाचिनद्रूपेणापरिणामे पुरुषविषयो बुद्धिवृत्तिरज्ञातापि तिष्ठेत्। ततश्च वर्तमानाया अपि घटादिवृत्तेरज्ञाना-पत्तौ घटं जानामि न वेत्यादि संदेहः स्यात्। तथा योग्यानुपलब्ध्या घटादिज्ञानाभा-
१० वनिश्चयश्च न स्यात्। अज्ञातवृत्तिसत्तासंभवात्। एवं च ज्ञानरूपेण परिणामासिद्धौ तत्कार्येच्छाकृतिसुखदुःखादृष्टसंस्कारादीनामपि न तद्धर्मत्वम्। किं तु बुद्धिधर्मत्व-मेव। सामानाधिकरण्यप्रत्यासत्त्या कार्यकारणभावे लाघवात्। न च प्रलये बुद्धिवृत्तेस्तस्याप्यदर्शनमस्त्येव। तदा तस्या एवाभावात्। न हि पुरुषविषयो बुद्धिवृत्तिः शब्दादिवद्वन्ती पुरुषेण गृहीताऽगृहीता च भवति। एवं च प्रलये
१५ कैवल्ये च पुरुषास्यविषयाभावादेवादर्शनमुपपन्नम्।

एवं परार्थत्वापरार्थत्वरूपमपि तयोर्वैधर्म्यम्। तथा हि। बुद्धिः स्वभिन्नस्य भोगसाधनत्वरूपपरार्थत्ववती सहकारिसापेक्षव्यापारकत्वरूपसंहत्यकारित्वा-च्छय्यासनशरीरादिवत्। पुरुषश्च स्वस्य भोगसाधनत्वरूपस्वार्थत्ववानुकार्के-त्वभावात्। यन्नैवं तन्नैवम्। स एव दृष्टान्तः। बुद्धिरिन्द्रियादिसहकार्यपेक्षा।
२० शय्यादिकमपि शयनादिकार्ये भूम्यादिसापेक्षम्। पुरुषस्य सुखादिप्रकाशने व्यापार एव न। स्वरूपत्वेन नित्यत्वात्। नापि सुखादिसत्त्वे पुरुषस्तत्प्रकाश-नार्थं सहकार्यपेक्षः। यत्नु स्वार्थ इति साध्यस्य न परार्थ इत्यर्थ इति तन्न। भृत्यचेतनस्य स्वामिचेतनार्थत्वदर्शनात्।

किं च बुद्धिः सुखदुःखमोहात्मकतया त्रिगुणसर्वार्थाध्यवसायकरत्वात्तदाकारतया
२५ त्रिगुणमयी। तन्मयत्वाच्च पृथिव्यादिवदचेतना। पुरुषस्तु मुख्यद्रष्टृबुद्धिसांनिध्येन बुद्धिवृत्तिप्रतिबिम्बमात्रतो गौणो द्रष्टा न तु तदाकारपरिणामेन बुद्धिवत्। अत एव गुणानामुपद्रष्टेत्युच्यते। अतस्त्रिगुणत्वाभावाच्चेतनः। एवं वैधर्म्यत्रयात्

---

3. A. reads ज्ञान for ज्ञाताज्ञात.
5. B. om. तु.
8–9. B. reads अज्ञातो for अज्ञानापत्तौ.
10. A. reads सिद्धौ for असिद्धौ.
13. A. om. तस्य after वृत्तेः.
22. B. om. इत्यर्थः.

बुद्धेः सरूपः पुरुषः । अतः शुद्ध इति सिद्धम् । बुद्धिवैधर्म्ये च सिद्ध इतरपदार्था-
पेक्षया वैधर्म्यमर्थत एव सिद्धम् ।

नापि तस्या अत्यन्तविरूपो यतो बौद्धं बुद्धिवृत्तिरूपं प्रत्ययमनु पश्चा-
त्पश्यति । बुद्धिद्वारा विषयान्पश्यति । तथा पश्यंश्चातदात्मापि परमार्थतो
५ बुद्ध्यसरूपोपि तत्सरूप इव प्रकाशते स्फटिक इव जपासरूपः । अर्था-
कारत्वस्यैवार्थग्रहणरूपताया बुद्धिस्थले सिद्धत्वात् । प्रतिबिम्बरूपामिथ्यासारू-
प्येण न पारमार्थिकासारूप्यविरोधः । तदुक्तं पञ्चशिखाचार्यैः " अपरिणामिनी
हि भोक्तृशक्तिश्चितिर्विकारहेतुसंयोगरूपोपरागापरपर्यायप्रतिसंक्रमरहिता च
परिणामिनि स्वविषये बुद्धिरूपेर्थे प्रतिबिम्बरूपेण संक्रान्तेव तद्वृत्तिं विषयायाका-
१० रामनुपतति चेतनामिव करोति । यथा निर्मले जलेऽसंक्रान्तोपि सूर्यः संक्रान्त-
प्रतिबिम्बतया संक्रान्त इव । यथा च सूर्यो जलेनुपतज्जलं स्वमिव करोत्येवं
मात्रचैतन्योपरागाया बुद्धिवृत्तेरनुकारमात्रतया तत्प्रतिबिम्बोद्ग्राहितया भोक्तृ-
शक्तेर्ज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टेत्याख्यायत इति । एवं च परस्परप्रतिबिम्बा-
द्द्वयोरपि चेतनत्वसुखादिपरिणामवत्त्वं सारूप्यं प्रत्ययानुपश्यत्वं सिद्धम् ।

१५ अनेन सूत्रेण जीवेश्वरसाधारण्येन चिन्मात्रत्वमुक्तम् । जानामीति प्रत्ययोपि
संयोगसंबन्धेनोपपद्यते । बुद्धौ ज्ञानाख्यद्रव्यसंयोगसत्त्वात् । अहमिति प्रत्यये
चानाद्यविद्यावासनावशादवश्यं बुद्धेरपि भानमस्ति । तत्राहं जानामीति प्रत्ययो-
ऽहमंशे भ्रमो ज्ञानवत्त्वांशे प्रमा । विदुषां तु तथा प्रत्ययोऽसिद्ध एव । ईश्वरे
सर्वज्ञत्वव्यवहारस्तु लोकदृष्ट्या सत्त्वीयसर्ववृत्तिसंयोगेन चेति दिक् ॥ २० ॥

२० अथ द्रष्टरि प्रमाणमाह—

## तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

तस्य पुरुषस्यार्थौ भोगापवर्गौ । तावेवार्थः प्रयोजनं यस्य स तदर्थः । दृश्य-
स्यात्मा स्वरूपं तस्य भोगापवर्गफलकमेव न स्वार्थमित्यर्थः । एवं च गुणाः
परार्थाः संहत्यकारित्वाच्छय्यादिवदित्यनुमानेन तत्सिद्धिरित्युक्तम् । तथा हि ।
२५ दृशिस्वरूपस्य पुरुषस्य क्रियेव क्रिया दर्शनम् । तद्विषयतां प्राप्तं वस्तु दृश्यं भवति ।
दर्शनमेव च सर्ववस्तूनां प्रयोजनमिति सर्वसंमतम् । अतः पुरुषार्थमेव दृश्यस्य

---

3. A. reads वर्त्यरूपम् for वृत्तिरूपम्.
5–6. B. reads अर्थाकारत्वस्य वा for अर्थाकारत्वस्यैव.
6. B. reads रूपतया for रूपतायाः.
9. A. reads अर्थं for अर्थे.
9. B. reads संक्रान्तिवत् for संक्रान्तेव.
9. B. reads तद्वृत्ति for तद्वृत्तिम्.
14. B. reads परिणामकत्वम् for परिणामवत्त्वम्.
26. B. om. च.

गुणादेरात्मा स्वरूपं भवति तिष्ठति । न हि परप्रयोजनकं वस्तु परप्रयोजनं विना क्षणमपि तिष्ठतीति पुरुषार्थस्य तत्स्थितिहेतुत्वमिति बोध्यम् ॥ २१ ॥

ननु यदि दृश्यस्वरूपं परस्य पुरुषस्य रूपेण दर्शनेन निमित्तेन लब्धात्मकं लब्धसत्ताकं तर्हि भोगापवर्गरूपपुरुषार्थसमूहे कृते सति पुरुषेण न दृश्यत इति ५ स्वरूपत्यागादत्यन्तोच्छेदो गुणानां स्यात् । प्रयोजनकारि प्रयोजनसमाप्त्या नाश्यत इति धर्माधर्मादिषु दृष्टम् । एवं च प्रकृतिनित्यत्वसृष्ट्यादिप्रवाहानुच्छेदादिसिद्धान्तहानिः । अत आह—

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥**

कृतार्थं बुद्ध्या समापितार्थमेकं कंचिन्मुक्तपुरुषं प्रति दृश्यं गुणादिकं प्रयोजना- १० करणाद्धाह्रो राज्यवन्नष्टमपि सामान्यतो न नष्टम् । तस्मिन्कृतार्थेऽन्यस्मिन्नकृतार्थे च साधारणत्वादित्यर्थः । कुशलं मुक्तं पुरुषं प्रति नाशं प्राप्तमप्यकुशलानमुक्तान्पुरुषान्प्रति न कृतार्थमिति तेषां दृशिरूपक्रियां प्रति विषयतामापन्नं परस्य पुरुषस्य रूपेण दर्शनेन लभत एवात्मसत्त्वमिति । एवं दृग्दर्शनशक्त्योः पुरुषबुद्ध्योर्नित्यत्वाच्छास्त्रेषूक्तस्तयोरनादिः संयोगोऽप्युपपन्नः । विनाशित्वे हि गुणानामनादित्वं १५ न घटेत । ततश्च तत्कार्यबुद्धेस्ततश्च बुद्धिपुरुषसंयोगस्येति द्रष्टव्यम् । तदुक्तं पञ्चशिखाचार्यैः " धर्मिणां गुणानामनादिसंयोगाद्धर्ममात्राणां बुद्ध्यादीनामपि पुरुषेणानादिः संयोगः" इति । स च यद्यप्येकस्य महतो मुक्तपुरुषीयस्य संयोगो व्यतीतस्तथापि महदन्तरस्य पुरुषान्तरेणास्तीति नित्योऽप्युच्यते । श्रुतिरपि—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
२० अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
( तै. आ. ६।१० )

इति । श्रुतिसिद्धं प्रकृतिनित्यत्वमेकत्वं पुरुषबहुत्वं चानेन सूत्रेणोक्तम् ।

यथा घटीकुम्भकमण्डलुस्थमाकाशमेकं बहुधा हि भिन्नम् ।
तथा सुबाहुः स च काशिपोऽहमन्ये च देहेषु शरीरभेदैः ॥

२५ इत्यादिकं त्ववैधर्म्यलक्षणाभेदपरम् । सर्वात्मनामवैधर्म्यज्ञानेनैवापरिणामितयोपाध्यभिमाननिवृत्त्या मोक्षसिद्धेः । कानिचित्त्वविभागलक्षणाभेदपराणि । तेनैकस्यैव परमात्मनो मुख्यता सिद्ध्यति । जीवात्मपरमात्मनोरखण्डैक्ये बन्धमोक्षानुपपत्तिः । किं च सर्वात्मनामैक्यज्ञानेन नाभिमाननिवृत्तेः संभवः । एकस्मिन्ने-

---

10. A. B. read अकारणात् for अकरणात्.
11. B. reads अमुक्त for अमुक्तान्.
25–26. A. reads अपरिणामे तथा बुद्ध्यादि for अपरिणामितयोपाधि.
26. C. reads बुद्ध्यादि for उपाधि.

वाकाशेवच्छेदकभेदेन शब्दतदभाववदेकत्रैवात्मन्यवच्छेदकभेदेन संसारासंसारयोः संभवात् । विवेकज्ञानापेक्षणे च तत एवाभिमाननिवृत्तेरैक्यज्ञानस्य न दृष्टद्वारा मोक्षहेतुत्वं स्यात् ।,जडवर्गेष्वविभागलक्षणाभेदेनोपासनाया अवश्यकल्प्यत्वेन चेतनवर्गेष्वपि तथैवौचित्यामोति दिक् ॥ २२ ॥

५ अथ तयोः संयोगस्वरूपमाह—

## स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥

स्वशक्तिर्दृश्यम् । भोग्यतायोग्यत्वात् । स्वामिशक्तिर्द्रष्टा । भोक्तृतायोग्यत्वात्। स्वरूपस्योपलब्धौ हेतुर्यः संयोगविशेषः स एव द्रष्टृदृश्यसंयोगोत्र हेयहेतुरुक्त इत्यर्थः । विभुनित्ययोर्द्रष्टृदृश्ययोः संयोगसामान्यस्य प्रलयमोक्षादिसाधारण-
१० सार्वकालिकत्वेन हेयाहेतुत्वादिति भावः । स च संयोगविशेषो बुद्धिद्वारकः । सर्वदृश्यानां बुद्धिसत्त्वोपारूढत्वात् । "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुः" इति स्मृतेः । न च स्वभोग्यवृत्तिवासनावत्स्वरूपः स्वस्वामिभाव एव तयोः संबन्धोस्तु ।प्रवाहरूपेण च वासनानामनादित्वम् । स एव संयोगोस्त्विति वाच्यम् । तस्य संयोगस्य वक्ष्यमाणाविद्यावासनाजन्यत्वानुपपत्तेः ।
१५ प्रतिसर्गं प्रकृतिपुरुषयोः श्रूयमाणयोः संयोगविभागयोरनुपपत्तेश्च । संयोगसत्त्वेपि यथा न परिणामित्वं तथोक्तं प्राक्। तदुक्तं भाष्ये "पुरुषः स्वामी स्वेन दृश्येन तद्दर्शनार्थं संयुक्तो भवति । असंयुक्तस्य दर्शनाभावात् । तस्मात्संयोगाद्दृश्यस्वरूपस्य योपलब्धिःस भोगः । या तु द्रष्टुः स्वरूपोपलब्धिः सोपवर्गः । सूत्रे स्वरूपपदं च विवेकख्यातिपर्यन्तदर्शनसामान्यस्य संयोगजन्यत्वबोधनाय । कृतकर्त्यं प्रति
२० प्रयोजनाभावादवस्थानाभावेन दर्शनरूपकार्यावसानः संयोग इति दर्शनं द्रष्टृस्वरूपदर्शनं वियोगकारणमित्यप्यनेनैव सूत्रेणार्थादुक्तम् । एवं दर्शनमदर्शनस्य विरोधीत्यतोस्य द्रष्टुरदर्शनं संयोगहेतुरित्यप्यर्थादुक्तमेव । दर्शनादर्शनयोर्विरोधेन विरुद्धसंयोगवियोगकारणत्वौचित्यात् । नन्वदर्शनस्याज्ञानस्य संयोगकारणत्वेऽदर्शनाभावेनैव संयोगनिवृत्त्यात्मकमोक्षसिद्धौ मोक्षे दर्शनस्य हेतुत्वोक्ति-
२५ रसंगता स्यादिति चेन्न। अत्र शास्त्रे गौरवेण दर्शनस्य तत्त्वज्ञानस्य मोक्षकारणत्वाभावात् । निरोधादिव्यवधानेन मोक्षाव्यवहितपूर्ववर्तित्वस्य ज्ञानेऽभावाच्च। किंतु वक्ष्यमाणादर्शनाभावादेव यो द्रष्टृदृश्यसंयोगरूपबन्धस्याभावः स एव मोक्षः। न चैवं दर्शनं वियोगकारणमिति पूर्वोक्तं विरुध्येत। दर्शनसत्त्वे हि बन्धकारणा-

---

12. B. reads भोग्य for स्वभोग्य.
22. B. reads दर्शनम् for अदर्शनम्.
23. B. reads कारणस्य for कारणत्व.
23. B. reads दर्शनस्य for अदर्शनस्य.

दर्शननाश इत्येतावन्मात्रेण दर्शनस्य तत्त्वज्ञानस्य कैवल्यकारणत्वोक्तेः । एवं च मोक्षस्यानैमित्तिकत्वमुक्तम् ।

ननु संयोगकारणत्वेनोक्तेऽदर्शनेऽष्टौ पक्षाः । गुणानां सत्त्वादीनां कार्यारम्भणसामर्थ्यरूपोऽधिकारो ज्ञानाग्न्यदग्धा कार्यविशेषजननशक्तिः । ततोऽपि संसारहेतुसंयोगविशेषस्य जायमानत्वेन बन्धकत्वगुणयोगेनादर्शनशब्दोऽत्र गौण इति केचित् ( १ ) । अदर्शनशब्दे दर्शनशब्दः करणसाधनः । एवं च दृशिरूपाय स्वामिने दर्शितो विषयो येन तादृशस्य चित्तस्यानुत्पादः स्वस्मिन्दृश्यशब्दादिवृत्तिरूपे सूक्ष्मरूपेण विद्यमान एव यस्तद्विषयवृत्त्यभाव इति यावदित्यन्ये (२) । सत्कार्यवादाभ्युपगमेनानागतावस्थया भोगापवर्गयोर्गुणेष्ववस्थानमित्यन्ये । अत्रापि पक्षे दर्शनशब्दो गौण एव । वक्ष्यमाणसर्वपक्षेष्वप्येवमेव । द्वितीये प्रसज्यप्रतिषेधपरोऽन्येषु पर्युदासपर इति मिश्राः (३) । पञ्चपर्वाविद्या प्रलयकाले स्वाश्रयाचित्तेन सह गुणेषु निरुद्धा लीना स्वाश्रयचित्तस्योत्पत्तिबीजम् । एवं चाविद्यावासनैवादर्शनमित्यन्ये । अयं पक्ष एव सिद्धान्तो भविष्यति (४) । प्रधाननिष्ठसाम्यपरिणामहेतोः स्थितिसंस्कारस्य क्षये सति महदादिरूपविसदृशपरिणामहेतोर्गतिसंस्कारस्याभिव्यक्तिरेवादर्शनम् । तयैव प्रकृतिक्षोभद्वारा पुंप्रकृत्योः संयोगजननात् । तदुक्तं प्रधानं स्थित्यर्थमेव वर्तमानं चेदचलस्थितिमात्रेण वर्ततेति यावत् । तदा विकाराजनकत्वान्न प्रधानं स्यात् । मूलकारणत्वस्यैव प्रधानत्वात् । तथा गतिमात्रेणैव चेद्वर्तेत तदा विकाराणां महदादीनामपि नित्यत्वापत्त्याऽस्य मूलत्वानापत्तौ न प्रधानत्वं स्यात् । प्रधीयतेऽनेन कार्यजातमिति हि प्रधानम् । उभयथा स्थितिगतिभ्यामेव यदाऽस्य वर्तनं तदा प्रधानव्यवहारभाग्भवति नान्यथा । नायं विचारः प्रधान एव किं तु कल्पितेषु विकारत्वेषु कारणान्तरेष्वपि महदादिष्वेष चर्चो विचारः समानः । तद्यथा मृदः स्थितिशीलत्वे कदापि घटानुत्पादनेन कारणत्वहानिः । गत्यैव वृत्तौ मृद्घटयोस्तुल्यतया कार्यकारणव्यवस्थानुपपत्तिरिति । एतेन नास्तिकानां कुर्वद्रूपतावादो निरस्त इत्यन्ये ( ५ ) । पुरुषायात्मानं दर्शयितुं या क्षमता तद्रूपा दर्शनशक्तिरेवादर्शनम् । सा च विवेकख्यात्यनुत्पादकरूपा संयोगहेतुः । तृतीयविकल्पस्थस्य शब्दादिवृत्त्यनुत्पादस्य त्यागानतो भेदः । प्रधानस्यात्मख्यापनार्था प्रवृत्तिरिति श्रुतेरित्यन्ये (६) । सर्वबोध्यबोधे समर्थोऽपि पुरुषः प्रधानप्रवृत्तेः प्राङ् न पश्यतीत्येकं पुरुषनिष्ठमदर्शनं सर्वकार्याणामुत्पादने समर्थम् । स्वरूपयोग्यमपि

9. B. reads अवस्थायाः for अवस्थया.
10. A. om. अपि after पक्षे.
12. A. om. लीना.
15. A. reads तस्यैव for तयैव.
19. B. om. हि.
28. A. reads बोध for बोधे.

दृश्यं प्रधानं स्वप्रवृत्तेः प्राक्पुरुषेण न दृश्यत इति दृश्यस्य दर्शनविषयत्वाभाव-
रूपं, पुरुषस्य दर्शनकर्तृत्वाभावरूपं चोभयनिष्ठमुभयधर्मोऽदर्शनमेवात्रादर्शनम् ।
यद्यपि जडानां दृश्यानां स्वरूपभूतमेवादर्शनं तथापि पुरुषस्य प्रत्ययं बोधमपेक्ष्य
तद्विषयतया दृश्यधर्मोऽपि भवति । एवं पुरुषस्य निर्धर्मत्वात्सदा प्रकाशरूपत्वा-
५ ज्ञानात्मभूतमधर्मभूतमप्यदर्शनं दृश्यप्रत्ययमपेक्ष्य दृश्यगोचरप्रत्ययाभावेन पुरुष-
धर्मत्वेनैव लौकिकबुद्ध्या भासत इत्यन्ये (७)। दर्शनं वासनारूपं ज्ञानमेवादर्शनम्।
तस्यापि दृश्यसंयोगहेतुत्वात्। न तु भोगापवर्गरूपमनागतावस्थं दर्शनमित्यन्ये (८)।

एते सर्वेऽपि पक्षाः पुरुषसामान्यस्य गुणसामान्यस्य च पुरुषार्थहेतुसंयोगसामान्यं
प्रति कारणतायां ज्ञेयाः ॥ २३ ॥

१० यस्तु प्रत्येकं तच्चेतनस्य स्वस्वबुद्धिसंयोगो हेयहेतुः प्रकृतसूत्र उक्तस्तस्य
कारणं चतुर्थपक्षोक्तमदर्शनमेव । तदाह—

## तस्य हेतुरविद्या ॥ २४ ॥

तस्य द्रष्टृदृश्यसंयोगस्य बुद्धिपुरुषसंयोगद्वारा हेतुर्विपर्ययज्ञानवासनारूपाऽ-
विद्येत्यर्थः । अयं भावः । अविद्याक्षयोत्तरमपि जीवन्मुक्तस्य भोगार्थं विषय-
१५ रूपेण गुणैः संयोगदर्शनात्प्राविद्यासामान्यं पुरुषगुणसंयोगहेतुः । किं तूक्तो गुणा-
धिकारादिरेव । स्वस्वबुद्धिसंयोगस्तु जन्मापरनामा नाविद्यां विनेति तत्तत्पुरुष-
तत्तद्बुद्धिसंयोगे तद्द्वारा द्रष्टृदृश्यसंयोगेऽविद्या हेतुर्ज्ञानोच्छेद्या च । न गुणाधि-
कारादिः।तस्य ज्ञानानुच्छेद्यत्वात्।एकस्य पुंसो मुक्तावपि पुरुषान्तरार्थं गुणाधिकारा-
दितादवस्थ्यात् । यदेव पुरुषेण शक्योच्छेदं तदेव हेयनिदानमत्र प्रतिपाद्यम् ।
२० अन्यथा कालकर्मादीनामपि तद्रूपतयात्र प्रतिपाद्यतापत्तेः । अविद्याप्यनात्मन्या-
त्मबुद्धिमात्रम् । तस्यैव बुद्धिसंयोगहेतुत्वात् । वक्ष्यमाणविवेकख्यातिनाश्यत्वाच्च ।
तस्याश्च बुद्धिसंयोगजन्यतयोक्तं तद्वासनेति। सर्गान्तरीयाविद्यायाः स्वचित्तेन सह
निरुद्धायाः प्रधाने या वासना स्थिता तया वासितं प्रधानं तत्पुरुषसंयोगिनीं
तादृशीमेव बुद्धिं सृजतीति न दोषोऽनादित्वात् । न च तस्या बुद्धिपुरुषसंयो-
२५ गहेतुत्वे न मानम् । विपर्ययज्ञानवासनाबलात्पुरुषख्यातिरूपां कार्यनिष्ठां स्व-
कर्तव्यचरमावधिं न प्राप्नोति बुद्धिः । अतः साधिकारतया पुनरावर्तते पुरुषेण संयु-

---

4. B. reads तत्तद्विषयतया for तद्विषयतया.
5. A. reads अदृश्यगोचर for दृश्यगोचर.
6. B. reads सामान्यगुणसामान्ये for सामान्यस्य गुणसामान्यस्य.
11. B. C. om. तदाह.
16. A. reads अधिकार्यादिः for अधिकारादिः.
20. B. om. 'अत्र after तद्रूपतया.
24. B. reads तस्य for तस्याः.

ज्यते, पुरुषान्यताख्यातिपर्यन्ता सती सा बुद्धिः परवैराग्योत्पादात्कार्यसमाप्तिं प्राप्य चरिताधिकारा निष्पादितकार्या निवृत्ताविद्या सती संयोगाख्यबन्धकारणाभावान्न पुनः पुरुषेण संयुज्यत इत्यन्वयव्यतिरेकाभ्यां तस्यास्तद्धेतुत्वसिद्धेः।

अत्र कश्चिन्नास्तिको ज्ञानोत्तरं तत्रापरवैराग्येऽसंप्रज्ञातयोगान्मुक्तिमुपहसति षण्डकोपाख्यानेन । यथा कश्चिन्नपुंसको मुग्धया भार्ययाभिहितः "आर्यपुत्रापत्यवती मे भगिनी कुतो नाहम् ।" स तामाह "मृतस्त्वहमपत्यमुत्पादयिष्यामि" इति । तथा विद्यमानं ज्ञानं चित्तनिवृत्तिरूपं मोक्षं न करोति परवैराग्येण निरुद्धं करिष्यतीति का प्रत्याशेति । तत्राचार्यदेशीय आह । चित्तनिवृत्तिरेव मोक्षः । अदर्शनरूपबन्धकारणस्य ज्ञानान्निवृत्तावदर्शनरूपकारणाभावाद्बुद्धिनिवृत्तेः । नास्माभिर्ज्ञानस्य साक्षान्मोक्षहेतुतोच्यते । किं त्वविद्याख्यादर्शननिवृत्तितत्कार्यनिरोधयोगद्वाराण्णं च विनष्टस्यापि ज्ञानस्य बुद्धिपुरुषवियोगरूपमोक्षे व्यापारद्वारा कारणत्वमिति । तत्र न त्वदुक्तोपहासावसरः। अत्यन्तोपेक्षणीयेऽर्थे संभ्रमेणोत्तरदातृत्वमात्रेणास्याचार्यदेशीयत्वम् । उत्तरं तु साध्वेव । आचार्यस्तु

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥ ( वा. पु. ५९।३० )

इति वायुपराणोक्तः ॥२४ ॥

अथ हानस्वरूपमाह—

## तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥

तस्या अदर्शनरूपाया अविद्याया अभावाद्विनाशाद्बुद्धिपुरुषसंयोगाभावपूर्वको यो द्रष्टृदृश्यसंयोगाभावः संयोगरूपबन्धनस्यात्यन्तिक उपरमस्तद्धानम् । प्रलयकालीनवियोगव्यावृत्तय आत्यन्तिक इति ।एतद्दृशेः पुरुषस्य कैवल्यमभिधीभावः पुनर्बुद्धिगुणैरसंयोगः प्रतिबिम्बरूपेणासंबन्ध इत्यर्थः । एवं च दुःखकारणनिवृत्तौ दुःखनिवृत्तिरूपे हाने पुरुषः स्वरूपप्रतिष्ठ इति तदा द्रष्टुः स्वरूपेऽवस्थानम् (यो. सू. १।३ ) इत्यनेनोक्तमिति दुःखभोगनिवृत्तिरूपहानं स्वतः पुरुषार्थ इति भावः । सूत्रे संयोगाभावो हानमित्यनेन कार्यकारणयोरभेदोपचाराद्दुःखहानमपि गृहीतम् ॥ २५ ॥

अथ हानोपायमाह—

## विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः । साक्षात्कारनिष्ठारूपत्वलाभाय तद्विशेषणमविप्लवेति । सा त्वनिवृत्तमिथ्याज्ञाना प्लवते । मिथ्याज्ञानसंस्कारवशान्मिथ्याज्ञानेनान्तरान्तराभिभूयते।यदा तु साक्षात्कारदशायां सूक्ष्मं मिथ्याज्ञानमनाग-

4. A. reads संप्रज्ञात for असंप्रज्ञात.

तापस्थं दग्धबीजतुल्यतया वन्ध्यप्रसवसामर्थ्यं जायते तदा विधूतक्लेशाख्यधूले-र्बुद्धिसत्त्वस्य परवशीकारसंज्ञारूपे परे वैशारद्ये परमाणुपरममहत्त्वान्ताचित्तप्रती-घातरूपे वर्तमानस्य यो विवेकप्रत्ययप्रवाहो निर्मलो मिथ्याज्ञानाकलुषितो भवति सा विवेकख्यातिरविप्लवेत्युच्यते । सा परसाक्षात्काररूपिणी हानस्योपायो यत-
५ स्तदनन्तरं सूक्ष्मरूपस्य मिथ्याज्ञानस्य दग्धबीजताप्राप्तिस्ततश्च पुनरप्रसव इति । एष विवेकख्यातिरूपश्चित्तनिवृत्तिरूपमोक्षस्य मार्गः। अतो हानोपायः। ज्ञानेन मोक्षे जनयितव्येऽसंप्रज्ञातयोगोपि द्वारमिति न तस्य वैयर्थ्याशङ्का ॥ २६ ॥

विवेकख्यातेरविप्लवाख्यानिष्ठाया लक्षणमाह—

## तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

१० तस्य प्रत्युदितस्य विवेकख्यातिरूपहानोपायस्य प्रान्तभूमिकारूपिणी प्रज्ञा परामर्शः सप्तधेत्यर्थः । विपर्ययाख्याविद्यातत्कार्यपापादिरूपाशुद्ध्यात्मकावरणरू-पमलापगमाच्चित्तस्य विवेकख्यात्यन्यप्रत्ययानुत्पादे सति परवैराग्यजान्निरोध-योगादुत्थानदशायां सप्तप्रकारा प्रज्ञा निष्पन्नज्ञानस्य लिङ्गं भवति । तद्यथा मु-मुक्षुहेयं वस्तु परिज्ञातं साक्षात्कृतं नास्यावशिष्टं पुनर्ज्ञेयमस्तीत्याद्या । हेयहेत-
१५ वोऽविद्याकामकर्मादयो विवेकसाक्षात्कारेण मया क्षीणाः कृता न पुनरेतेषां क्षेतव्यमस्तीति द्वितीया । अविद्याविक्षेपादुत्पन्नेन निरोधसमाधिना व्युत्थानका-ले दुःखहानरूपो मोक्षो मया साक्षात्कृत ईदृशो मे मोक्षो भवितेति परिचितोऽ-संप्रज्ञातयोगदृष्टान्तेन कैवल्यमपि दृष्टप्रायं न पुनरस्य परं निश्चेतव्यमस्तीति तृतीया । विवेकख्यातिरूपो हानोपायो मया भावितो निष्पादितफलः कृत इति नातः
२० परं भावनीयमस्तीति चतुर्थी ।एषा चतुर्विधापि प्रज्ञास्यतत्त्वरूपाभिनिर्वृत्तेर्पुंसा कार्याद्विमुक्तिर्जीवन्मुक्तिः।एषा पुरुषयत्ननिष्पाद्यत्वात्कार्यभूता मुक्तिरित्यप्युच्यते।
अथ परममुक्तिरूपा चित्ताद्विमुक्तिस्तु त्रिधा । बुद्धिः सप्तमाभोगापवर्गत्वरूपचरि-ताधिकारत्ववतीत्याद्येयं परवैराग्यरूपा चित्तनाशस्याद्या भूमिका । बुद्धेर्गुणाः संस्कारसुखदुःखादयो गिरिशिखरकूटाच्च्युता ग्रावाण इवावस्थातुमक्षमाः
२५ स्वकारणे साम्यावस्थत्रिगुणप्रधाने लयाभिमुखास्तेन चित्तेन सहास्तं गच्छन्ति । एषा लिङ्गशरीरस्य विनश्यदवस्था द्वितीयभूमिका । न चैषां संस्कारसुखादीनां पुनरुत्पादो भविता । पुरुषार्थसमाप्त्या प्रयोजनाभावादिति तृतीया । अस्यामव-स्थायां पुरुषो बुद्ध्यादिगुणसंबन्धाविशेषशून्यः स्वरूपमात्रज्योतिर्निर्विषयाचि-

---

9. C. reads भूमि for भूमिः.
10. B. reads भूमिस्वरूपिणी for भूमिकारूपिणी.
16. A. reads आदिक्षयात्, C. reads विजयात् for विक्षेपात्.
23. B. reads बुद्धि for बुद्धेः.

ज्ज्योतिःस्वरूपोऽमल औपाधिकतमोमालिन्यरहितः केवली केवलाकेवलेषु मुक्तेष्वविभागी भवति । इयं चात्यन्तिकलयनिष्पन्निरूपा विदेहकैवल्यस्य चरमभूमिका । इमां त्रिविधां चित्तभूमिं भाविनीमेव जीवन्मुक्तिदशायां विशुद्धचित्तो योगी साक्षात्करोति । एतां सप्तविधां प्रज्ञां निरभिमानतया पश्यन्पुरुषः कुशलः
५ कल्याणोऽकल्याणबुद्धिपत्न्यभिमानत्यागादुच्यते । बाधितस्यैवाकुशलस्यावस्थानान्नौणं कुशलत्वमत्रेति जीवन्मुक्तलक्षणं सूत्रेणोक्तम् । प्रतिप्रसवे चित्तस्यात्यन्तप्रलयेऽपि कुशल इत्येव । दुःखविस्मयादिभिः सत्त्वादिभिश्चाकुशलगुणैरत्यन्तावियोगादत्र मुख्यं कुशलत्वम् । यत्तु काचिज्ज्ञानिनोऽपि गुणातीतत्वमुच्यते तत्तु गुणाभिमानशून्यतामात्रेणेश्वरस्य निर्गुणत्ववत् । तत्सिद्धमविप्लवा विवेकख्याति-
१० र्हानोपाय इति ॥ २७ ॥

अथ विवेकख्यातेरारुरुक्षुं मन्दाधिकारिणं प्रति साधनमाह—

## योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥ २८ ॥

योगाङ्गान्यष्टौ वक्ष्यमाणानि । तेषामनुष्ठानात्पञ्चपर्वणो विपर्ययस्य तत्कार्यपापा-
१५ देश्चाशुद्धिरूपस्य क्षयो नाशस्तनुतारूपः । तस्मिन्सति सम्यग्ज्ञानस्याभिव्यक्तिदीप्तिः । यथा यथा साधनान्यनुष्ठीयन्ते तथा तथाशुद्धिस्तनुत्वमापद्यते । यथा यथा च क्षीयते तथा तथा तत्क्षयक्रमानुसारिणी ज्ञानस्यापि दीप्तिर्विवर्धते । सा खल्वेषा विवृद्धिः प्रकर्षमनुभवत्या विवेकख्यातेः । सत्त्वादिरूपगुणजीवेश्वररूपपुरुषयोः स्वरूपविज्ञानपर्यन्तमित्यर्थः । दीप्तिश्चात्राश्रुतामतविशेषग्रहणम् । श्रवणमननाभ्यां
२० च सामान्यत एव ज्ञानं भवति । एवं च जिज्ञासामात्रद्वारा यमनियमान्तर्गतसर्वकर्मणां ज्ञानहेतुत्वं जिज्ञासानन्तरं च कर्म त्याज्यमनुत्पन्नज्ञानेनापीति चिन्त्यम् । अत एव

कर्मणा सहिताज्ज्ञानात्सम्यग्योगोऽभिजायते ।
ज्ञानं च कर्मसहितं जायते दोषवर्जितम् ॥

२५ इति कौर्मे ज्ञानसाहित्येन कर्मानुष्ठानमुक्तम् । यद्यपि विषयान्तरभंगागत्यत-

---

1. B. reads मन for अमलः.
1. B. om. केवली.
2. B. reads फल for लय.
3. A. B. read भूमि for भूमिम्.
7. B. reads एनाः for एत.
7. B. om. विस्मय.

तिबन्धनिवृत्तिरूपतयाऽसंप्रज्ञातोपि ज्ञानकारणं तथाप्यशुद्धिक्षयद्वारा योगाङ्गानु-
ष्ठानस्यैव ज्ञानदीप्तिहेतुत्वं न योगस्येत्यङ्गपदोपादानम् ।

तत्र योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणम् । असदुत्पादानभ्युपगमात्सत एव
वस्तुनोतिशयहेतुः कारणमुच्यते । एवं च सत्येवाशुद्धिर्वियोगास्यनेनातिशयेन यो-
५ गाङ्गानां कार्या यथा परशुश्छेद्यस्य । विवेकख्यातेस्तु प्राप्तिकारणं वर्तमानावस्था-
विशिष्टायास्तस्याः कारणमुत्पत्तिप्रतिबन्धकनिवर्तनद्वारा । यथ धर्मः सुखस्य । न
तु वैशेषिकादीनामिवोत्पत्तिकारणम् । अस्माकं निमित्तकारणानां प्रतिबन्धनि-
वृत्तिकारणत्वसिद्धान्तात् । विवेकख्यात्यादेरुत्पत्तौ च चित्तमेव कारणम् ।
कारणानि च पूर्वाचार्यगणितानि नव

१० उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥

इति । तत्र (१) उत्पत्तिकारणमुपादानकारणं यथा ज्ञानस्य मनः । तद्धि ज्ञानस्यो-
त्पत्तिरूपातिशये कारणम् । (२) स्थितिकारणं यथा मनसः पुरुषार्थता । भोगा-
पवर्गरूपपुरुषार्थसमूहो मनसः स्थितिरूपातिशये कारणम् । पुरुषार्थसमाप्तौ मन-
१५ सः स्वयमेव विलयात् । शरीरस्याहारश्च स्थितिकारणम् । (३) अभिव्यक्ति-
कारणं यथा रूपस्यालोकः । बुद्धिवृत्तिरूपाभिव्यक्तिरूपातिशयेन विशिष्टस्य रूपस्या-
लोकः कारणम् । तथा पौरुषेयबोधरूपाभिव्यक्तिरूपातिशयविशिष्टरूपस्य बुद्धिवृत्ति-
रूपं रूपज्ञानं कारणम् । (४) विकारकारणं यथा मनसो विषयान्तरं स्वगोचररागा-
दिविकाररूपातिशयेन विशिष्टस्य कारणम् । यथा वाग्निः पाक्यस्य । (५) प्रत्ययस्य
२० प्रामाण्यनिश्चयस्य कारणं यथा शब्दादिना यत्पर्वतेभिज्ञानं जातं तस्य प्रत्यय-
जनकं धूमज्ञानम् । आनुमानिकवह्निज्ञानं त्वभिव्यक्त्यैव संगृहीतम् ।
(६) प्राप्तिकारणं च योगाङ्गानुष्ठानं विवेकख्यातेः । तथा हि । कारणानां कार्यप्राप्ति-
स्वभावः । तस्याः कुतश्चित्प्रतिबन्धोऽप्राप्तिः । यथा निम्नोपसर्पणस्वभावा-
नामपां प्रतिबन्धः सेतुना । तथा बुद्धिसत्त्वं सुखप्रकाशशीलतया स्वभावतस्तज्ज-
२५ नकं तमसाऽधर्मेण च प्रतिबद्धं योगाङ्गानुष्ठानेन तदपगमे च तत्प्राप्नोति ।
निमित्तकारणमत्राप्तिकारणे प्रवेशनीयम् । प्रतिबन्धकनिवृत्तिद्वारा कारणं

1. C. reads संप्रज्ञात: for असंप्रज्ञात:.

1. B. reads विज्ञान for अपि ज्ञान.

5. B. reads परशु for परशुः.

25. A. reads वियोगकारणं तदेवाशुद्धेर्वियोगसाधितम् । मशकार्यो धूम इत्यादिव्यवहारश्चात्र मानम् after प्राप्नोति.

चाभिकारणम् । (७) वियोगकारणं तदेवाशुद्धेर्यथोपपादितम् ।(८) अन्यत्वकारणं
यथा स्वर्णपिण्डस्य स्वर्णकारः कटककुण्डलादिरूपभेदकारणम्। यद्यप्यसौ वि-
कारकारणमपि स्वर्णपिण्डस्य कुण्डलादिरूपविकारकरणात्तथापि कटकविनाश-
पूर्वकं कुण्डलादीनामुत्पादनादन्यत्वकारणमप्युच्यते । स्वर्णस्य सर्वविकारा नु-
५ गतत्वेन तदन्यत्वाकरणात्स्वर्णपिण्डस्येत्युक्तम् । कुण्डलं कटकं करोतीत्यादिप्र-
त्ययश्चात्र मानम् । तथैकजातीयस्य स्त्रीप्रत्ययस्य कन्याकारपरिणतबुद्धिवृत्तेर्मूढत्वा-
दिधर्मैरन्यत्वे भिन्नत्वेऽविद्यादिचतुष्टयं कारणम् । तथा हि । कर्तव्याकर्तव्यशून्य-
तारूपमोहजनकत्वेऽविद्या कारणम्।दुःखजनकत्वे द्वेषः।सुखजनकत्वे रागः।रागद्वेष-
मोहशून्यतारूपे माध्यस्थ्ये तत्त्वज्ञानं कारणम् । ( ९ ) धृतिकारणं यथाश्रयावि-
१० भया शरीरमिन्द्रियाणामिन्द्रियाणि च शरीरस्य योगक्षेमनिर्वाहकत्वेन धारकाणि।
एवं पृथिव्यादीनि महाभूतान्याधारतया शरीराणां मनुष्यवरुणसूर्यगन्धर्वशशि-
लोकस्थानां धारकाणि । एवं महाभूतान्यन्योन्यं सर्वेषां सर्वाणि धारकाणि ।
तद्यथा-आकाशं वायोर्धारकं वारया च छिद्राकाशस्य धारिका । छिद्रस्य तत्र
तन्त्रत्वात् । एवं वायुस्तेजसो धारकस्तेजश्चावरणमण्डान्तर्वर्तिवायुना धारक-
१५ मित्यादिक्रमेणोन्नेयम् । तैर्यग्योनमानुषदैवतानि च शरीराणि परस्परोपकारक-
त्वात्परस्परधारकाणि । स्थितिहेतुर्हि पुरुषार्थाहारादिभिर्मनःशरीराद्यविभक्तः संस्ता-
नि स्थापयति । धृतिहेतुश्च शरीरादिरिन्द्रियादीन्यनुप्रविश्यैव तानि धारयतीति
तयोर्विशेष इति । एवं नवैव कारणानि । यथायोगमेतद्रूपत्वे कारणत्वेनविद्याकर्म-
जीवेश्वरादीनां सर्वकारणत्वप्रतिपादिकाः श्रुत्यादयो व्याख्येयाः । आधुनिकास्तू-
२० त्पाद्यविकार्याप्यसंस्कार्यरूपेण चतुर्विधं कार्यमाहुः । तेषां नवानामत्रैवान्तर्भावः।
योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभते । अशुद्धेर्वियोगकारणत्वं विवेकख्यातेः
प्राप्तिकारणत्वमिति ॥ २८ ॥

तत्र योगाङ्गान्याह—

## यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो-
२५ ## ऽष्टावङ्गानि ॥ २९ ॥

आद्यपादोक्तान्यन्तरङ्गाण्युत्तमाधिकारिकाण्यभ्यासवैराग्यश्रद्धाप्राणायामादी-
नि, एतत्पादाद्युक्तानि च मध्यमाधिकारिकाणि तपःस्वाध्यायेश्वरप्रणिधानानि
मध्यमसाधनानि चात्यन्तबहिरङ्गैरनुक्तैः सह पिण्डीकृत्य योगज्ञानोभयसाधन-
तया मन्दाधिकारिणं प्रत्यत्रोच्यन्त इत्यपौनरुक्त्यम् । तत्र वैराग्यस्य नियमा-
३० न्तर्गतसंतोषे प्रवेशः । श्रद्धादीनां च तपआदिषु । परिकर्मणां च धारणादिष्विति।

11. B. reads गन्धर्व for गन्धर्वादि.
17. B. om. च.

श्रवणमननयोश्च प्रमाणविधयैव ज्ञाने साक्षाद्धेतुत्वमित्याशयेनाशुद्धिक्षयादि-
द्वारकेषु ज्ञानसाधनेषु न ते गणिते इति बोध्यम् ॥ २९ ॥

## अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥

५ आश्रमविहितनित्यकर्माविरोधेन सर्वथा सर्वदा सर्वभूतानामनभिद्रोहो ऽहिंसा।
शौचादिषु क्षुद्रजन्तुहिंसाया अपरिहार्यत्वांत्तृतीयान्तम्। तत्पापक्षालनस्य च
योगिनां प्राणायामादिकं नित्यत्वेन शास्त्र उक्तम्। उत्तरे च यमनियमा अहिंसा-
प्रयोजनकत्वात्तदविरोधेनैवानुष्ठेयाः। अत एव शास्त्रेषु यमनियमादयः सत्या-
दिभिरहिंसा सिद्ध्यतीति प्रतिपादनाय प्रतिपाद्यन्ते। अहिंसानिर्मलीकरणाय
१० च योगिभिस्तेनुष्ठीयन्ते। तदुक्तं स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि
समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्तमानस्तामेवाव-
दातरूपामहिंसां करोतीति। मोक्षधर्मेपि

> यथा नागपदेन्यानि पदानि पदगामिनाम्।
> एवं सर्वमहिंसायां धर्मार्थमपि धीयते ॥

१५ इति। सत्यं यथा दृष्टं श्रुतमनुमितं तथा वाक् तथातात्पर्ययुक्तं मनश्च। दर्शनादीनां
प्रमात्वमपि विवक्षितम्। अज्ञाननिमित्तकपापान्तरवद्भ्रान्तिनिमित्तकासत्यस्यापि
पापत्वात्। यदा च दृष्टार्थविपरीतार्थबोधने मनसस्तात्पर्यं तदा यथार्थापि वाग-
सत्यैव। यथाश्वत्थामा हत इति युधिष्ठिरवाक्यं। तत्र गजविषये वाक्यस्य
सत्यत्वेपि मनसो न सत्यत्वम्। दृष्टविपरीतद्रोणपुत्रहननबोधने तात्पर्यात्। अतो
२० मनश्चेति। यदि परत्र पुरुषे स्वबोधसंक्रान्तये स्वबोधसदृशबोधजननाय या
वागुक्ता सा यदि न विपरीतार्थबोधनेच्छया प्रयुक्तत्वरूपवञ्चितत्ववती नापि भ्र-
मेण प्रयुक्ता नाप्यप्रसिद्धपदादिभिर्बोधजननाक्षमा स्याल्लोकहिताय च स्यात्तदा
सत्या। स्वविनोदार्थगीतेः परस्य बोधाजननेपि नासत्यत्वम्। अतः परत्रे-
त्यादि चतुर्थ्यन्तम्। सर्वभूतोपकारार्थं ब्रह्मणा निर्मितैषा वाङ्न भूतो-
२५ पघाताय भवति। यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्या
स्यात्। पापजनकत्वात्। अतो लोकहितायेत्युक्तम्। यथा दस्युभिः सार्थगमनं
पृष्टस्य सार्थगमनाभिधानम्। तेन हि पुण्यवत्प्रतीयमानेन पुण्यसदृशेन कष्टं तमो
नरकमेव प्राप्नुयात्। तस्मात्परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात्। असत्यान्निवर्तेत।
निवृत्तावपि भूतोपघातप्रसङ्गे तदपि ब्रूयादिति तत्त्वम्। अस्तेयं स्तेयान्निवृत्तिः।

---

16. B. reads प्रमाणत्वम् for प्रमात्वम्.

स्तेयं चाशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम् । प्रतिग्रहव्यावृत्तयेऽशास्त्रपूर्वकमिति । स्वीकरणं च ममसाधारणं ममेति बुद्धिमात्रम् । तन्निवृत्तिस्तत्रास्पृहारूपास्तेयम् । ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थसंयमः । उपस्थविषये सर्वेन्द्रियोपरम इति यावत् । मैथुनस्य स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसाय-
५ क्रियानिर्वृत्तिरूपाष्टाङ्गत्वात् । प्रेक्षणं रागपूर्वकं दर्शनम् । अपरिग्रहो विषयाणामर्जनरक्षणक्षयसङ्गहिंसारूपदोषदर्शनादस्वीकरणम् । दम्भाशक्त्यादिनिमित्तकास्वीकारवारणाय पञ्चम्यन्तम् । हिंसा चात्र दातॄणां प्रतिग्रहीत्रन्तराणां च द्रष्टव्या ॥ ३० ॥

यमानां विशेषमाह—

## जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥

तत्राहिंसा जात्यवच्छिन्ना मत्स्यबन्धकस्य मत्स्येष्वेव नान्यत्र हिंसा । जात्या मत्स्यत्वादिना परंपरयावच्छिन्ना मत्स्याद्यतिरिक्तस्याहिंसा । एवमुत्तरत्रापि परंपरयैवावच्छिन्नत्वं बोध्यम् । सैव देशावच्छिन्ना न तीर्थे हनिष्यामीति । सैव
५ कालावच्छिन्ना न चतुर्दश्यां न पुण्येऽहनि हनिष्यामीति । एवं त्रिभिर्जात्याद्यवच्छेदैः परंपरया शून्यस्य पुरुषस्य देवब्राह्मणार्थे हनिष्यामि नान्यथेत्येवं संकेतावच्छिन्ना समयावच्छिन्ना । समयः संकेतः । यथा वा क्षत्रियाणां युद्ध एव हिंसा नान्यत्रेति । एवं सत्यादीनामपि जात्याद्यवच्छिन्नत्वमूह्यम् । एवमेभिर्जात्यादिभिरनवच्छिन्ना अहिंसादयः सर्वथैव परिपालनीयाः । एवं पालिताश्च ते
१० सर्वभूमिषु जात्याद्युक्तसर्वविषयेषु सर्वथा विदिता अविदितव्यभिचाराः सार्वभौमाः सन्तो महाव्रतसंज्ञकाः । संज्ञाफलं च प्रकृष्टयोगिनामनुष्ठानम् ।

नन्वेवं वैधहिंसानामपि परित्यागे प्रत्यवायः । उत्पन्नात्मजिज्ञासस्यान्तर्यागरूपनित्यकर्मानुष्ठानेनैवाप्रत्यवायात् ।

> बाह्यमाभ्यन्तरं चेति द्विविधं कर्म वैदिकम् ।
>
> १५ तयोरन्यतमं कुर्यान्नित्यं कर्म यथाविधि ॥

इति वसिष्ठोक्तेः ।

> श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप । ( भ. गी. ४।३३ )

इति गीतोक्तेश्च । भाष्यकृतामे वैधहिंसाया अपि पापहेतुत्वस्य वक्ष्यमाणत्वाच्चेति दिक् ॥ ३१ ॥

२० नियमानाह—

## शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥३२॥

शौचं स्थूलशरीरस्य मृज्जलादिजनितं मेध्यगोमूत्रयवाग्वादिभक्षणोपवासादिरूपं तज्जन्यत्वाद्बाह्यम् । चित्तस्य सत्त्वस्वभावस्य रागद्वेषादिरूपमलानां मैत्र्यादिना प्रक्षालनमाभ्यन्तरम्।संतोषोऽत्यावश्यकप्राणयात्रानिर्वाहकसंनिहितसाधनादधिकस्यालिप्सा । तपो निर्द्वंद्वं द्वंद्वसहिष्णुता । द्वंद्वं च बुभुक्षापिपासे । यद्यपि शीतोष्णादिवत्त्वानयोः परस्परं विरोधस्तथापि पारिभाषिकद्वंद्वता बोध्या । तथा शीतोष्णे स्थानासने । स्थानमूर्ध्वावस्थानम् । आसनमुपवेशनम् । काष्ठमौनाकारमौने च । काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम् । आकारमौनं त्ववचनमात्रम् । एतानि च शास्त्रोक्तमतेनैव सोढव्यानि न तु वृथा । व्रतानि चैषां यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायो मोक्षशास्त्राध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं परमगुरौ तस्मिन्सर्वकर्मार्पणम् । तच्च व्याख्यातम् ।

तेष्वीश्वरप्रणिधानं मुख्यो नियमः । निर्विघ्नपरमात्मयोगहेतुत्वात् । तदुक्तम्—

शय्यासनस्थोऽथ पथि व्रजन्वा स्वस्थः परिक्षीणवितर्कजालः ।
संसारबीजक्षयमीक्षमाणः स्यान्नित्ययुक्तोऽमृतभोगभागी ॥

इति । ईश्वरप्रणिधानजतदनुग्रहेण सदैव योगयुक्तः स्यादिति वाक्यार्थः । स्वस्थः परमात्मनिष्ठः । परमात्मार्पितकर्मणो मुख्यतस्तद्योगस्यैव फलत्वौचित्यात् । वक्ष्यमाणं वितर्कजालं वक्ष्यमाणप्रतिपक्षभावनां विनापि परिक्षीणं यस्य सः । संसारबीजानां संस्कारादीनां क्षयमनुदिनमुपलभमानः अमृतेत्यादेर्जीवन्मुक्तिसुखानुभवितेत्यर्थः । एवंभूतो नित्ययुक्तः स्यादित्यर्थः । न केवलमस्येश्वरेऽर्पितकर्मण ऐश्वरयोग एव भवति । किं तु तद्द्वारा पूर्णत्वादिना जीवतत्त्वसाक्षात्कारोऽपि । तदुक्तं प्राक् "ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" ( यो. सू. १।२९ ) इति । यज्ञदानदेवद्विजपूजाऽभयदानादेरत्र तपस्यन्तर्भावः । अत्र देवब्राह्मणार्थहिंसाया अपि त्याज्यत्वोक्त्या प्रकृष्टयोगिनां बाह्यकर्माभावसिद्धिः । नियमानां प्रतिनियतदेशकालाद्यवच्छिन्नतया सार्वभौमत्वासंभवान्महाव्रतत्वं नोक्तम् । यमानां त्वभावरूपतया तदनवच्छिन्नत्वसंभवः । यमनियमयोर्यमानां निवृत्तिरूपत्वेन शक्यसंपादनत्वेन त एव परमहंसानामावश्यकाः । नियमास्तु प्रवृत्तिरूपतया योगान्तरायत्वान्नावश्यकाः ।

यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् ।

इति स्मृतेश्च ॥ ३२ ॥

एषामन्तरायैर्विघ्नप्राप्तावुपायमाह—

## वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥

विपरीतास्तर्का विचारा येषु ते वितर्का हिंसादयः । यथा हनिष्याम्यहमपकारिणमनृतं वक्ष्यामि द्रव्यमप्यस्य स्वीकरिष्यामि दारेषु चास्य व्यवायी भविष्यामि परिग्रहेषु चास्य स्वामी भविष्यामीति । एवं त्यक्ष्याम्यहं शौचादिक-

31. A. om. विचाराः.

मिति नियमा[illegible]र्कः । एवमासनादिकं त्यक्ष्ये प्राणायामोऽस्त्यक्ष्य इत्यादि-
रुत्तरविषयो वित[illegible] । एवमुन्मार्गाभिमुखेन हिंसादिविषयेण वितर्कज्वरेणाति-
ज्वलितेन बाध्यमानो योगी वितर्कप्रतिपक्षान्दुःखफलकत्वादीन्विभावयेत् । तद्यथा
घोरेषु संसाराङ्गारेषु पुनःपुनरावृत्त्या पापच्यमानेन मया शरणमुपागतः सर्वभूताभ-
यप्रदानेन योगधर्मः । स खल्वहं तं त्यक्त्वा तान्दुःखदान्वितर्कान् हिंसादीन्पुन-
राददानस्तुल्यः श्ववृत्तेनेति । यथा श्वा वान्तावलेही तथा त्यक्तस्य पुनरादातेति
दुःखफलकत्वचिन्तनेऽस्य तात्पर्यम् ॥ ३३ ॥

इदानीं वितर्कास्तत्प्रतिपक्षास्तच्चिन्तनं चाह—

**वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥**

हिंसादय इति वितर्काणां स्वरूपकथनम् । तत्र हिंसा कृता, कारिता परैः
क्रियमाणा, साधुसाध्वित्येवमनुमोदितेति त्रिधा । एकैका पुनस्त्रिधा-मांसचर्मा-
दिविषयेण लोभेनापकृतमनेनेत्येवं क्रोधेन यज्ञार्थहिंसया निर्दोषो धर्मो
भविष्यतीत्येवं मोहेन चेति । यद्यपि मृदुमध्याधिमात्रत्वं हिंसादिविशेषणं सूत्रे
तथापि लोभादिमृदुत्वादिनैव तेषां तत्त्वम् । लोभक्रोधमोहाश्च त्रिविधा मृदु-
मध्याधिमात्रा इत्येवं सप्तविंशतिर्भेदा हिंसायाः सूत्रोक्ताः । पूर्वपाद्युक्तकल्पामे-
नान्यपि भवन्ति । मृदुमृदुर्मध्यमृदुस्तीव्रमृदुरिति मृदुस्त्रिधा । एवं मध्याधिमात्राव-
पीत्येवमेकाशीतिर्भेदाः । तीव्रत्वमतिप्रमाणत्वम् । सा पुनर्मत्स्यानामेवेत्येवं निय-
मेनैकत्र दिवसे स्थावरस्य वा जङ्गमस्य वान्यतरस्यैव हिंसेत्येवं विकल्पेन स्थावर-
जङ्गमयोरुभयोरपीत्येवं समुच्चयेनेत्येवं प्राणभृतां हिंसकानां हिंस्यानां चानन्त-
त्वान्नियमादीनामनन्तप्रकारत्वात्तैरसंख्येया भवति । एवं हिंसायामिवानृतादि-
ष्वपि कृतकारितादिभेदा योजनीयाः । ते च दुःखं चाज्ञानं मोहश्च तावनन्तं
फलं येषां तादृशा इति प्रतिपक्षभावनम् । दुःखादिफलकत्वं प्रतिपक्षः ।

ननु कथं हिंसादीनां तत्फलकत्वमिति चेच्छृणु । तत्राधर्मतमस्तमःसमुद्रेके
सति हिंसकः प्रथमं वध्यवीर्यं बलान्नियमयति संकोचयति यूपनियोजनादिना ।
ततः शस्त्रादिनिपातेन दुःखयति । ततो जीवितान्मोचयतीति त्रिधा हिंसा । तत-
स्त्रिप्रकारं दुःखं हन्ता प्राप्नोति । तथा हि । परस्य वीर्याक्षेपादस्य हन्तुरपि चेतना-
चेतनमुपकरणं स्त्रीपुत्रधनादिकं क्षीणवीर्यं कार्याक्षमं भवति । तथा परस्य शस्त्र-

---

15. B. *om.* यद्यपि.

26. B. reads स for यूप.

घातादिना दुःखोत्पादाद्धन्तापि नरकतिर्यक्प्रेतादिषु याम्यशासनादिना दुःखमनुभवति । तथा प्राणवियोजनात्कर्तापि प्रतिक्षणं जीवितात्यये संमोहमयीं रोगमयीं मरणावस्थामाप्तो मरणमिच्छन्नपि दुःखरूपविपाकस्य प्रातिनियतजन्मादिभोग्यत्वात्तदलभमानः कथं कथमपि जीवति । किं चेश्वरांशजीवे द्वेषेणेश्वर-
५ स्याप्यस्मिन्द्वेषो भवति पितुरिव दुष्टे पुत्रे । तदुक्तम्—

क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । ( भ. गी. १६।१९ )

इति । यदि तु पुण्यकर्मरूपस्य सुखबीजस्य चित्तभूमावावापे तेन सहावापं गता हिंसा भवेद्यथा धान्यबीजावापे तेन सह तृणबीजावापस्तदा तत्र सुखप्राभाव्यल्पायुर्भवेत् ।

१० ननु अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यस्तस्माद्यज्ञे वधोऽवध इत्यादिश्रुतिस्मृतिभिर्वैधहिंसातिरिक्तहिंसाया एव प्रतिषेधात्कथं वैधहिंसाया अनिष्टसाधनत्वमिति चेन्न । विध्यर्थप्रेरणयाऽनिष्टाननुबन्धित्वानाक्षेपात् । राजत्वादिप्रापककर्मणो गर्भवासजन्माद्यनर्थहेतुतायाः सर्वसंमतत्वात् । नापि बलवदनिष्टाननुबन्धित्वमस्य । पुरुषभेदेन बलवत्त्वस्याव्यवस्थितत्वात् । सर्वमेव दुःखं विवेकिनः ( यो.
१५ सू.२।१५ ) इत्युक्तेः । किं च तदाक्षेपेऽपि यज्ञादिनान्तरीयकहिंसायाः सामान्यतोऽनिष्टजनकत्वश्रुत्यविरोधः । अपि चावैधहिंसात्यागस्य स्वर्गादिसाधनताबोधकविधिभिर्वैधहिंसायाः स्वर्गादिसाधनताबोधकविधिभिश्च सह हिंसाया स्वल्पापनिष्टहेतुताबोधकश्रुतिस्मृतीनां नास्त्येव विरोधो येन तासां संकोचः कल्प्येत । अतो युक्तं पुण्यावापगतानां हिंसानामनिष्टहेतुत्वम् । पुण्यावापगतहिंसास्वपि
२० युधिष्ठिरादीनां प्रायश्चित्तश्रवणादिदमेव युक्तम् । वधोऽवध इत्यादिकं तु वधाभासतापरमिति दिक् । एवमनृतादिष्वपि दुःखाज्ञानफलकत्वमसंभावि मरणादिकं विहाय योज्यम् । एवं वितर्काणां नियतमेवमनिष्टं कार्यं भावयन् योगी वितर्केषु न मनो दद्यात् ॥ ३४ ॥

प्रतिपक्षभावनाहेतोर्हातुमर्हा वितर्का यदास्य योगिनो विषयसांनिध्येऽप्यप्र-
२५ सवस्वभावा भवन्ति तदा वितर्कहानिकृतमैश्वर्यं सिद्धिसूचकं यमादिनिष्पत्तिसूचकं भवति । तन्निष्पत्त्यवधारणे च तत्तद्भूमिषु यत्नं विहाय भूमिकान्तरे योगी यत्नमातिष्ठेदित्येतत्प्रतिपादनाय तत्सिद्धीराह—

## अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः ॥ ३५ ॥

प्रतिष्ठा स्थैर्यम् । उक्तवितर्कैरसंस्पर्श इति यावत् । तस्यां सत्यां तत्संनिधिस्था-
३० नां सर्वप्राणिनां सर्पनकुलादीनामन्योन्यं वैरत्यागो भवतीत्यर्थः ॥ ३५ ॥

## सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥

सर्वप्राणिनां भवतीति शेषः । क्रिया यज्ञादिजो धर्मः । तत्फलं स्वर्गादि । तयो-

14. B. reads अप्यवस्थितत्वात् for अव्यवस्थितत्वात्.

राश्रयत्वं सर्वप्राणिनां सत्यप्रतिष्ठस्य वचनाद्भवतीत्यर्थः । धार्मिको भूया इति वचनात्संबोध्यो धार्मिको भवति । स्वर्गं प्राप्नुहीति वचनात्स्वर्गं प्राप्नोति । एवं प्रकारेणास्य वागमोघा सत्या भवति । मनश्च तथा भवतीति भावः ॥ ३६ ॥

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥**

सर्वदिग्भ्यो रत्नोपस्थानं भवतीत्यर्थः ॥ ३७ ॥

**ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥**

वीर्यं शक्तिविशेषः । यस्य शक्तिविशेषस्य लाभात्प्रतीघातवर्जितान्गुणान् ज्ञानक्रियाशक्तीर्वर्धयति तथासिद्धश्च स्वयं ज्ञानी भूत्वा शिष्येषु ज्ञानाधाने समर्थश्च भवतीत्यर्थः ॥ ३८ ॥

**अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः ॥ ३९ ॥**

अपूर्वेण देहेन्द्रियादिसंघातेन ज्ञानहेतुः संबन्धो जन्म । तस्य कथंता किंप्रकारता । तयोः संबोधः साक्षात्कारः । कोऽहमासं कथमहमासमित्यतीतजन्मनः स्वरूपप्रकारयोर्जिज्ञासा । किंस्विदिदं कथं चेदमिति वर्तमानस्य तयोः सा । के वा भविष्यामः कथं वा भविष्याम इति भाविनस्तयोः सा । इत्येवं पूर्वापरान्तमध्येषु भूतभविष्यद्वर्तमानेषु स्वजन्मस्वस्य योगिनो जिज्ञासोत्पन्नमात्रैव स्वरूपेण स्वविषयेण ज्ञानेनोपावर्तते विशिष्टा भवति । नास्त्यत्र साधनापेक्षेत्यर्थः ॥ ३९ ॥

अथ नियमसिद्धीराह—

**शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥**

शौचाच्छौचस्थैर्याज्जुगुप्सा कुत्सा । अशुचित्वदोषस्याशेषतः साक्षात्कार इति यावत् । स्वाङ्गे पूर्वमल्पजुगुप्सायां मृज्जलाभ्यां मेध्याशनेन च शौचं कुर्वाणो दिने दिनेऽधिककायदोषदर्शी कायेऽप्रीतिमान्भवति । किं च कायस्वभावज्ञो मृज्जलादिभिः क्षालयन्नपि तच्छुद्धिमपश्यन्स्वमपि कायं जिहासुः परकायैरत्यन्तमेवाप्रयतैः सुतरां न संसृज्यत इत्यर्थः ॥ ४० ॥

अन्तःशौचस्य सिद्धिमाह—

**सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥**

भवन्तीति शेषः । शुचेः क्षालितमलस्य शुद्धसत्त्वस्य चित्तस्यादौ सत्त्वशुद्धिः सत्त्वोद्रेको भवति । ततः सौमनस्यं प्रीतिः स्वत एवानन्दो जायते । ततोऽविक्षेपादैकाग्र्यम् । तत इन्द्रियजयः । तत आत्मदर्शनयोग्यत्वं भवतीत्यर्थः ॥ ४१ ॥

---

15. B. om. स्व before जन्मसु.
21. A. reads स्वभावतः for स्वभावज्ञः.
22. B. reads तत् for स्वम्.

### संतोषादनुत्तमः सुखलाभः ॥ ४२ ॥

संतोषस्तृष्णाक्षयः। तत्स्थैर्यात्सत्युत्तमं सुखं यस्मात्तादृशस्य सुखस्य लाभो भवतीत्यर्थः। तृष्णारूपप्रतिबन्धापगमे चित्तस्य स्वाभाविकसत्त्वाधिक्यनिमित्तिका सुखस्वभावता स्वत एवाविर्भवति न तु तत्सुखे विषयापेक्षेति तन्निर्विषयं ५ शान्तिसुखमात्मसुखमित्युच्यते। ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य ( तै. २।८।११ ) इति श्रुतेः। ईश्वरस्य पूर्णकामत्वाच्छ्रोत्रियस्य च ज्ञानेन कामक्षयादुभयोरपि वैतृष्ण्यस्य तुल्यतया समानं सुखमिति श्रुत्याशयः। बुद्धेः सत्त्वात्मकतया सुखस्वभावतया जीवेपि नित्यं सुखमिदमेव गीयते। स्वाभाविकस्य यावद्द्रव्यभावित्वात्। तमसापिहितत्वाच्च १० न सदाभिव्यक्तिः। संतोषाभिव्यक्तसुखस्यानुत्तमत्वे स्मृतिः—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

इति। कामसुखं विषयजम्। दिव्यं संकल्पमात्रोत्थम्। तृष्णाक्षयसुखं तृष्णाक्षयाभिव्यक्तसुखम्। विदेहकैवल्ये सुखवाक्यानि दुःखनिवृत्त्या गौणानि। ईश्वरेणा-१५ विभागात्तत्सुखसाक्षितापराणि वेति दिक् ॥ ४२ ॥

### कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

उत्पद्यमानमेव तपोऽधर्मार्जितामसगुणरूपाशुद्धिरूपाणिमाद्यावरणमलं दूरीकरोति। तदावरणमलापगमाच्च कायसिद्धिरणिमाद्येन्द्रियसिद्धिर्दूराच्छ्रवणाद्येत्यर्थः ॥ ४३ ॥

२० ### स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥

संप्रयोगो दर्शनम्। द्रष्टुमिच्छाविषया ऋषयो देवाः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्ये चास्य वर्तन्त इति ॥ ४४ ॥

### समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

ईश्वरेर्पितसर्वव्यापारस्य समाधेर्योगस्य सिद्धिर्निष्पत्तिर्यया सर्वं देशान्तर-२५ देहान्तरकालान्तरस्थमपीप्सितं ध्येयं यथार्थमेव जानाति। गुरुवाक्यादितः श्रवणमननयोरविपर्ययो भवति। ततोस्य योगिनः प्रज्ञा समाधिकालेपि यथार्थमेव जानाति। न चैवमीश्वरप्रणिधानादेव योगनिष्पत्तावितराङ्गवैयर्थ्यम्। अन्येषामेतत्संपादनद्वारा योगाङ्गत्वात्। अत ईश्वरप्रणिधानस्य मुख्यतो योगसाधकत्वं बोध्यम् ॥ ४५ ॥

३० अथासनमाह—

### स्थिरसुखमासनम् ॥ ४६ ॥

---

17. A. B. read अशुद्धरूपाणि कायावरण for अशुद्धिरूपाणिमाद्यावरण.
25. A. om. देहान्तर.

स्थिरं निश्चलं सुखकरं च यत्तदासनम् । आस्यतेऽनेन प्रकारेणेत्यासनम् । तत्र पद्मासनम्—

> अङ्गुष्ठौ संनिबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।
> ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ॥ १ ॥

इति ।

> एकपादमथैकस्मिन्विन्यस्योरौ च संस्थितः ॥
> इतरस्मिंस्तथा पादं वीरासनमुदाहृतम् ॥ २ ॥

अस्यैवार्धमर्धासनमुच्यते ।

> गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
> पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलः ।
> भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ ३ ॥
> जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
> ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते ॥ ४ ॥

दण्डासनमुपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डवच्छयनम् । सोपाश्रयं योगपट्टयोगेनोपवेशनपूर्वकं आजानुप्रसारितबाहोः शयनम् । क्रौञ्चनिषदनोष्ट्रनिषदने तेषामुपविष्टानां संस्थानदर्शनात्प्रत्येतव्ये । जान्वोरुपरि हस्तौ कृत्वा कायशिरोग्रीवाणामवक्रभावेनावस्थानं समसंस्थानम् । स्थिरसुखं च सूत्रोक्तम् । यथासुखमिति तदर्थः । यावन्त्यो जीवजातयस्तेषां यादृशान्युपवेशनानि तावन्त्यासनानीति संक्षेपः ॥ ४६ ॥

आसनस्थैर्योपायमाह—

**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥**

आसनस्थैर्यं भवतीति शेषः । प्रयत्नोपरमे सति कम्परूपाङ्गमेजयाभावात्स्थिरं भवत्यासनम् । बहुव्यापारोत्तरं क्रियमाणमासनमङ्गकम्पनान्न स्थिरम् । बहुव्यापारोपरमप्रयत्नान्ते पृथिवीधारिणि स्थिरे शेषनागे समापन्नं तद्धारणया तदात्मतापन्नं चित्तमासनस्थैर्यं निष्पादयति । तत्र तदनुग्रहात्सजातीयभावनादृढवशाद्वेत्यन्येवेतत् ॥ ४७ ॥

आसनप्रतिष्ठायां सिद्धिमाह—

**ततो द्वन्द्वानभिघातः ॥ ४८ ॥**

> शीतोष्णादिभिर्द्वन्द्वैरासनजयान्नाभिभूयते ॥ ४८ ॥

क्रमप्राप्तं प्राणायाममाह—

**तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥**

---

11. A. reads महासनम् for भद्रासनम्.

सत्यासन्ने बाह्यस्य वायोराचमनमन्तः प्रवेशः श्वासः । कौष्ठ्यस्य वायोर्निःसरणं प्रश्वासः । तयोर्गतिविच्छेदः प्राणायाम इत्यर्थः । स्वाभाविकश्वासप्रश्वासयोरभाव इति यावत् । स च रेचकपूरककुम्भकेषु सर्वेष्वेवानुगतः । तत्र प्रथमभूमिकायां त्रयाणां पौर्वापर्येण सहानुष्ठानम् । अत एव त्रिभिर्मिलित्वैकः प्राणायाम इत्युक्तम्

> प्राणायामस्तु विज्ञेयो रेचपूरककुम्भकैः ।

इति । पश्चात्तु—

> रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम् ।
> प्राणायामोयमित्युक्तः सर्वैः केवलकुम्भकः ॥

इत्युक्तः केवलकुम्भकरूपोपि स इति बोध्यम् ॥ ४९ ॥

तस्यावान्तरभेदानाह—

## बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥

यत्र गतिविच्छेदरूपे प्राणायामे प्रश्वासेन रेचनेन यो गत्यभावः स बाह्यवृत्तिः प्राणायामो रेचको नाम । यत्र श्वासेन पूरकेण गत्यभावः स आभ्यन्तरवृत्तिः प्राणायामः पूरकनामा । यत्रोभयोः श्वासप्रश्वासयोरभ्यासनिरपेक्षात्सकृत्प्रयत्नादभावः स स्तम्भवृत्तिः कुम्भकनामा । शुद्धकुम्भकरूपस्य चतुर्थप्राणायामस्य व्यावृत्तये सकृत्प्रयत्नादिति । कुम्भके हि यथा तप्त उपले न्यस्तं जलं सर्वतः संकोचमापद्यते तथा बाह्याभ्यन्तरयोर्द्वयोरपि युगपद्गत्यभावेन संकोचरूपः स्तम्भो भवतीति ।

एवं त्रिविधोप्यसौ देशेन परिदृष्ट एतावता देशेन रेचकादिः कर्तव्य इत्येवं संधारितः । तद्यथा । नासाग्रात्प्रादेशवितस्तिहस्ताद्यन्यतमपरिमितो बाह्यदेशो रेचकस्य विषयः । स चेषीकातूलादिक्रियया निश्चेयः । पूरकस्य चापादतलमस्तकमाभ्यन्तरो विषयः । स च पिपीलिकास्पर्शसदृशस्पर्शेन निश्चेयः । कुम्भकस्य तु रेचकपूरकयोर्बाह्याभ्यन्तरदेशौ समुचितौ विषयः । उभयत्रैव प्राणस्य विलयात् । स च तूलस्य क्रियाया उक्तस्पर्शस्य चानुपलब्ध्या निश्चेयः । तथा कालेन परिदृष्टः क्षणानामियत्तावधारणेनावच्छिन्न एतावद्भिः क्षणै रेचकादिः कार्य इत्येवं नियमितः । निमेषावच्छिन्नकालस्य चतुर्थो भागः क्षणः । तथा संख्यापरिदृष्टो मात्राणां द्वादशादिसंख्याभिरवधारितः । यद्यपि संख्याभिरपि कालनियम एव तथापि प्रकारभेदाद्भेदः । यत्र हि शब्दसंख्ये अन्यादिना कालनियमः क्रियते स कालपरिदृष्टः । यत्र वक्ष्यमाणमात्रासंख्याभिः कालनियमः क्रियते स संख्यापरिदृष्ट इति । तत्र मात्रा निमेषोन्मेषावच्छिन्नः

---

6. A. B. read रेचक for रेच.
18. B. om. द्वि.

कालो लघ्वक्षरावच्छिन्नो वा स्वजानुमण्डलं त्रिः परामृश्य छोटिकावच्छिन्नो वा श्वासाक्षेपावच्छिन्नो वा । प्रणवोच्चारणावच्छिन्नकाल इत्यन्ये । तत्र त्रयोपि द्वादशमात्रावच्छिन्ना इत्यधमः पक्षः । षोडशमात्रावच्छिन्नः पूरकः । चतुःषष्टिमात्रावच्छिन्नः कुम्भकः । द्वात्रिंशन्मात्रावच्छिन्नो रेचक इति वसिष्ठसंहितायाम् ।

तेषु क्रमेणाकारोकारमकारमूर्तीनां ब्रह्मविष्णुरुद्राणां ध्यानमभ्युक्तं तत्रैव । तदुक्तं भाष्ये—एतावद्भिः षोडशादिभिर्मात्रारूपैर्निमेषोन्मेषणादिभिः पूरकाख्यश्वासप्रवेशरूपः प्रथम उद्घातः । प्रथमं वायोरुद्धननं गतिनिरोधः । एवं प्रथमोद्घातनिगृहीतस्य स्तम्भितस्य वायोश्चतुःषष्ट्यादिमात्रावच्छिन्नः कुम्भको द्वितीय उद्घातः । एवं तृतीयो द्वात्रिंशदादिमात्रावच्छिन्नोऽर्थाद्रेचकः । अत्र भाष्ये प्रथमादिशब्दैः पूरकादित्रये क्रमवचनात्सौत्रः पाठक्रमोऽनुष्ठाने नादर्तव्य इत्युक्तम् । अत एव पूरककुम्भकरेचक इत्येवानुष्ठानक्रमः शिष्टानां विकल्पो वा । एवं मृदुमध्यतीव्रभेदा अभ्यस्य द्रष्टव्याः । त्रिष्वपि द्वादशमात्रो मृदुः । त्रिष्वपि चतुर्विंशतिमात्रो मध्यः । त्रिष्वपि षट्त्रिंशन्मात्रस्तीव्र इति कौर्मे । षट्त्रिंशन्मात्रो मन्दस्तद्द्विगुणो मध्यस्त्रिगुणस्तीव्र इति मिश्राः । एवं संख्यावृद्ध्या तीव्रतरत्वाद्यप्युन्नेयम् ।

अत्र देशकालसंख्याभिः परिच्छेदे ऐच्छिको विकल्पो न तु समुच्चयः । समुच्चयानुष्ठाने तु फलभूमेति बोध्यम् । सोयं पूरकरेचककुम्भकरूपो देशकालाद्यवधारणैरभ्यस्तो दीर्घसूक्ष्मसंज्ञको भवति । अभ्यासेन कालवृद्ध्या दीर्घकालव्यापित्वेन दीर्घो भवति । वायुसंचारस्यातिसूक्ष्मतया सूक्ष्मश्च भवति । दीर्घसूक्ष्म इति कर्मधारयः । अभ्यस्त इति चार्थाक्षिप्तम् ॥ ५० ॥

एवं रेचकपूरककुम्भकरूपं भेदत्रयमुक्त्वा प्राणायामस्य चतुर्थभेदमाह —

## बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

बाह्याभ्यन्तरविषयौ बाह्याभ्यन्तरवृत्ती पूर्वसूत्रोक्तौ रेचकपूरकौ । तयोराक्षेपी तावतिक्रम्य स्वयमेव वर्तमानः । एवंभूतो यः प्राणायामः केवलकुम्भकरूपः स चतुर्थ इत्यर्थः । तथा हि । यो बाह्यविषयो रेचको देशकालसंख्याभिरादौ परिदृष्टः पश्चाच्च देशादिभिः सहैवाक्षिप्तोऽतिक्रमितो भवति । सूत्रे देशावर्कोपि विषयशब्दः कालसंख्ययोरप्युपलक्षणः । तथाभ्यन्तरविषयः पूरकोपि देशादिभिरादौ परिदृष्टः पश्चाद्देशादिभिः सहैवाक्षिप्तो भवति । स द्विविधोपि दीर्घसूक्ष्म-

2. A. O. read प्रश्वास after श्वास.

5. B. reads उकारमकाराकार for अकारोकारमकार.

7. A. reads उद्घातात् for उद्घात.

10. A. reads त्रय for त्रये.

27. A. reads उपलक्षणम् for उपलक्षणः.

श्चिरकालदेशादिभिरभ्यस्तस्तत्पूर्वकस्तदुभयाक्षेपपूर्वकः । उभयमाक्षिपतीति यावत् । पूर्वपूर्वभूमिकाजयात्कालक्रमेण न तु शीघ्रमुत्पद्यमान उभयोः श्वासप्रश्वासयोर्गतिविच्छेदश्चतुर्थः प्राणायामः । स्तम्भवृत्त्याख्यो मिश्रकुम्भकरूपकस्तृतीयप्राणायामस्तु विषयेण देशकालसंख्यारूपेणानालोचितोनवधारितः
५ सकृद्वारब्धोभ्यासबाहुल्यं विनैवोत्पद्यमानश्च देशकालसंख्याद्यवधारितो दीर्घसूक्ष्मश्च भवतीति सामान्यविशेषाभ्यां द्विविधः । चतुर्थस्तु रेचकपूरकयोर्देशाख्यविषयावधारणानन्तरं क्रमिकभूमिजयाद्धेतोः पूरकरेचकाक्षेपपूर्वकगत्यभाव इत्ययं चतुर्थः प्राणायामस्तृतीयाद्विशेषो विशिष्टः । किं च तृतीयो नियमेन रेचकपूरकयोरन्तराले वर्तत इति न तदतिक्रमी । वसिष्ठसंहितायाम्—

१० प्रस्वेदं जनयेद्यस्तु प्राणायामो हि सोधमः ।
मध्यमः कम्पनात्प्रोक्त उत्थाने चोत्तमो भवेत् ॥ १ ॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तरसंभवः ।
निःश्वासोच्छ्वासकौ देहे स्वाभाविकगुणावुभौ ॥ २ ॥
तथापि नश्यतस्तेन प्राणयामोत्तमेन हि ।
१५ तयोर्नाशसमर्थः स्यात्कर्तुं केवलकुम्भकम् ॥ ३ ॥
केवले कुम्भके सिद्धे रेचपूरकवर्जिते ।
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ॥ ४ ॥

इति । आकाशगमनशक्त्याविर्भावेण कामगत्वादिकमपि स्यादित्यर्थः । तथा

जपध्यानयुतो गर्भी त्वगर्भस्तद्विवर्जितः ।

२० इत्यन्यत्र । तत्रेश्वरगीतायां सव्याहृतिका सप्रणवा गायत्री सशिरस्का त्रिर्जप्येत्युक्तम् । त्रिष्वेकैकवारमित्यर्थः । प्रणवो जप्य इत्यन्यत्र ॥ ५१ ॥

अथ प्राणायामस्य व्यापारं तत्सिद्धिसूचकमाह—

## ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥

ततः प्राणायामाभ्यासादस्य योगिनो विवेकज्ञानावरकं कर्म क्षीयते । ज्ञाना-
२५ वरकत्वं चास्य पूर्वाचार्यैरुक्तं रागरूपमहामोहप्रचुरेणेन्द्रजालतुल्येन शब्दादिविषयेण प्रकाशशीलं बुद्धिसत्त्वमावृत्य कर्मैवाकार्ये संसारहेतुव्यापारे नियुङ्क्त इति । तदस्य प्रकाशावरणं कर्म संसारस्य निबन्धनं प्राणायामाभ्यासाद्दुर्बलं प्रकाशावरणाक्षमं भवति । प्रतिक्षणमपचीयते च । तदुक्तं—तपो न परं प्राणाया-

---

9. B. reads अतिक्रमः for अतिक्रमी.
15. C. reads नाशे for नाश.
16. B. reads रेचक for रेच.
18. A. C. read भावेन for भावेण.

मानतो विशुद्धिर्मलानां पापास्यकारणाभावान्मलरूपतमसां तत्कार्यविपर्ययाणां चापगमो ज्ञानदीप्तिश्चेति । यद्यपि तप एव पापनाशकं तथापि ज्ञानावरकक्षये प्राणायामः श्रेष्ठः । अत एव पूर्वपादे उत्तमाधिकारिणः प्राणायाम एव साधनमुक्तम् ॥ ५२ ॥

५ अन्यच्च भवतीत्याह—

## धारणासु च योग्यता मनसः ॥ ५३ ॥

प्राणायामाभ्यासादेव मनसो धारणासु योग्यता भवति । प्रच्छर्दनविधारणाभ्यां वा प्राणस्य (यो. सू. १।३४) इति पूर्वपादीयसूत्रेण प्राणायामस्य धारणायोग्यतारूपस्थितिहेतुत्ववचनात्तत्रापि पूरकादित्रयात्मक एव प्राणायामो ग्राह्य इति १० बोध्यम् ॥ ५३ ॥

अथ प्रत्याहारमाह—

## स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥

इन्द्रियाणां स्वस्वविषयासंप्रयोगकाले चित्तस्वरूपानुकारितेव या भवति स १५ प्रत्याहार इत्यर्थः । जितेन्द्रियस्य हि ध्यानकाले चक्षुरादीनि ध्येयवस्त्वाकारेण चित्तेन तुल्याकाराणीव भवन्ति न स्वातन्त्र्येण मनसैकीभूय विषयान्तरं संकल्पयन्ति । तथा चित्ते निरोधोन्मुखे प्रयत्नान्तरं विनैव तानि निरुद्धानि भवन्ति । अतस्तस्य तानि चित्तानुकारीणि । अजितेन्द्रियस्य तु तानि तदानीमपि रूपादिषु मनसैव धावन्ति । अतश्चित्तमेव तेषामिन्द्रियानुकारि ।

२० इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरते प्रज्ञा दृतेः पादादिवोदकम् ॥

इति स्मृतेः । अजितेन्द्रियस्यापि तानि विषयभोगकाले चित्तानुकारीणीत्यतो "विषयासंप्रयोग" इति । ध्यानकाले चाक्षुषादितुल्या वृत्तिश्चित्तस्यैव भवति न तु चक्षुरादीनाम् । तेषां तु तदतिरिक्तवृत्त्यभावमात्रम् । अत "इव" इति । केवलक्षणेन २५ तदनुकारो ज्ञेय इति चेच्छृणु । चित्तस्य वृत्तिनिरोधकाले तन्नन्त्वयमेवेन्द्रियाणि निरुद्धवृत्तिकानि भवन्ति न त्वितरे य इन्द्रियजया उत्तरसूत्रे वक्ष्यमाणास्तेषु सत्स्वपि यथा स्वनिरोधार्थं प्रत्याहाररूपमुपायान्तरमपेक्षन्ते तथा प्रत्याहारे सति स्वनिरोधाय चित्तनिरोधातिरिक्तं न प्रयत्नकृतमुपायान्तरमपेक्षन्ते । एवं चेदमेव तत्कार्यत्वात्तल्लक्षणम् । काळादिव्यावृत्तये प्रयत्नकृतामीति । तत्र दृष्टा- ३० न्तो यथा मधुकरराजमुत्पतन्तं मक्षिका अनूत्पतन्ति निविशमानमनुनिविशन्ते तथा चित्तस्य विषयाभिमुख्ये तान्यपि विषयेषूत्पतन्ति तस्य निरोधे च निरुद्धानीति । एवं च प्रत्याहार इन्द्रियधर्मः ॥ ५४ ॥

अथ प्रत्याहारस्य योगे द्वारभूतं तत्सिद्धिसूचकमाह—

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

ततः प्रत्याहारादिन्द्रियाणां परमो जयो भवतीत्यर्थः । तत्र परमजयज्ञानाया-
नेकप्रकारा जया उच्यन्ते । शब्दादिष्वव्यसनमिन्द्रियजयः । व्यसनं सक्तिर्येन
५ शास्त्रविरुद्धेऽपि विषयभोग इन्द्रियाणि प्रवर्तन्ते । व्यस्यति निरस्यत्येनं श्रेयस
इति व्युत्पत्तेः । एवं च शास्त्राविरुद्धा प्रतिपत्तिरिष्टभोगा न्याय्या इति केचित् ।
इन्द्रियशब्दादिविषययोः संप्रयोगः स्वेच्छया न तु तत्पारतन्त्र्येणेत्येष इन्द्रियजय
इत्यन्ये । रागद्वेषनिमित्तकसुखदुःखादिशून्यः शब्दादिज्ञानरूपो विषयभोग
इन्द्रियजयः । आभिमानिकसुखदुःखशून्य इति यावदिति परे । चित्तैकाग्र्या-
१० द्धेतोरिन्द्रियाणां याऽप्रतिपत्तिर्वृत्तिनिरोधस्तद्योग्यतैवेन्द्रियजय इति जैगीषव्यः ।
एतदुक्त एव परमो जयः । उक्तेषु त्रिषूत्तरोत्तरमुत्कर्षेऽपि तावन्मात्रैरिन्द्रियवृत्त्यनि-
रोधाच्च तेषु परमत्वम् । एवं चायमेव पूर्वसूत्रोक्तचित्तानुकारस्य फलं लक्षणं च ।
एतदभावेनैव सौभर्यादीनां योगभ्रंशः श्रूयते । एवं ज्ञानसाधनमुखेन बहिरङ्गाणि
यमादिप्रत्याहारान्तानि पञ्च योगाङ्गान्युक्तानीति शिवम् ॥ ५५ ॥

१५　**इति सांख्यप्रवचने पातञ्जलसूत्रवृत्तौ योगशास्त्रे साधननिर्देशो नाम द्वितीयः पादः ॥**

---

O. U. reads भोगो न्याय्यः for भोगा न्या

## तृतीयो विभूतिपादः ।

अथ धारणामाह—

### देशबन्धश्चित्तस्य धारणा ॥ १ ॥

यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाधारदेशविशेषे चित्तस्य बन्धस्तदै-
५ काग्र्यं सा धारणेत्यर्थः । तथा हि । नाभिचक्रे हृदयपुण्डरीके मूर्धस्थे ज्योतिषि
नासिकाग्र इत्येवमादिदेशेषु बाह्ये वा विषये चन्द्रसूर्याग्न्यादावीश्वरदेवतादि-
ध्यानदेशे चित्तस्य वृत्तिमात्रेण न तु ध्येयकल्पनया बन्धो धारणेति । तदुक्तम्—

प्राणाभ्यां हृदये चाथ तृतीये च तथोरसि ।
कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्धसु ॥
१० किंचित्तस्मात्परस्मिंश्च धारणा दश कीर्तिताः ।

इति । मुखे जिह्वाग्रे । परस्मिन्निति मूर्ध्न उपरि द्वादशाङ्गुलमिते देशे । लिङ्ग-
शरीरस्य सप्राणस्य तावत्पर्यन्तं प्रदीपशिखावदवस्थानात् । अवहितैस्तावत्पर्यन्तं
लिङ्गशरीरानुगतोष्मोपलम्भात् । राज्ञः सिंहासनवदेतानि नाभ्यादीनि जीवेश्वर-
योर्मुख्यस्थानानि । वृत्तिमात्रेणेत्युक्त्या ध्यानादिव्यावृत्तिः । यस्य त्वाद्यावेवेश्वरानु-
१५ ग्रहादपरिच्छिन्नतया जीवेश्वरयोगो भवति तस्य नैतद्धारणोपयोगः । तस्य हि
सैव धारणा । धारणासामान्ये द्वादशप्राणायामपरिच्छिन्नकालावच्छिन्नत्वं विशे-
षणम् । अन्यथा क्षणमात्रेणापि धारणापत्तेः ॥ १ ॥

अथ तत्साध्यं ध्यानं लक्षयति—

### तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

२० तत्र देशे ध्येयचतुर्भुजमूर्त्याद्यालम्बनस्य प्रत्ययस्यैकतानता प्रत्ययान्तरापरा-
मृष्टः सदृशः प्रवाहः स ध्यानमित्यर्थः । एतद्द्वादशधारणापरिच्छिन्नकालाव-
च्छिन्नं तावत्कालावच्छिन्नं जीवेश्वरविषयं वा पूर्ववत् ॥ २ ॥

अथ तत्साध्यं समाधिमाह—

### तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥

२५ मात्रपदं स्वरूपशून्यमिवेत्यनेन विवृतम् । ध्यानमेव यदा ध्येयाकारेणैव सा-
क्षिणि निर्भासते चित्तस्य ध्येयस्वरूपावेशेनाहमिदं चिन्तयामीत्येवंप्रत्ययाकार-

---

3. C. reads देशे for देश.
22. A. reads अवच्छिन्नजीव for अवच्छिन्नं जीव.

वृत्त्यन्तरानुदयाद्वृत्त्यंशाभानाद्वा प्रत्ययात्मकेन स्वरूपेण शून्यमिव भवति तदा समाधिरित्युच्यते। वस्तुतो ध्यानस्वरूपस्य सत्त्वादिवेति। इदं च लक्षणं पूर्वसूत्रोक्तध्यानविशेषतया देशाघटितत्वेनापरिच्छिन्नसमाध्यव्यापकम्। अतोऽर्थमात्रावभासनं चिन्तनमित्येवं समाधिसामान्यलक्षणम्। समाधिर्ध्यानद्वादशगुणित-
५ कालावच्छिन्नो द्रष्टव्यः।

अस्य समाधिरूपस्याङ्गस्याङ्गिनः संप्रज्ञातयोगादयं भेदो यदत्र चिन्तारूपतया निःशेषतो ध्येयस्वरूपं न भासते, संप्रज्ञाते तु साक्षात्कारेण समाध्यविषया अपि विषया भासन्त इति। एवं च साक्षात्कारयुक्तैकाग्र्यकाले संप्रज्ञातयोगोऽन्यदा तु समाधिमात्रमिति विभागः ॥ ३ ॥

१० ध्यानादित्रयस्य संज्ञाविशेषमाह—

## त्रयमेकत्र संयमः ॥ ४ ॥

एतद्ध्यानधारणासमाधिरूपं त्रयमेकविषयं चेत्तदा संयम इति तान्त्रिकी संज्ञा। एषामन्तरङ्गानां फलं संप्रज्ञातयोगस्तद्द्वाराऽसंप्रज्ञातयोगश्चेति बोध्यम् ॥ ४ ॥

१५ संयमानुष्ठानविशेषे फलविशेषमाह—

## तज्जयात्प्रज्ञाऽऽलोकः ॥ ५ ॥

तस्य संयमस्य जयात्स्थैर्यात्समाधिप्रज्ञाया आलोको दीप्तिर्वृद्धिः क्रमेण भवति। यथा यथा च संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदी भवति। वैशारद्यं च सूक्ष्मव्यवहितार्थानां प्रत्यक्षीकरणसामर्थ्यम् ॥५॥

२० संयमानुष्ठाने विशेषमाह—

## तस्य भूमिषु विनियोगः ॥ ६ ॥

तस्य संयमस्य जितस्थूलादिपूर्वपूर्वभूमेरनन्तरा याः सूक्ष्मसूक्ष्मतराद्युत्तरा भूमयस्तासु विनियोगः कार्यः। न च क्रमेण भूमिकारोहे मानाभावः। प्रान्तभूम्यपेक्षयाऽधरा भूमिरजिता येन तस्य योगिनोऽनन्तरां भूमिं विलङ्घ्य व्यवहितोत्तर-
२५ भूमिषु संयमलाभाभावात्। धनुर्धरादिषु स्थूलवेधानन्तरमेव सूक्ष्मवेधादिदर्शनात्सोपानारोहणादिक्रमेणैवारोहादिदर्शनादन्यथाधःपातात्। संयमालाभे च कुतः प्रज्ञाऽऽलोकस्तत्तद्भूमिषु स्यात्।

स्थित्यर्थं मनसः पूर्वं स्थूलरूपं विचिन्तयेत्।
तत्र तन्निश्चलीभूतं सूक्ष्मेऽपि स्थिरतां लभेत् ॥

---

4. A. reads इत्येवम् for इत्येव.
18–9. B. reads विशारदा for विशारदी.

इति स्मृतेः । अयं च क्रम औत्सर्गिकः । ईश्वरप्रसादादेव जितप्रकृतिपुरुषा-
दिविवेकभूमिकस्य नाधरभूमिषु "प्रत्यये परचित्तज्ञानम्" ( यो. सू. ३।१९ )
इत्याद्यागामिसूत्रबोध्येषु परचित्तज्ञानादिषु पिण्डादिस्थूलेषु वा संयमः । फला-
भावात् । अधरभूमिसंयमप्रयोजनस्योत्तरभूम्यारोहस्येश्वरानुग्रहादेव प्राप्तत्वात् । न
५ चौत्सर्गिकक्रममुल्लङ्घ्य कथमुत्तरभूमावादावेव संयमारम्भः । युञ्जानेनादौ सर्वो-
त्कृष्टभूमौ संयममारभ्य तस्यां स्वस्यायोग्यतामनुभूयैवाधराधरभूमिषु योग्यता-
मवधार्य चित्तस्य धारणीयत्वात् । न चेयमस्या अनन्तरा भूमिरिति कथं नि-
श्चेयम् । योगबलेनैव निश्चयात् । तदुक्तम्—

योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते ।
१० योऽप्रमत्तस्तु योगेन स योगे रमते चिरम् ॥

इति । अप्रमत्तः सिद्धावनलंपटः ॥ ६ ॥

आवश्यकत्वबोधनाय योगाङ्गेषु विशेषमाह—

## त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

तदेतद्धारणाध्यानसमाधिरूपं त्रयं संप्रज्ञातयोगस्यान्तरङ्गं यमादिभ्यः पञ्चभ्य
१५ इत्यर्थः । एवं ज्ञानस्याप्येतत्त्रयमन्तरङ्गम् । अन्तरङ्गत्वबीजं तु ध्येयातिरिक्तवृ-
त्तिनिरोधरूपे संप्रज्ञाते ध्येयसंयमस्य विषयान्तरासंचाररूपत्वात्साक्षात्कारण-
त्वम् । एवं ध्येयसाक्षात्कारेऽपि विषयान्तरसंचाराख्यप्रतिबन्धनिवृत्तिद्वारा सा-
क्षादेव कारणत्वम् । प्रत्याहारान्तपञ्चकस्य तु चित्तस्थैर्यद्वारा परंपरयैवोभयत्र
कारणत्वमिति । यस्य तु प्राचीनकर्मवशात्स्वत एव चित्तं संयमशीलं तस्य
२० नास्तीतराङ्गापेक्षा । यथा जडभरतशिशुपालादेः । अत एव तेषां प्रधानसमाधि-
विघ्नतया बाह्यकर्मत्यागोऽपि । यत्तु

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ ( ई. ११ )

इति श्रुत्यादौ ज्ञानकर्मणोः साहित्यमुक्तं तदज्ञानिनोरौत्सर्गिकं महानुष्ठान-
२५ मभिप्रेत्य, न तु मोक्षे तुल्यवत्समुच्चयमभिप्रेत्य । अविद्यया मृत्युं तीर्त्वेत्यनेन
ज्ञानविघ्नवनिवृत्तिरूपमृत्युतरणद्वारैव कर्मणो विद्यया मोक्षं जननीय उपयो-
गावगमात् ।

न केवलेन योगेन प्राप्यते परमं पदम् ।
ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम् ॥

---

3. A. C. read विराडादि for पिण्डादि.
11. B. reads अलम्पटः for अनलंपटः.
16. B. C. read संचार for असंचार.
25. B. reads पवेन for अनन.
26. A. reads अनिवृत्ति for निवृत्ति.

इत्यादिवाक्यैर्योगशब्दोक्तकर्मनिरपेक्षाज्ज्ञानयोगादपि मोक्षसिद्धेः । अङ्गत्वं तु
पूर्वजन्मानुष्ठितकर्मणामपि जडभरतादिषु प्रसिद्धमिति दिक् ॥ ७ ॥

## तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

तदप्यन्तरङ्गं साधनत्रयमपि निर्बीजस्यासंप्रज्ञातस्य योगस्य बहिरङ्गम् ।
५ विवेकख्यातिपरवैराग्यद्वारा परंपरया हेतुत्वेनावश्यकत्वाभावात् । पूर्वोक्तविदेह-
प्रकृतिलयानां देवविशेषाणामौत्पत्तिकज्ञानवैराग्याणां संयमाभावेपि दैनंदिन-
प्रलयादावसंप्रज्ञातस्योदयात् । योगनिद्रां यथा विष्णुः (मार्क. सप्तशती ५।६७)
इत्यादिस्मृतेः ॥ ८ ॥

अथाङ्गसमाधिकालिकचित्तपरिणामापेक्षया योगद्वयकालिकनिरोधावस्थ-
१० चित्तक्षणेषु गुणानां वृत्तस्य व्यापारस्याप्यस्थिरत्वात्त्रिगुणात्मकस्य चित्तस्य परि-
णामावश्यकत्वेन जायमानः परिणामः कीदृशस्तत्राह—

## व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षण-चित्तान्वयो निरोधपरिणामः ॥ ९ ॥

असंप्रज्ञातापेक्षया संप्रज्ञातोपि व्युत्थानम् । निरोधश्च योगद्वयसाधारणः ।
१५ अन्यथा संप्रज्ञातनिरोधस्य परिणामाकथनान्न्यूनतापत्तेः । व्युत्थानसंस्कारा
अपि चित्तधर्माः । एवं निरोधसंस्कारा अपि तद्धर्माः । तत्राद्यानामभिभवः क्रमेण
ह्रासो दाहः । निरोधसंस्काराणां च प्रादुर्भावः क्रमेण वृद्धिः । एतौ निरोधका-
लिकश्चित्तस्य परिणामः । स च निरोधक्षणाच्चित्तान्वयः । प्रत्येकं निरोधक्षणे-
ष्वेकस्मिन् स्थिरे चित्तेऽन्वयो यस्य । अनेन चित्तस्थैर्यं प्रतिक्षणमीदृशः परि-
२० णामश्च लब्धः । यद्यपि निरोधो न संप्रज्ञाते संस्कारजनकस्तथापि तत्कालीन-
प्रज्ञाजन्यसंस्कार एव तथोक्तः । ननु तन्तुनिरोधेन पटनिरोधवद्वृत्तिनिरोधेनैव
तत्कार्यसंस्काराणामपि निरोधोपपत्तौ किं व्युत्थानसंस्काराभिभवस्य पृथगु-
क्त्येति चेन्न । संस्काराणां वृत्तिरूपप्रत्ययानुपादानकत्वेन तन्निरोधेन तेषां निरो-
धाभावात् । न हि निमित्तकारणनाशेन कार्यनाशः । तस्माद्वृत्तिनिरोधेपि तत्सं-
२५ स्कारनिवृत्तौ कारणं निरोधसंस्कारप्रचयरूपं पृथगेवापेक्ष्यमिति दिक् ॥ ९ ॥

अथ निरोधसंस्कारे प्रमाणमाह—

## तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

तस्य निरोधावस्थचित्तस्य प्रशान्तवाहिता निश्चलनिरोधधारया वहनं नि-
रोधसंस्काराभ्यासपाटवादेव भवति । तत्संस्कारमान्द्ये व्युत्थानजसंस्कारेण नि-
३० रोधसंस्काराभिभवादित्यर्थः ॥ १० ॥

---

2. B. C. om. प्र before लिङ्ग.
23. B. reads निरोधने for निरोधेन.

इदानीं निरोधरूपयोगाङ्गपरिणामापेक्षया विलक्षणं योगाङ्गसमाधिकार्यं

## सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधि-परिणामः ॥ ११ ॥

सर्वार्थता विक्षिप्तता चित्तधर्मः । तस्याः प्रतिक्षणं क्षयस्तिरोभावः । एकाग्रताया एकमात्रविषयताया उदय आविर्भावः । मुख्यक्षयोदययोरत्यन्तोच्छेदनिष्पत्तिरूपयोरेकदा न भवनं किं तु क्षणक्रमेणैवेत्यतो ह्रासवृद्धिरूपतिरोभावाविर्भावावुक्तौ । चित्तस्य धर्मित्वेनानुगमात्तौ चित्तधर्मावुक्तौ । एतौ समाधिकालिकचित्तपरिणामः । धर्मद्वारा धर्मिण एव परिणामादित्यर्थः । तदिदं चित्तं स्वात्मभूतयोः स्वकार्ययोः सर्वार्थतैकाग्रतयोर्धर्मयोरपायकाल उपजनकाले चानुगतं यत्समाधीयते स चित्तस्य समाधिपरिणाम इत्याशयः ॥ ११ ॥

इदानीं समाहितचित्तस्य परिणाममाह—

## ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः ॥ १२ ॥

ततो विक्षिप्तताया सर्वात्मना क्षयोत्तरं शान्तोदितावतीतोऽनागतौ तुल्यप्रत्ययावेकाकारौ प्रत्ययौ चित्तस्यैकाग्रताकालीनः परिणाम इत्यर्थः । सजातीय एकैकः प्रत्ययो नश्यत्यन्योऽन्य उत्पद्यत इत्येवं परिणाम इत्याशयः । तदुक्तं भाष्ये " समाध्यारूढचित्तस्य पूर्वप्रत्ययः शान्त उत्तरस्तत्सदृश उदितः समाहितं चित्तमुभयोरनुगतं पुनस्तथैव धारावाहिकैकाग्रसंतानमा समाधिभ्रेशान्निति धर्मिणश्चित्तस्यैकाग्रतापरिणामः " इति । समाध्यारूढेत्यनेनोक्तसमाधीयमानाचित्तपरिणामाद्भेदो दर्शितः ॥ १२ ॥

इदानीं वैराग्याग्निप्रज्वालनाय "परिणामत्रयसंयमात्" ( यो. सू. ३।१६ ) इत्यागामिसूत्रोपोद्घातसंगत्या चित्तवदेवान्येष्वपि परिणामानतिदिशति —

## एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥

एतेन पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो ज्ञेयः । भूतेन्द्रियेष्वेव एव परिणामा न तु तत्त्वान्तरपरिणामा इत्याशयेन प्रकृत्यादिष्विति नोक्तम् । तेन प्रकृत्यादिषु तत्त्वान्तरपरिणामवर्ज्जेतेपि बोध्याः ।

---

22. B. reads ज्वलनाय for ज्वालनाय.

ननु चित्तपरिणाम एव पूर्वसूत्रेषूक्तो न तु धर्मलक्षणावस्थापरिणाम इति
चेच्छृणु । व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावावेव चित्ते धर्मिणि धर्मपरि-
णामः प्रथमसूत्रेणैवोक्तः । अवस्थितधर्मिणः पूर्वधर्मतिरोभावे धर्मान्तरप्रादुर्भा-
वस्यैव धर्मपरिणामत्वात् । यद्यपि तत्सूत्रे तत्संस्कारयोरेव तावुक्तौ तथापि
५ कारणं विना कार्याभवात्तयोरपि तावर्थत उक्तावेव । धर्मश्च द्रव्यं गुणो वे-
त्यन्यत् । एवं तत्रैव सूत्रेऽभिभवप्रादुर्भावशब्दाभ्यां धर्मस्य लक्षणपरिणामोऽप्युक्तः ।
अतीतत्ववर्तमानतयोरेवाभिभवप्रादुर्भावत्वात् । अनागतत्ववर्तमानत्वातीतत्वानि
च क्रमेण संबन्धादध्वतुल्यतयाध्वेत्युच्यन्ते । तथा धर्मधर्मिणोर्धर्माणां चान्योन्यं
व्यावर्तकतया लक्षणशब्देन च । तत्र निरोधस्त्रिलक्षणस्त्रिभिरध्वभिर्युक्तः । स
१० खलु निरोधः प्रादुर्भावकालेऽनागतलक्षणरूपं प्रथमाध्वाख्यं हित्वा धर्मत्वमन-
तिक्रान्तो वर्तमानलक्षणं प्राप्तः । सत्कार्योपपत्तये धर्मपरिणामत्वोपपत्तये च धर्म-
त्वमनतिक्रान्त इत्युक्तम् । स्वरूपेण स्थितस्य धर्मस्य रूपान्तरापाये रूपान्तरोत्पत्तौ
धर्मपरिणामव्यवहारात् । वर्तमानत्वप्राप्तौ चास्य स्वरूपेणोपलब्धिः । अत्राप्यतीता-
नागताभ्यां न वियुक्तः । असदुत्पादसद्विनाशयोः प्रतिषेधात् । एषोऽस्य द्विती-
१५ योऽध्वाख्यः । अस्मिन्नेव समये व्युत्थानस्यातीतलक्षणस्तृतीयोऽध्वा । ततः पुन-
र्व्युत्थानं जायमानं वर्तमानलक्षणाध्वानं प्रपद्यतेऽनागतलक्षणं प्रथमाध्वाख्यं
हित्वा । तच्च व्यक्त्यन्तरमेव । अतीतव्यक्तेः पुनरनुत्पादस्य वक्ष्यमाणत्वात् ।
यत्रास्य स्वरूपेणाभिव्यक्तावर्थक्रियारूपो व्यापारो भवत्यस्यामवस्थायां निरोध-
स्यातीताख्यस्तृतीयोऽध्वा । एवं पुनर्निरोधः पुनर्व्युत्थानमित्यपवर्गपर्यन्तं परि-
२० णामचक्रमावर्तते ।

एवं तेषामवस्थापरिणामः प्रशान्तवाहिता संस्कारात् ( यो. सू. ३।१० ) इति
सूत्रोक्तो दर्श्यते । तत्रावस्था घटस्य नवपुराणत्ववत्संस्कारस्य बलवत्त्वदुर्बलत्व-
रूपौ वृद्धिह्रासौ न तूत्पत्तिविनाशौ । लक्षणपरिणामाद्भेदानुपपत्तेः । लक्षणस्यैव
नवपुराणत्वादिनावस्थापरिणाम इति वक्ष्यमाणत्वाच्च । तत्र निरोधक्षणेषु नि-
२५ रोधसंस्काराणां बलवत्त्वं व्युत्थानसंस्काराणां दुर्बलत्वमित्येष धर्माणामवस्था-
परिणामः । द्रव्यस्य ह्रासवृद्धिवद्गुणानामपि तौ । रूपादीनामपि वृद्धिह्रास-
दर्शनात् । रूपभेदकल्पने गौरवात् । तदेव रूपमिदानीं प्रवृद्धमिति प्रत्यभिज्ञानुपप-
त्तेश्च । ज्ञानेच्छादीनां द्विक्षणस्थायित्वेऽपि द्वितीयक्षणे वर्तमानलक्षणावस्थापरि-
णामो भवति । क्षणत्वेनैव परिणामहेतुत्वात् । सर्ववस्तूनां प्रतिक्षणपरिणामस्य

---

2. A. om. धर्म before परिणामः.
9. A. om. च after शब्देन.
10. B. reads कालः for काले.
10. A. C. read प्रथमम् for प्रथम.
11. A. om. धर्मपरिणामत्वोपपत्तये.

वक्ष्यमाणस्यानुपपत्तेश्च । एतेनोत्तरवृत्तिविशेषगुणस्यैव ज्ञानाविनाशकत्वेनैकाग्रतावशायां ज्ञानस्य बहुक्षणावस्थायित्वाच्च तस्य नावस्थापरिणामसंभव इत्यपास्तम् ।

तत्र धर्मिणो धर्मैः परिणामो धर्माणां त्र्यध्वनां लक्षणैः परिणामो लक्षणानाम-
५ व्यवस्थाभिरिति बोध्यम् । यद्यप्यवस्थानामपि बाल्यादीनां लक्षणपरिणामोऽस्ति तथाप्युक्तक्रमे नानुपपत्तिः । अतीतानागतलक्षणयोर्वर्तमानलक्षणस्य नवपुराणत्वादिवच्छीघ्रभविष्यत्वाविलम्बभविष्यत्वादिरूपा अवस्था अनुमीयन्ते । सत्त्वादिवद्गुणत्वेन प्रतिक्षणपरिणामित्वसिद्धेः । एवं धर्मलक्षणावस्थापरिणामैः शून्यं क्षणमपि गुणवृत्तं सत्त्वादिव्यापारो नावतिष्ठते । किं तु प्रतिक्षणं परिणामं जन-
१० यत्येव । गुणानां चाञ्चल्यस्वभावत्वात् । यतः प्रतिक्षणमेव व्यापारं दृश्यतेऽतो गुणस्वभावतैव सत्त्वादीनां प्रतिक्षणप्रवृत्तौ प्रमाणमुक्तं पूर्वाचार्यैरिति दिक् । गुणत्वं च परस्य भोगापवर्गहेतुत्वम् ।

एवं भूतेन्द्रियेषु धर्मधर्मिभेदमाश्रित्य त्रिविधः परिणामो ज्ञेयः । तथा-पृथिव्यादीनां धर्मिणां घटादिर्धर्मपरिणामस्तेषां च धर्माणां वर्तमानतातीतते
१५ लक्षणपरिणामो लक्षणानां च त्रयाणामपि बाल्ययौवननवपुराणत्वादिरवस्थापरिणाम इति । एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामो धर्मस्य च वर्तमानतादिलक्षणस्तस्य च रत्नाद्यालोचने स्फुटत्वास्फुटत्वादिरवस्थापरिणाम इति ।

न च त्रयोऽपि कथम् । भूतेन्द्रियेषु तेषु धर्मिषु धर्ममात्रपरिणामादिति वाच्यम् ।
२० परमार्थतः सर्वेषां धर्मिपरिणामत्वात् । धर्माणां धर्मिस्वरूपादत्यन्तमनतिरेकात् । धर्मादिद्वारा च धर्मिविक्रियैवावान्तरभेदैः प्रपञ्च्यत इति बोध्यम् । न च प्रतिक्षणपरिणामे क्षणिकत्वप्रसङ्गः । धर्मिणि सत एव धर्मस्यातीतानागतवर्तमानेष्वध्वसु धर्मिणो धर्मान्यथात्वरूपभावान्यथात्वस्यैव जननेन द्रव्यान्यथात्वाभावात् । स्वरूपान्यथात्वे हि प्रतिक्षणं परिणामेन क्षणिकत्वापत्त्या प्रत्यभिज्ञानु-
२५ पपत्तिः । अतो नोक्तरीत्या भावान्यथात्वम् । यथा स्वर्णभाजनस्य भित्त्वान्यथाक्रियमाणस्य भाजनतादिरूपधर्मापाये कटकादिधर्माभिव्यक्तिरूपभावान्यथात्वमेव न तु सुवर्णान्यथात्वम् । प्रत्यभिज्ञाबलेन स्वर्णसामान्यस्य सर्वविकारानुगतस्य सिद्धेः । तत्सामान्यं चावयविरूपो धर्मीति । न चावयवसंयोगनाशात्पूर्वस्वर्णव्यक्तेर्नाश एव । प्रत्यभिज्ञा तु जातिविषयेति वाच्यम् । प्रतिक्षणमवयवोपचयापचया-
३० भ्यामवयवसंयोगविभागावश्यकत्वेन सर्ववस्तूनां क्षणिकतापत्तेः । जात्यैव सर्वत्र

---

21. B. C. read आन्तर for अवान्तर.
26. B. reads अपाय for अपाये.

प्रत्यभिज्ञोपपत्तौ घटादीनामपि तथा स्थैर्यानुपपत्तेश्च । तस्माद्विजातीयोऽवयवविभाग एव द्रव्यनाशहेतुरिति न दोषः ।

तत्र धर्मपरिणामस्वीकारे बौद्धः प्रत्यवतिष्ठते । धर्मी धर्मेभ्यो नातिरिक्तः । पूर्वतन्त्वस्य धर्मिणोनतिक्रमेण कूटस्थत्वापत्तेः । धर्मिणो धर्मेष्वन्वयित्वे
5 हि पूर्वापरसकलावस्थाभेदेष्वनुगततया ऽतीतायवस्थायामपि सत्त्वप्रसङ्गेन धर्मी कौटस्थ्येनैव तिष्ठेत् । चितिशक्तिवन्नित्यत्वकूटस्थत्वयोरेकार्थत्वात् । तच्च तथाप्यनिष्टम् । अतो ऽत्यन्ताभिन्न इति धर्मपरिणामाप्रसिद्धिरिति ।

तन्न । सर्वथा स्वरूपतो धर्मतश्च नित्यत्वस्यैव कौटस्थ्येन तस्य च चितिशक्तावेव सत्त्वं न तु धर्मरूपेणानित्ये धर्मिण्यत्यदोषात् । विकारुयावृत्तं प्रकृ-
10 तेर्नित्यत्वं च स्वतोतीतानागतावस्थाऽशून्यत्वम् । तदेतत्त्रैलोक्यं कार्यकारणात्मकं चतुर्विंशतितत्त्वरूपं यथायोगं धर्मरूपेण स्वतश्च वर्तमानावस्थारूपव्यक्तेरपैति । नैवेह किंचनाम आसीत् ( सुबा. ६ ) इत्यादिश्रुत्या यत्सावयवं तदनित्यं घटादिवदित्याद्यनुमानैश्च कपालशर्कराचूर्णावयवस्थायां व्यक्तो घट इत्यप्रतीतेश्चार्थक्रियाऽदर्शनाच्च नित्यत्वप्रतिषेधादतीतमपि सूक्ष्मरूपेणास्ति नात्यन्तमुच्छिद्यते ।
15 तद्धेदं तर्ह्यव्याकृतमासीत् (बृ. १।४।७) इति श्रुत्यात्यन्तोच्छेदरूपविनाशप्रतिषेधात् । विनाशित्वे सत्यनादिभावत्वानुपपत्तेः ऽसत्त्वादे शशशृङ्गादपुत्पत्तिप्रसङ्गाच्च । अत्यन्ततुच्छस्य कदाप्यर्थक्रियाकारित्वाभावाच्च । यद्यप्यतीतव्यक्तेर्न पुनरुत्पादस्तथापि तज्जातीयसनामात्रेणाविनाशित्वं बोध्यम् । न च सत्त्व उपलब्ध्यापत्तिः । विकारजातस्य स्वकारणेषु प्रकृत्यादिष्वविभागलक्षणात्संसर्गादव्य-
20 क्तारूपसौक्ष्म्येणानुपलब्धेः । सूक्ष्मतया लौकिकसाक्षात्कारप्रतिबन्धकत्वात् । एवं च सर्वेषां परिणामिनां नित्यानित्योभयरूपत्वव्यवस्थापनात्सदसद्रूपत्वं सिद्धान्तः । अत एव जडानां व्यावहारिकसत्त्वं स्मृतिषु गीयते । उक्तरूपमेव च व्यावहारिकसत्त्वम् । एकान्तनित्यत्वरूपपारमार्थिकसत्त्वमेव च प्रतिषिध्यते । इत्यमेव

25 नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ॥

इत्यादि संगच्छते । मायात्वजगत्कारणस्यापि विनाशेन पारमार्थिकात्यन्ततुच्छत्वमङ्गीकुर्वतां सनातनत्ववचनविरोधः । वस्तुतस्तु प्रधानस्यापि जातिरूपेणैवैकत्वाभ्युपगमात्प्रतिपुरुषं भेदेन मुक्तपुरुषीयस्यात्यन्तोच्छेदेपि जात्यैव
30 सनातनत्ववचनाविरोध इति दिक् ।

---

14. B. reads अनित्यत्व for नित्यत्व.
15–6. B. reads प्रतिषेधेन for प्रतिषेधात्.
21. B. reads सदसत्त्वम् for सदसद्रूपत्वम्.

अथ लक्षणपरिणाम उच्यते । एकस्य नित्यत्वं विनाऽतीतानागतलक्षण-
योगासंभवात्त्रिष्वध्वसु वर्तमानत्वरूपलक्षणवान्धर्मोऽतीतलक्षणयुक्तोऽनागतवर्त-
मानाभ्यां सूक्ष्माभ्यामवियुक्तः । एवमनागतलक्षणयुक्तो वर्तमानातीत-
लक्षणाभ्यामवियुक्तो वर्तमानलक्षणोऽतीतानागतलक्षणाभ्यामवियुक्त इति । धर्मा
५ इव लक्षणान्यपि नित्यानीति नात्यन्तासदुत्पत्तिसदत्यन्तोच्छेदयोः प्रसङ्गः । न
चैकलक्षणाभिव्यक्तिकाले लक्षणान्तरयोरनुपलम्भादभाव एवास्त्विति वाच्यम् ।
पुरुषस्यैकस्यां स्त्रियां रागकालेऽन्यासु विरक्त इति व्यवहाराभावेनैकविषयरागा-
भिव्यक्तिकालेपि विषयान्तररागस्यात्यन्तमभावाभावेन विषयान्तररागीया-
नागतलक्षणस्यानुमानेन सिद्धेः । एवं जातरागायामप्ययमस्यां रागाभाववा-
१० नित्यप्रतीतिरतीतलक्षणस्याप्यनुमानं बोध्यम् । अत्रापि जात्यैव नित्यत्वं
बोध्यम् ।

अत्र केचित्सर्वस्यानागतादेः सर्वलक्षणयोगेऽनागतादिकमपि वर्तमानं स्या-
दित्यध्वसंकरः प्राप्नोति । क्रमिकत्वं चासत्त्वात्प्रसङ्गः । अतो वर्तमानलक्षण-
मेव सर्वं वस्तु । पूर्वोत्तरकालयोस्तु तस्याभावमात्रम् । तत्प्रतियोगित्वादेव चातीता-
१५ तत्वादिव्यवहार इति ।

तन्न । धर्माणां धर्मत्वस्य प्राक्साधितत्वेन धर्मत्वे सिद्धे लक्षणवत्त्वस्या-
प्यवश्यवक्तव्यत्वात् । वर्तमानसमय एव धर्मत्वमिति न युक्तम् । यतस्तदैव
धर्मत्वे सर्वस्य चित्तस्य विरक्तव्यवहारविषयत्वापत्तेः । क्रोधकाले रागसामान्य-
स्यानाविर्भावात् । यथा यदा कदाचिद्रागसत्त्वे त्वन्मतं रक्तं चित्तमिति व्यवहार-
२० स्तथा यदा कदाचिद्रागाभावेन चित्तं विरक्तमित्यपि व्यवहारापत्तिः । एवं चातीता-
तादिकालेपि रागादेश्चित्तादिधर्मत्वाद्धर्माणां त्रिलक्षणत्वं सिद्धम् ।

यच्चाभावप्रतियोगितामात्रेणेत्यादि तदपि न । असति घटे ध्वंसप्रतियोगि-
त्वादिरूपातीतत्वादेर्वृत्त्यनुपपत्तेः । संयोगित्वादिवत्प्रतियोगित्वादेरपि संबन्धि-
द्वयसत्त्वं विनानुपपत्तेः । सदसतोः संबन्धादर्शनात् । ध्वंसप्रागभावयोगसिद्धेश्च ।
२५ घटो वर्तमान इतिवद्घटोऽतीतो भविष्यन्निति अन्यथाभ्यां घटावस्थाविशेषरूपयो-
रेव तत्त्वात् । अन्यथाऽभावाभावोऽप्यतिरिक्तः स्यात् ।

किं च त्रयाणां लक्षणानां नैकदैकस्मिन्वस्तुन्यभिव्यक्तिः । किं तु स्वाभि-
व्यञ्जकं दण्डचक्रादिवत्स्वजनतुल्यं यस्यैवंभूतस्य लक्षणस्य क्रमेणाभिव्यक्ति-
रिति नाभिव्यक्तौ साङ्कर्यम् । स्वरूपतस्तु सांकर्यमस्त्येव । अव्यक्तलक्षणयोर्व्य-
३० क्तेन लक्षणेनाविरोधात् । तदुक्तं पञ्चशिखाचार्यैः—"रूपातिशया वृत्त्यतिशयाश्च

4. B. reads अपि युक्तः for अवियुक्तः.

6. B. om. अस्तु.

27–8. A. reads स्वाभिव्यञ्जक for स्वाभिव्यञ्जकम्.

विरुध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्तन्त इति । धर्मादयनैश्वर्यान्तान्यष्टौ रूपाणि चित्तस्य । वृत्तयश्च ज्ञानाद्याः शान्तघोरमूढरूपाश्चित्तपरिणामास्तेषामतिशयोऽभिव्यक्तिरूपोत्कटतेति व्याख्यातं "गुणवृत्त्यविरोधात्"(यो.सू २।१५) इति सूत्रे । यथा रागस्यैव कचिद्विषय आविर्भाव इति न तदानीमन्यत्र सामान्याभावः किं तु केवलं सामान्येन समन्वागत इत्यस्ति तदा तत्र तस्य भावस्तथा लक्षणस्यापीति बोध्यम् । अयं च धर्माणामेव न धर्मिणाम् । तेषां व्यध्वत्वाभावात् ।

अवस्थापरिणाम उच्यते । ते वर्तमाना धर्मा अतीतानागताश्च धर्मास्तां तां बाल्ययौवनवार्धक्याद्यवस्थां प्राप्नुवन्तोऽन्योन्यमन्यत्वेन भेदेनोच्यन्तेऽयं बालो न युवत्यादिरूपेण । स च व्यवहारोऽवस्थाभेदादेव न द्रव्यभेदात् । एवं च पूर्वावस्थातोऽवस्थान्तरप्राप्तिरवस्थापरिणामः । अयं च यद्यप्यतीतानागतयोरप्युच्यते तथापि वर्तमाने स्फुटोऽन्यत्र तेनैव दृष्टान्तेनानुमेय इत्युक्तं प्राक् । तत्र निमित्तभेदादन्यत्वव्यवहारे दृष्टान्तो यथैकत्वव्यञ्जिका रेखाङ्कविशेषो बिन्दुद्वयशिरस्कः शतव्यवहारकर्ता तत एकबिन्दुलोपे दशेति बिन्दुद्वयस्यापि लोप एकत्वव्यवहारकर्ता तत्समरेखान्तरस्थाने एकादशेति । यथा चैकैव स्त्री पुत्रपितृभ्रातृभिर्जनकत्वादिनिमित्तभेदान्मातेति दुहितेति स्वसेति चोच्यते ।

अत्रापि बौद्ध आह—अवस्थापरिणामाभ्युपगमे धर्मधर्मिलक्षणावस्थानां चतुर्णामपि कौटस्थ्यापत्तिः । व्यापारेणैव निमित्तेन सर्ववस्तुष्वनागताद्यध्वनामन्योन्यं विभागाभ्युपगमात् । यदा धर्म आश्रितः पदार्थः स्वव्यापारं न करोति तदानागतो, यदा करोति तदा वर्तमानो, यदा कृत्वा निवृत्तस्तदातीत इति । तथाप्यन्तयोर्विभागस्य व्यापारनिमित्तकत्वं व्यापाराभावनिमित्तकत्वेन परंपरया । एवं च पूर्वधर्मातीततया धर्मान्तराभिव्यक्तिरिति परिणामलक्षणानित्यत्वमवस्थानामपि त्वया वाच्यम् । अवस्थानां च नित्यत्वे किमप्यनित्यं न स्यादिति धर्मधर्म्यादिरूपं सर्वं जगत्कूटस्थं प्रसज्येतेति ।

तन्न । एकान्तनित्यताया एव कूटस्थत्वाद्गुणिनो धर्मिणो नित्यत्वेऽपि गुणानां धर्माणां विमर्दस्य विनाशस्य कूटस्थपुरुषतोऽत्र वैलक्षण्यात् । अत्रोदाहरणं यथा विनाशिनां कार्याणां विनाशेनाविनाशिनां शब्दादितन्मात्राणां धर्ममात्रं संस्थानं पञ्चभूतरूपमादिमदन्ते विनाशि च । एवं सत्त्वादिगुणानां धर्ममात्रं महत्तत्त्वमादिमद्विनाशि च । एवमहंकारादयो घटादयश्च । तानि च स्वविनाशेनाविनाशिनां कारणानां धर्ममात्राणि तेषां विकारसंज्ञा परिणामसंज्ञेति । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा. ६।१।४) इति श्रुतेः । सत्यत्वं विकारापेक्षया स्थिरत्वम् । एवं च धर्मिणामेव परिणामितया न कौटस्थ्यं सुतरां तु धर्मलक्षणावस्थानामिति बोध्यम् ।

---

4. A. reads त्र for एव.

6. C. reads अध्वत्व for व्यध्वत्व.

तत्र भूतेन्द्रियेषु परिणामत्रयं यथा मृद्धर्मी पिण्डाकाराद्धर्माद्धर्मान्तरमुपसंपद्यमानो धर्मेण परिणमते घटाकार इति । घटाकारोऽनागतं लक्षणं हित्वा वर्तमानलक्षणं प्रतिपद्यत इति लक्षणेन परिणमते । घटो नवीनतामन्तरं पुराणतां प्रतिक्षणमनुभवन्नवस्थापरिणामं प्राप्नोति । धर्मादीनां सर्वेषामवस्थात्वसत्त्वेऽपि गोबलीवर्दन्यायेन भेदेन निर्देशः । एवं भूतान्तरेष्विन्द्रियेषु प्रकृत्यादिषु च ज्ञेयम् । एते त्रयोऽपि परिणामा धर्मिस्वरूप एवानुगताः । अतो धर्मधर्म्यभेदाद्धर्मिपरिणामत्रयमेकमेव सामान्यतो भवति । तस्यैवैते प्रकारविशेषा इति बोध्यम् । परिणामशब्दार्थस्त्ववस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः । निवृत्त्युत्पत्ती अतीतत्ववर्तमानते ॥ १३ ॥

अथ बौद्धनिरासाय धर्मातिरिक्तं धर्मिणमाह—

## शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥

अतीतवर्तमानानागतधर्मेष्वनुपाती वर्तमानरूपेणानुगतो धर्मीत्यर्थः । एवं च वर्तमानत्वावर्तमानत्ववैधर्म्येण धर्मिणो धर्मस्य च विवेक इति भावः । तत्र योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्मः । कृत्स्नशक्तेः संभवाय योग्यतावच्छिन्नेति । योग्यतावच्छिन्नेत्यस्याविकाहरणादियोग्यतावच्छिन्नेत्यर्थः । एतेन मृदादौ सतां घटादीनां तत उत्पत्तावप्युदकाहरणादीनि न स्युः । स्वकारणं तु तेषामभावन तत्राप्यसंभवादित्यपास्तमिति मिश्राः । एवं चाभेदाद्धर्मशक्तिवद्धर्मा अपि धर्मिणि यावद्द्रव्यभाविनः । न हि शक्तिवियोगः शक्तिमतोऽस्ति । शक्तिशक्तिमतोरभेदात् । स चानभिव्यक्तिदशायामपि सूक्ष्मेण घटस्तल्लुब्धेव घट उत्पन्नः फलप्रमाणभेदेनाव्यक्तत्वमनुमितमत्र एकस्य धर्मिणोऽनेकोऽपि दृष्टो घटकपालचूर्णकणचूर्णरूप इत्येकत्वानेकत्वाभ्यां धर्मधर्मिणोर्भेदो भाष्य उक्तः । तत्र वर्तमानो धर्मः स्वव्यापारमनुभवन्नतीतानागतेभ्यो धर्मान्तरेभ्यो भिद्यते । यदा त्वतीतानागतावस्थायां सामान्येनाभिव्यक्तत्वाभ्यविशेषणाभिन्नेन धर्मिणि लीनो भवति तदा धर्मिस्वरूपेणाविभागाद्धर्मान्तरमपि तदात्माविभाग एव । एवमेव ब्रह्मत्वेनापि बोध्यम् । प्रलये सर्ववस्तूनां परमात्मन्यविभागात् । यथाकाशेऽप्राणानामिति ।

ते च धर्मिणो धर्मास्त्रिविधाः—शान्ता उदिता अव्यपदेश्याश्च । तत्र शान्ताः ये कृत्वा व्यापारमुपरताः । उदितास्ते ये सव्यापाराः । ते चानागतस्य लक्षणस्य समनन्तराः । एवं वर्तमानस्यानन्तरा अतीताः । नन्वतीतस्यानन्तर्यं वर्तमानतायाः कुतो नेति चेन्न । अनागतावस्थायाः प्रागभावस्थानीयाया वर्तमानावस्थायां हेतुत्वेनातीतवर्तमानयोः कार्यकारणतानियामकपौर्वापर्याभावात् ।

---

7. A. om. एवम्.
19. B. C. read इत्येव for इत्येवम्.
29–30. A. reads अवस्थायाः for अवस्थायाम्.
30. A. reads भावात् for अभावात्.

एवं च सत्कार्यवादेपि पूर्वाभिव्यक्तघटादिव्यक्तेर्न पुनरभिव्यक्तिरिति सिद्धान्तः। तस्यापि पुनरभिव्यक्तौ कदाचित्स एवायं घट इति प्रत्यभिज्ञापत्तेः। किं चैवं सत्यनिर्मोक्षापत्तिः। विनष्टान्तःकरणाविद्याकर्मादीनां पुनरुद्भवेन मुक्तस्यापि संसारोदयापत्तेः। न चैवमतीतकाले तत्सत्त्वे मानाभावः। लोकानपीतान्द्रक्ष्ये
५ इत्यादिवाक्यशतसिद्धयोगिप्रत्यक्षान्यथानुपपत्तेर्मानत्वात्। विषयतत्संनिकर्षयोः प्रत्यक्षे हेतुत्वात्। न चातीतार्थस्य स्मरणमेवास्तु। पूर्वाननुभूतस्यापि योगिना दर्शनात्। यत्तु योगजधर्म एव संनिकर्ष इति तन्न। प्रत्यक्षं प्रति संनिकर्षनानात्वेनाननुगमाद्धेतुताग्रहानुपपत्तेः। असत्पदार्थेन कस्यापि संनिकर्षस्यानुपपत्तेश्च। किं च ज्ञानादेर्विषयतारूपसंबन्धस्याप्यसत्येऽनुपपत्तिः। सतोरेव
१० संबन्धदर्शनात्। तस्मात्प्रत्यक्षेषु संयोगादिरेव प्रत्यासत्तिः। योगजधर्मेण तु तत्प्रतिबन्धकाधर्मतमआदिनिवृत्तिमात्रं क्रियत इति दिक्।

नन्वव्यपदेश्यत्वं किम्। न च करिष्यमाणव्यापारत्वम्। अकरिष्यमाणव्यापारकस्यापि केवलानागतलक्षणस्य वस्तुनः स्वीकारादिति चेन्न। सर्वस्य सर्वजातीयशक्तिकत्वेन सर्वत्र परिणामिन्यवस्थितानां सर्वविकारजननशक्तीना-
१५ मेवाव्यपदेश्यत्वात्। एवं च तादृशशक्तित्वमेवाव्यपदेश्यत्वम्। न च वर्तमानातीतावस्थयोरनुभवस्मरणे प्रमाणे स्तः। शक्त्यास्त्वनागतावस्थायां किं मानम्। सर्वत्र सर्वशक्तिसत्त्वे च किं मानमिति वाच्यम्। स्थावरे रसादिभिर्मधुराम्लसुरभिमृदुकठिनत्वादिभिर्यद्वैश्वरूप्यमनन्तरूपत्वं तज्जलपृथिव्योः परिणामनिमित्तकमित्यन्वयव्यतिरेकाभ्यां प्रत्यक्षतो दृष्टम्। अतो जलभूम्योः सकलस्थावरा-
२० त्मकत्वात्तच्छक्तिमत्त्वम्। शक्तिं विनापि कार्यकरणेऽतिप्रसङ्गात्। तथा जङ्गमेषु यदनेकरूपत्वं तत्स्थावराणां परिणामनिमित्तकं दृष्टम्। मनुष्यादीनां धान्यादिस्थावरकार्याणां धान्यादिविशेषै रूपादिविशेषदर्शनात्। तथा स्थावरेषु यदनेकरूपत्वं तज्जङ्गमपरिणामनिमित्तकम्। गोमयदुग्धादिभिर्धान्यचम्पकादीनां विचित्ररूपरसादिदर्शनात्। दाडिमानां च रुधिरावसेकेन तालफलतुल्यफलता-
२५ दर्शनाच्च। एवमादिदृष्टान्तैः सर्ववस्तुषु सर्वविकारजननशक्तिसिद्धेः। यद्यप्यतीतकार्यशक्तिमत्त्वं नास्ति तथापि तज्जातीयशक्तिमत्त्वं विवक्षितम्। तदुक्तं भाष्ये जात्यनुच्छेदेन सर्वं सर्वात्मकमिति। एतेनान्यद्रव्यविकारव्यक्तीनामन्यत्राभावेपि न नियमहानिः। तज्जातीयव्यक्त्यन्तरजननशक्तिमत्त्वसंभवात्। किं चैकस्मादेव चतुर्मुखशरीरादखिलदेवदानवनरपश्वादिसमुदयदर्शनेनागस्त्यजाठ-

---

4. B. reads अपि तान् for अपीतान्.
8. A. C. read पदार्थे तस्य for पदार्थेन कस्य.
9. A. C. read असति for असत्ये.
15. B. reads व्यपदेश्यत्वम् for अव्यपदेश्यत्वम्.

राग्नेः समुद्रशोषदर्शनेन ब्रह्मविष्णुरुद्रपार्वतीशरीरादिषु विश्वरूपदर्शनेन योगिनां स्वशरीरमनसोरनन्तविभूतिदर्शनेनान्यतोऽप्यन्योत्पादनदर्शनेन सर्वत्र सर्वशक्तिसत्तानुमीयते ।

ननु सर्वत्र सर्वजातीयशक्त्यङ्गीकारे कथमेकदा नाखिलविकारोत्पत्तिः । ५ कथं वा न शिलातोऽङ्कुरोत्पत्तिरित्याशीति चेन्न । देशाकालावयवसंयोगविशेषरूपाकाराधर्मादिनिमित्तैः प्रतिबन्धादनेकशक्तीनामेकदा वर्तमानलक्षणपरिणामाभावोपपत्तेः । उत्कटरूपसहकारिविरहाद्वा । वस्तुतः सहकारिकारणानां प्रतिबन्धनिवर्तकत्वैव । अतः शिलाशकलात्राङ्कुरोत्पत्तिः । अवयवसंयोगविशेषस्य तत्प्रतिबन्धकत्वात् । नाकाशर्मरि केसरोत्पत्तिर्नापि निदाघे मेघोत्पत्तिर्न दुर्गा १० मनुष्योत्पत्तिर्नापुण्यवतः सुखमिति बोध्यम् । अस्मदादिशरीराच्च नाखिलप्राण्युत्पत्तिः । अधर्मेण प्रतिबन्धात् । ब्रह्माण्डादिशक्तिमतश्च घटादेर्ब्रह्माण्डाद्युत्पत्तिं विनैव प्रायशो नाशदर्शनात् । सा शक्तिराधारविलयादघटादिना सहैव लीयते । कदाचित्तु योगीश्वरादिसंकल्पतो घटादीनामपि प्रकृत्यापूरवशाद्दव्यवस्थिताखिलपरिणामो भवत्येव । तदुक्तम्—

१५ विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया । ( रघुवंश. ८।४६ )

इति । एवं च शक्तिसिद्धौ सदेव सोम्येदमग्र आसीत् ( छा. ६।२।१ ) इति श्रुतिरेव मानम् । अन्यथा कालादिभिरेवातिप्रसङ्गपरिहारेण सा न सिध्येत् । घटो भविष्यतीति प्रत्ययश्चेति । एवं च भविष्यद्व्यापारकशक्तिसिद्धौ हेयं दुःखमनागतम् (यो.सू.२।१६) इति पूर्वोक्तमुपपन्नम् । एवं च कश्चिद्विकारो विलक्षण एवानागतो- २० स्तीति । अन्यथाऽनागतदुःखस्य हेयत्वानुपपत्तेः । परेषां त्वनागतदुःखहानं सिद्धत्वान्न पुरुषार्थः स्यात् । मम त्वनागतदुःखं शक्तिरूपं विनैव सहैव नश्यतीत्युपपन्नं सर्वम् । यश्चैतेष्वभिव्यक्तेषु धर्मेष्वन्वयी स्थिरः सामान्यविशेषात्मा स धर्मी । एवं चाभिव्यक्तत्वानभिव्यक्तत्ववैधर्म्येण धर्मधर्मिणोर्विवेकः ।

यस्तु बौद्धो निर्धर्मिकं धर्ममात्रं क्षणिकमिदम्, अनेकक्षणस्थायित्वं क्षण- २५ संबन्धरूपधर्मवत्त्वमेव पदार्थमात्रस्य स्यादिति वदति तस्याप्यात्मापि क्षणिकविज्ञानरूप एव स्यादिति भोगाभावापत्तिः । अन्यविज्ञानेन कृतस्य कर्मणोऽन्यन्भोगेऽतिप्रसङ्गात् । स्मरणानापत्तेश्च । अन्यदृष्टस्यान्येनास्मरणात् । प्रत्यभिज्ञानाच्च धर्मी अतिरिक्तः सिध्यति । धर्मान्यथात्वेऽपि प्रत्यभिज्ञादर्शनादिति दिक् ॥ १४ ॥

ननु धर्मिणोऽतिरिक्तत्वेऽप्येकस्यानेकपरिणामाङ्गीकारोऽयुक्तः । एकरूपात्का- ३० रणात्कार्यभेदे तस्याकस्मिकत्वप्रसङ्गादेकस्यानेकशक्तित्वेऽतिप्रसङ्गादत आह-

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

19. A. reads विकारावि for विकारो वि.

एकस्यैव मृद्धर्मिणः प्रथमं चूर्णमृत् । ततः पिण्डमृद्भवति । ततश्च घटोत्पत्तौ घटमृद्भवति । ततो घटस्य लये कपालमृत् । ततः कणमृदित्यादिः परिणामक्रमो दृश्यते । मृद्धर्मी च सर्वत्रानुगतः । मृदित्यनुगतप्रत्ययात् । न च धर्माणामयं क्रमः पौर्वापर्यात्मा न तु धर्मिण इति कथं तेन धर्मिणः परिणामबहुत्वसिद्धिरिति
५ वाच्यम् । धर्मक्रमस्यैव धर्मिक्रमत्वात् । यस्य धर्मिणो धर्मान्तरस्य समनन्तरो यो धर्मः स एव हि तस्य धर्मिणः क्रमो यथा मृदेकैव चूर्णं भूत्वा सहकारिविशेषसमभिहारेण पश्चात्पिण्डो भवतीत्येकः । पश्चाच्च पिण्डः प्रच्यवते घट उपजायत इत्यादिप्रकारैर्मृद्धर्मिण एव धर्मपरिणामक्रमबहुत्वम् । एवं घटस्यानागतभावाद्वर्तमानभावप्राप्तिः पिण्डस्य वर्तमानभावादतीतभावप्राप्तिरिति लक्षणक्र-
१० मः । लक्षणाल्लक्षणान्तरप्राप्तिरूपोऽतीतभावाद्वर्तमानतेति न क्रम इति प्रागेवोक्तम् । तथा घटस्य नवस्य प्रान्ते पुराणता दृश्यते । तत्र यद्यपि प्रतिक्षणपरिणामो न प्रत्यक्षस्तथापि पुराणता प्रतिक्षणं भिन्नेन स्वरूपसता क्रमसमूहेनाभिव्यज्यमाना चरमावस्थायां स्फुटं प्रत्यक्षतामेतीत्यतः पुराणताभिव्यक्तिहेतुतया प्रतिक्षणमवस्थापरिणामोऽनुमीयते । एवं च धर्मलक्षणपरिणामाभ्यां प्रतिक्षणम-
१५ जायमानाभ्यां विलक्षणोऽयं प्रतिक्षणं जायमानत्वात्तृतीयोऽवस्थापरिणामः । ईदृशाक्षणभङ्गुरत्वमादायैव प्रपञ्चस्य स्वप्नमायादिदृष्टान्ताः श्रुतिस्मृतिषूक्ताः । त एते क्रमा धर्मधर्मिणोर्भेदे सति संभवन्ति नेतरथेति सूत्रतात्पर्यम् ।

ननु धर्मिणो घटादेः कपालादिधर्मत्वात्कथं धर्मधर्मिणोर्भेद इति चेदन्यधर्मापेक्षया धर्मित्वाक्षतेरदोषः । यो यस्य धर्मी स तस्माद्भिन्न इत्येव नियमात् । न
२० च धर्मिधर्मलक्षणानां भेदे कथमेकस्या एव प्रकृतेः सर्वपरिणामित्वं स्मृत्याद्युक्तमिति वाच्यम् । परमार्थधर्मिणि प्रधाने साक्षात्परंपरयाऽभेदोपचारेण निमित्तेन सर्वोऽपि धर्मः स एवाभिधीयत इति सर्वस्य क्रमस्य प्रधानरूपैकविषयत्वेनैव प्रतीयमानत्वेनादोषात् । परमार्थधर्मित्वं च साक्षात्परंपरया वा सर्वविकाराश्रयत्वम् । अन्येषां त्वपारमार्थिकं धर्मित्वम् । आपेक्षिकत्वात् । यथा महद्वादीनां
२५ सत्यत्वं जीवानामात्मत्वं चापारमार्थिकं शशशृङ्गदेहाद्यापेक्षिकत्वात् । एवं च परमात्मन एव पारमार्थिकात्मत्वम् । न्यायसाम्यात् । अत्राभेदोपचारद्वारेणेति भाष्योक्तेर्धर्मधर्मिणोर्भेद एव व्यावहारिकः । अभेदस्तु प्रातिभासिकः । तन्मूलं चाविभाग इति ज्ञायते । तत्रारम्भवादिभिरस्माकं धर्मधर्म्यभेदसत्कार्ययोरेव विरोधो न तु प्रपञ्चस्याचेतनत्वादौ । तैरभेदप्रत्ययनियामकाविभागलक्षणस्यानङ्गीकारा-
३० त्प्रागभावध्वंसयोरङ्गीकाराच्च । ब्रह्मविवर्ततावादोऽपि नास्माकं विरुद्धः । मायापरिणामस्य प्रपञ्चस्य परमात्मन्यतात्त्विकताया अस्माकमपीष्टत्वात् ।

---

14–5. B. reads उपजायमानाभ्याम् for अजायमानाभ्याम्.

22. A. om. क्रमस्य.

बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति बध्यते ॥

इति स्मृत्या मायाविकारस्य परमात्मन्यारोपावगमाच्छुक्तौ बुद्धिपरिणामरज-तारोपवत् । बध्यत इत्यस्यांशात इति शेषः ।

५ यद्यपि चित्तस्य व्युत्थाननिरोधसंस्काररूपौ द्वावेव परिणामौ सूत्र उक्तौ तथा-प्यन्येऽपि द्रष्टव्याः । तथा हि । चित्तस्य धर्मद्वयं प्रत्यक्षमप्रत्यक्षं च । तत्र वृत्त्या-त्मकं प्रत्यक्षम् । वृत्तिश्च साक्षिणि प्रतिबिम्बाधानसमर्थः परिणामविशेषो ज्ञानेच्छाकृतिसुखदुःखादिरूपः । परमाणुतद्रूपादिवत्साक्षिणि प्रतिबिम्बाधा-नाक्षमतयाऽभासमानो वस्तुमात्रोऽप्रत्यक्षः । स चानुमानमात्रगम्यः । स च
१० सप्तविधः

निरोधधर्मसंस्काराः परिणामोथ जीवनम् ।
चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिताः ॥

इति । निरोधो वृत्तिनिरोधः । स संस्कारजनकत्वेन निवृत्तियत्नबलात्पो-ऽनुमीयत इति प्रागुक्तम् । धर्मोऽदृष्टसामान्यं भोगवैचित्र्यादनुमीयते । संस्कारश्च
१५ स्मृत्या । परिणामश्चित्तस्योपचयादिर्वृत्त्युत्कर्षादिभिरनुमीयते । जीवनं प्राणनादि-रूपव्यापारः । स सुषुप्तावपि श्वासप्रश्वासाभ्यामनुमीयते । चेष्टा चित्तस्य संचारः । स च जाग्रत्स्वप्नसुषुप्त्यादौ चित्तस्य चक्षुरादिदेशसंयोगवियोगाभ्या-मनुमीयते । यद्यपि चित्तं विभु तथापि प्राणसम्बन्धापृष्टम्भेनोपचयापचयवदौ-पाधिकी तत्र क्रियाप्यस्ति । शक्तिर्ध्यानादिसामर्थ्यम् । तच्च तत्कार्यानुमेय-
२० मिति दिक् ॥ १५ ॥

अथ योगिनः संपन्नसर्वयमादिसाधनस्य तत्तद्विभूतिकामनया जिज्ञासितो-र्थस्तत्तत्संयमविषयस्तत्तत्संयमासिद्धिप्रयोजिका विभूतयश्च वक्तव्याः । केवल-मुमुक्षूणां तु सत्त्वपुरुषान्यतासंयमः कर्तव्यः । तत्र परिणामत्रयसंयमं तद्वि-भूतिं चाह—

२५ **परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥**

अस्य धर्मिणोयं धर्मपरिणामस्तस्य चायं लक्षणपरिणामो लक्षणस्य चाय-मवस्थापरिणाम इत्येवमनुक्षणं यत्रकुत्रचिदर्थे संयमात्तत्साक्षात्कारे सति सर्व-वस्तुसाधारणेषु तेषु परिणामेष्वतीतानागतज्ञानं प्रणिधानलेशादेव भवतीत्यर्थः । एकत्र ध्यानादित्रयं संयम इत्युक्तम् । अन्यविषयकसंयमात्प्रतिनियतपदार्था-

---

9. B. O. read गम्यसत्त्वः for गम्यः । स च.
14. B. reads सामान्य for सामान्यम्.
22. A. om. संयम before सिद्धि-
23–4. A. reads विभूतीः for विभूतिम्.

न्तरसाक्षात्कारो योगजधर्माद्भवतीत्यत्र शास्त्रं प्रमाणं धर्मविशेषात्स्वर्गविशेषो भवतीत्यत्रेव ॥ १६ ॥

संयमान्तरस्य सिद्ध्यन्तरमाह—

## शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभाग- संयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥

गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम् । तेषां वक्ष्यमाणात्संकेतरूपादध्यासात्संकरो विवेकाग्रहणम् । वस्तुतस्तेषां भेद एव । अतस्तेषां प्रविभागे भेदे संयमात्साक्षात्कारपर्यन्तात्सर्वभूतानां रुतानि ज्ञायन्ते । अयं काकादिरमुमर्थमनेन शब्देन कथयतीत्यर्थः ।

तत्र वागिन्द्रियजन्यः शब्दो लोकप्रतीतिसिद्धो वर्ण एव न वाचकपदरूपः ।

> अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
> जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ ( शिक्षा १३ )

इति स्मृतेः । श्रोत्रं च ध्वनिरूपपरिणाममात्रविषयम् । तत्र ध्वनिर्नाम वागिन्द्रियादिष्वभिहतस्योदानवायोः परिणामभेदः । तदभिघाताद्वच्छिन्नाकाशोपादानको वा । न तु वाचकं पदम् । स च वर्णरूपोऽप्यवाचकत्वाद्ध्वनिरित्युच्यते । तृतीयः पदरूपः । स च नादानुसंहारबुद्धिनिर्ग्राह्यो नादास्यगकारादिवर्णान् प्रत्येकं गृहीत्वाऽनु पश्चात्या बुद्धिः संहरत्येकत्वमापादयति गौरित्येकं पदमिति तया निर्ग्राह्योऽखण्ड एकः स्फोटाख्यः । अयं चान्तःकरणस्यैव ग्राह्यः । तद्धर्मश्च यो विशोका वा ज्योतिष्मती ( यो. सू. १।३६ ) इति सूत्रे प्रथमपादे हृदयपुण्डरीकप्रणवरूप उक्तः । अनुसंहारबुद्धेः सामानाधिकरण्येनैव तद्ग्रहजनकत्वे लाघवात् । यद्यपि पूर्वबुद्ध्योऽपि वर्णाकारं पदमेव गोचरयन्ति तथापि न विशदम् । चरमे तु विज्ञाने तदतिविशदमित्येवमुक्तम् ।

न चानुसंहारबुद्धिः श्रोत्रस्यैवास्तु । असंभवात् । आनुपूर्व्यैक्यं ह्येकपदत्वप्रतीतिविषयो वाच्यम् । न चानुपूर्वी श्रोत्रग्राह्या । श्रोत्रस्य शब्दमात्रग्राहकत्वात् । न च पूर्ववर्णसंस्कारैः स्मृतानां वर्णानामानुपूर्वी मनसा ग्राह्येति वाच्यम् । किमानुपूर्व्या मनसानुभव उत स्मरणम् । नाद्यः । तदा वर्णानां विनाशेन तदुत्तरक्षणानां च विनाशेन तदसंभवात् । क्षणस्यास्मदादिमनोऽग्राह्यत्वाच्च । अत एवान्त्योऽपि न । अत्र प्रमाणं चैकं पदमिति प्रत्यय एव । अनेकेषां वर्णानामेकसमयास्थितेरसंभवात्परस्परमसंबद्धस्वभावानां पदत्वसंस्पर्शरहितानां

---

7. B. reads अनिविवेक for विवेक.

प्रत्येकमर्थानुपस्थापकानामाविर्भूयैव क्षणात्तिरोभूतानां प्रत्येकं मिलितानां चापदस्वरूपतायाः वृद्धैरुक्तत्वात् । प्रत्येकमर्थोपस्थापकत्वेऽनुभवविरोधो द्वितीयादीनामनर्थकारणप्रसङ्गश्च ।

न चाग्नेयादीनां परमापूर्वे स्वर्गे वा जननीये यथा संस्कारद्वारा साहित्यं
५ तथा वर्णानामपि संस्कारद्वारा साहित्यम् । तादृशानेकसंस्कारकल्पने गौरवात् । न च स्मृत्यनुरोधेन कल्प्या एव ते । तेषां स्वकारणानुभवविषयस्मृतिमात्रजनकत्वात् । किं चातिरिक्तस्यापि स्वीकारे तस्याज्ञातस्यार्थप्रत्यायकत्वासंभवः । अर्थप्रत्यायनाङ्गसंबन्धस्याज्ञातस्य तज्जनकताया अदर्शनात् । न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिविषयतया जातसहभावा वाचकाः ।
१० क्रमाक्रमविपरीतक्रमानुभूतानामविशेषेणार्थबोधकत्वापत्तेः । क्रमस्य त्वनुभवाविषयस्य न स्मृतिविषयत्वमित्युक्तमेव ।

न चैषोऽखण्डपदेऽपि दोषः । तद्धि प्रत्येकमेव प्रयत्नभेदभिन्नध्वनिभिः परस्परविसदृशतत्तत्पदव्यञ्जकैस्तुल्यस्थानकरणनिष्पन्नत्वेन गणगौरगौरित्यादौ गत्वेन सदृशैरेकमप्यनेकमिवानवयवमपि सावयवमिव व्यज्यते । यथा नियतवर्णपरि-
१५ माणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति । न तु परमार्थतस्तस्य ते भागाः । तस्माद्वर्णात्मना पदभेदेऽप्येकमेव स्फोटं निर्भागमेव सभागमिव सभेदमिव व्यञ्जयन्ति । एवं च गोपदरूपस्यैकस्य स्फोटभेदस्य गकारभागो गणादिपदस्फोटसादृश्येन न निर्धारयति स्वभागिनमित्योकारविशिष्टो निर्धारयति । एवमोकाररूपोऽपि भागः शोचिरादिपदस-
२० दृशतया न शक्तस्तं निर्धारयितुमिति गकारविशिष्टो निर्धारयतीति वाच्यम् । तच्च न संभवति । गत्वादिनाभिव्यक्तेः क्षणिकत्वादिति वाच्यम् । संस्कारद्वारेण तेषां सहभावाद्वैशिष्ट्योपपत्तेः । न च भिन्नविषयत्वं संस्कारयोः । भागद्वयविषययोरनुभवयोस्तज्जन्मनोश्च संस्कारयोरेकपदविषयत्वात्केवलतद्भागानुभवेन पदमव्यक्तमनुभूयते । अनुसंहारधिया तु पूर्वसंस्कारसहकृतया व्यक्तमनुभूयते ।
२५ यथा दूराद्वनस्पतौ पूर्वेऽव्यक्ताः प्रत्यया व्यक्तवनस्पतिप्रत्ययजनकाः । न चेयं विधा वर्णानामर्थप्रत्ययजनने संभाविनी । न हि ते पूर्वमव्यक्तमर्थप्रत्ययं जनयन्तीति शक्यं वक्तुम् । प्रत्यक्षज्ञान एव तथा नियमात् । वर्णाभेयस्त्वर्थप्रत्ययो

---

2. B. reads रूपतया for रूपतायाः.
11. A. om. स्य न स्मृतिविषय.
13. B. reads तत्पदम् for तत्तत्पद.
21. A. reads वाच्यसंस्कार for वाच्यम् । संस्कार.
23. A. reads पदाविषयकत्वात्; C. reads पदविषयकत्वात् for पदविषयत्वात्.
23. B. C. om. तद् before भाग.

न प्रत्यक्षः। वर्णेभ्यो जायमानो ह्यर्थे प्रत्ययो जायमानः स्फुट एव जायेत न वा जायेत न त्वस्फुट इति विशेषात्। न चानुपूर्वीविशिष्टसमूहस्यैकत्वादेकत्वव्यवहारस्तेन रूपेणार्थप्रत्यायकत्वं चेति वाच्यम्। तदग्रहस्योक्तत्वात्।

स कीदृश इति चेत्। अन्तःकरणधर्मः स एक एव श्रोत्रगृहीततत्तद्वर्णैर्भि-
५ हारजनेन, वृक्षस्येव जपया स्फटिकस्येव वा तत्तदुपरक्ततायां सत्यां चरमवर्णग्रहकाले सति पदत्वेन प्रतीयते। तत्तदुपरागनाशकं च तस्यान्तःकरणवृत्त्यन्तरमेवेति न दोषः। अत एव तत्र तत्तदुत्तरत्वादिकमपि गृह्यते। यथा बीजाङ्कुराद्यनेकावस्थो वृक्षरूपो धर्मी क्रमिकाभ्यस्ताभ्योतिरिक्तः शेषावस्थया पूर्णतया व्यज्यतेऽयमाम्रवृक्ष इति। स च बीजादिभ्यो भिन्नाभिन्नः। भेदाभेदयोरनुभ-
१० वात्। तथा गकारौकाराद्यनेकावस्थो गौरित्यादिरखण्डरूपेण क्रमिकाभ्यो गकाराद्यवस्थाभ्योतिरिक्तो विसर्जनीयादिचरमावस्थयाभिव्यज्यत इदं गौरिति पदं न तु गौर इतीत्यादिरूपेण। तच्च गकाराद्यवस्थाभ्यो भिन्नाभिन्नम्। भेदाभेदयोरनुभवात्। स चार्थस्फुटीकरणात्स्फोट इत्युच्यते।

न च वर्णानां पदस्वरूपत्वाभावे कथमियन्तो वर्णाः क्रमविशेषविशिष्टा अस्या-
१५ र्थस्य वाचका इति लोकव्यवहार इति वाच्यम्। वर्णानां प्रत्येकरूपेण पदभेदेऽप्यवस्थावस्थिनोरभेदस्यापि सत्त्वेनैकैकस्यापि वर्णस्य बीजाङ्कुरादेर्वृक्षाभेदवत्पदाभेदस्यापि सत्त्वेनाक्षतेः। स चैकैको वर्णः पदभावे सहकारीणि यानि वर्णान्तराणि तत्प्रतियोगित्वात्तत्संबन्धित्वादनन्तपदरूपतामिवापन्नो भवतीति सर्वपदरूपत्वात्सर्वपदार्थाभिधानयोग्यतासंपन्नो भवति। वस्तुतस्तस्य तत्त्वाच्च नानात्वमत इवे-
२० त्युक्तम्। गोगणगौरनगर इत्यादिषु गोत्वाद्यभिधायिषु गवर्णो दृष्ट इति तत्तदभिधानशक्तिः सोमशोचिरादिष्वीश्वराद्यर्थाभिधायिषु पदेष्वोवर्णो दृष्ट इति सोऽपि तत्तदभिधानशक्तिरित्यनन्तपदरूपता च। एवं पूर्वो गकार उत्तरेणौरिति वर्णद्वयेन गण इति पदाद्व्यावर्त्योत्तरश्च विसर्जनीयः पूर्वेण गकारौकाररूपवर्णद्वयेन गौरित्यादिपदेभ्यो व्यावर्त्य विशेषे गौरित्यखण्डे पदे गोत्ववाचके तादात्म्येनावस्थाप्यत इति।

२५ एवं ते बहवो वर्णा आनुपूर्वीविशेषसापेक्षाः पदाभेदतोऽर्थसंकेतेन नियमिताः सहकारिविशेषेण सर्वाभिधानसमर्था अप्येतावत्संख्याका गकारौकारविसर्जनीया गोरूपमेवार्थमुपस्थापयन्तीति तेन प्रकारेण वर्णमुखेन तत्पदमेवाविवेकतः

---

1–2. A. reads जायते for जायेत न वा जायेत.
8. B. reads धर्मः for धर्मी.
16. A. C. read एककस्य for एकैकस्य.
19. A. reads एवेति; C. reads चेति for इवेति.
20. B. C, om. आदि after गोत्व.
22. B. reads पूर्वगकारात् for पूर्वो गकारः.
24. B. C. read प्रकारेण after इति.

संकेत्यते यतः पदमेव वाच्यस्य वाचकम् । न चान्यस्यान्यरूपेण कुतः संकेतः । पदाख्यस्य बुद्धिग्राह्यस्य बुद्धिस्थस्य स्फोटस्य ध्वनिरूपैरुपरक्ततया तदभेदात् । यथा संयुक्तं कपालद्वयं जलाहरणहेतुरित्यविवेकतो बालकेभ्य उपदिश्यते पटादिभ्यो घटस्य व्यावर्तकान्तरासंभवात् । ततश्च बालो घटस्य कपालाविवेकेनैव
५ जलाहरणहेतुत्वं गृह्णाति तद्वत्स्फोटान्तरव्यावर्तनाय वर्णाविवेकेनैव संकेतोपदेशः संकेतग्रहश्च भवतीति न प्रागुक्तलोकव्यवहारानुपपत्तिरिति बोध्यम् ।

तदिदं स्फोटाख्यमेकबुद्धिविषयत्वादेकं पराख्यया पुरुषस्य प्रधानरूपशक्त्यैकप्रयत्नेन जनितं यावद्व्यवहारस्थायि वर्णवत्क्रमरहितं वर्णरहितमत एव निरंशमन्त्यवर्णस्य प्रत्ययरूपव्यापारेणाभिव्यक्तं परप्रतिपिपादयिषया वक्तृभिर-
१० भिधीयमानैः श्रोतृभिश्च श्रूयमाणैर्वर्णैरुपरागादनादिवाग्व्यवहारवासनावशीकृतया लोकबुद्ध्या परमार्थवदन्योन्याभेदेन संवेदनेन प्रतीयते । न तु तद्व्यतिरिक्तरूपेण । यद्यपि लाक्षाद्युपाधेरपगमे स्फटिकः स्वच्छधवलोनुभूयते । उपाधिं विनापि प्रकाशात् । अस्य तूपाधिव्यतिरेकेण प्रतीत्यभावान्न केवलस्य प्रत्ययः । एवं च वागिन्द्रियविषयवर्णानां श्रोतृग्राह्याणां वाचकपदस्य चाविवेकरूपसंकरः ।
१५ तस्य च पदस्यैतावता वर्णानामवमानुपूर्वीकमिलनमस्यार्थस्य वाचकमिति विषयव्यवस्था तु संकेतग्रहाद्भवति ।

संकेतस्तु पदपदार्थयोः संकेतकर्तुराहार्येतरेतराभेदारोपरूपेतरेतराध्यासरूपः । अभेदारोपे बीजं त्वविभाग एव । त्रयाणामपि बुद्धिधर्मत्वेन परस्परमविभागात् । शब्देन बौद्धार्थस्यैव प्रत्ययात् । तत्रापि नाधुनिकसंकेतो विषयव्यवस्थापकः ।
२० तस्यानियतत्वात् । किं तु स्मृत्यात्मकः । पाणिन्यादिस्मृत्यात्मकः । किं च स्मृत्यात्मको ज्ञानविषय एव बोधको न स्वरूपसन्निति । न चाध्यासस्य संकेतत्वं कुतः । ओमित्येकाक्षरं ब्रह्म(गी.८।१३)इत्यादिशास्त्रेषु वृद्धिरादैच् (पा.सू.१।१।१) इत्यादौ व्याकरणे कम्बुग्रीवादिमान्घट इत्यादौ लोकेऽमरा निर्जरा देवा (अमरको. १।१।७) इत्यादौ कोशे च योयं शब्दः सोर्थो योर्थः स शब्द इत्येवमितरेतराध्यासरूपस्यैव
२५ संकेतस्य दर्शनात् । शब्दवाच्यत्वलक्षणायां प्रमाणाभावात् । ईदृशानाद्यभेदारोपेणैवागमिनो मन्त्रार्थयोरभेदेनोपासनमामनन्ति । मीमांसकाश्च मन्त्रमयीं देवतामाहुः ।

एवंभूत एव संकेते मुख्ये सति कथंचिद्भेदं परिकल्प्यास्यार्थस्यायं वाचक इत्यपि कदाचित्संकेतो यथा पाणिनेः कर्मणि द्वितीया ( पा. सू. २।३।२ ) इति ।

---

8. O. reads जनित for जनितम्.
10. B. reads वासनाम् for वासना.
28. A. om. ऐव.
29. B. reads कथंचित् for कदाचित्.

यथा वोतः प्रगृह्यम् ( पा. सू. १।१।१७ ) इति । वाचकत्वं च तादात्म्यमेवेति दिक् । यत्त्वस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं शक्तिरिति तत्कारणत्वादिसाधारणम् । एवमितरेतराध्यासरूपेण संकेतेन निमित्तेनैते शब्दार्थप्रत्ययाः संकीर्णा लोके दृश्यन्ते गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञान-
५ मिति । तत्र शब्दार्थयोरितरेतराध्यासः संकेतग्रहेणैव दर्शितः । शब्दार्थयोः प्रत्यये-न सह त्वेकाकारत्वादन्योन्याध्यासः । य एषां प्रविभागज्ञः स सर्वरुतवित्स एव शब्दादीनां तत्त्वज्ञः ।

यथा च पदवाक्ययोस्तदर्थानां च संकरस्तथा वर्णपदयोरपि । तथा हि । सर्व-पदेषु पदान्तरतत्तदर्थसहकारेणास्ति वाक्यभवनशक्तिः । किं च परेण बुभुत्सि-
१० तार्थप्रत्यायनाय शब्दप्रयोगः । परेण च प्रवृत्त्यादिविषयो बुभुत्सितः । स च वाक्यार्थ एवेति सर्वे शब्दास्तत्परा इति । यत्रापि केवलपदप्रयोगस्तत्रापि पदान्तरसाहित्येनैवार्थावगमः । केवलस्यासामर्थ्यात् । एवं च वाक्यमेव वाच-कम् । पदानि तत्रागतया वर्णानां पदार्थवाचकत्ववद्वाक्यार्थवाचकानि । एवं च वर्णो यथा सर्वार्थाभिधानशक्तिमचित एवं पदमप्येकैकं सर्ववाक्यार्थाभिधा-
१५ नशक्तिमन्वितमिति । एवं च वृक्ष इत्युक्त आकाङ्क्षापूरणार्थं वृक्षोऽस्ति चलति विच्छिद्यते वेति पदान्तराणां योग्यताकाङ्क्षातात्पर्यादिवशादध्याहारो गम्यत इति तैर्वाक्यैर्वृक्षपदस्य संकरोऽविवेकः ।

यत्रापि क्रियाविशेषे तात्पर्यादिकं नावधार्यते तत्राप्यस्तीति गम्यते । सत्तायाः पदार्थेनाव्यभिचाररूपयोग्यतासत्त्वात् । लोकेऽस्त्यर्थं विना शुद्धपदार्थानवगतेर्वा-
२० ऽव्यभिचार आकाङ्क्षासत्त्वाच्च । न चार्थविशेषे तात्पर्यग्रहेऽपि तदर्थकपदानामान-न्त्येन शब्दविशेषानुमाने किं नियामकम् । स्वेच्छाया एव नियामकत्वात् । तथा क्रियाया असाधनाया अभावात्पचतीत्युक्ते सर्वकारकपदानामनुमानम् । अनुमितानामपि कारकान्तरव्यावृत्त्यर्थश्चैत्रोऽग्निना तण्डुलानित्यादिरनुवादः कदाचित् । क्वचिदध्याहारं विनापि पदवाक्ययोरर्थाभेदनिमित्तकः संकरो
२५ यथा छन्दोऽधीत इति वाक्यार्थे श्रोत्रियपदस्य प्राणान्धारयतीति वाक्यार्थे जीव-तीति पदस्य प्रयोगः । एतावतापि श्रोत्रियपदस्यास्त्याद्यसमभिमिलितस्य नैवं-विधार्थबोधे सामर्थ्यम् । शब्दशक्तिस्वभावात् । न चैवं वाक्यस्य गुरुतरस्य कदापि प्रयोगो न स्यात् । संशयवारणाय तत्प्रयोगस्यापि संभवात् । पदेषु तत्रागतया तदर्थशक्तिमत्त्वेपि केवलात्सहकारिणं विना तदर्थाप्रत्ययाच्च ।

---

9. A. reads तदर्थ for तत्तदर्थ.
14. A. reads साहित्येनैवार्थावगमो after पदमपि.
24. A. om. अपि.

नन्वेवं सर्वत्र वाक्यस्यैव बोधकत्वे किमर्थं व्याकरणे पदानामन्वाख्यानम्। किं च पदवद्वाक्यमखण्डमेव, न सन्त्येव पदानीति तदन्वाख्यानमसंभावि चेति चेन्न। वाक्यात्कल्पनयैव पदं प्रविभज्य कल्पितक्रियावाचकत्वेन कारकवाचकत्वेन चान्वाख्यानात्। अन्यथा "घटो भवति, भवति भिक्षां देहि। अश्वस्त्वम्, अश्वो याति। अजापयः पिब, अजापयः शत्रून्" इत्यादौ नामाख्यातसारूप्यादन्वाख्यानं विना क्रियाकारकार्थान्वान्यतरेणाज्ञातं कथं क्रियायां कारके वा प्रयुज्येत। तत्र हि 'त्वं गतवान्। अश्वत्वजातिमान् गच्छति। छागयाः पयः पिब। शत्रून्नाशय' इत्याद्यर्थप्रतीतिः। तस्मादपोद्धृत्यान्वाख्यानं न त्वन्वाख्यानादेव पारमार्थिको विभागः पदानाम्। एवं चात्राविभागदर्शनाद्वर्णानामपि नैवैरविभागं मन्यन्ते लौकिकाः। यथा च वाक्ये पदभागाः कल्पिता एवं पदे वर्णभागा इति तात्पर्यम्।

न चैवं शब्दार्थप्रत्ययानामविभाग एवास्तु। प्रतीत्या भेदस्य सिद्धेः। तथा हि। श्वेतते इति साध्यरूपक्रियार्थः शब्दः। श्वेतः प्रासाद इति सिद्धरूपतया कारकार्थः शब्दः। अभिहितत्वाच्च कारकविभक्तेरभावः। तयोः शब्दयोः क्रियात्मा कारकात्मा चार्थः प्रत्ययश्च तत्तदर्थविषयो भिन्न एव। न चाभेदेन प्रतीत्या संकरात्कुतस्तेषां प्रविभागः। सोयमित्यभिसंबन्धरूपसंकेतोपाधिक एकाकारप्रत्ययो न तात्त्विक इत्यदोषात्। वस्तुतः शब्दप्रत्यययोरालम्बनं श्वेतोर्थः। स च शब्दादिव्यावृत्ताभिर्नवपुराणत्वादिभिरवस्थाभिः स्वाभिर्विक्रियमाणत्वाच्च शब्दप्रत्यययोः सहगतः। अतस्ताभ्यां भिन्नः। एवं शब्दः स्वावस्थाभिर्विक्रियमाणो नार्थबुद्ध्योः सहगतः। एवं प्रत्ययोपीति परस्परविभक्ता एवैते। तेषु मनुष्यवचनविषये प्रविभागसंयमात्साक्षात्कारपर्यन्तात्योगी सर्वभूतरुतज्ञो भवति तेषां रुतं तदर्थभेदं तत्प्रत्ययं च योगी जानातीति दिक् ॥ १७ ॥

संयमान्तरस्य सिद्ध्यन्तरमाह--

## संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥

अत्र संस्कारसंयमेनेति सूत्रस्यादिः। द्विविधाः संस्काराः स्मृतिरागादिक्लेशहेतवो वासनारूपा जात्यायुर्भोगरूपविपाकहेतवो धर्माधर्मरूपाश्च। अविद्यासत्त्वेपि रागादिवैचित्र्यदर्शनात्तेषु वासनानां हेतुत्वमावश्यकम्। ते च पूर्वजन्मोपचिताः परिणामचेष्टानिरोधशक्तिजीवनरूपचित्तधर्मवत्साक्षिभास्यत्वाभाववन्तश्चित्तधर्माः। तेषु क्रियमाणः संयमस्तत्साक्षात्करणे समर्थो भवति। तेषु शब्दानु-

---

19. B. reads सर्वशब्दः for एवं शब्दः.

20. A. reads एतेषु for एते। तेषु.

20. A. reads विषय for विषये.

मानाभ्यां सामान्यतो ज्ञातेषु विशेषज्ञानफलकः संयमः कार्यः। तत्संस्कारसाक्षात्करणात्पूर्वजातिज्ञानं भवति। देशकालनिमित्तानुभवैर्विना तत्साक्षात्कारासंभवात्। देशो जन्मभूमिः स्वर्गनरकादिः। कालो युगादिः। निमित्तं मातापित्रादिः। अनुभवो विषयीकरणम्। सविषयकगुणज्ञानस्यापि विषयोपरागेणैव ज्ञानेच्छादि-
५ स्थले दृष्टत्वात्। सूत्रे पूर्वजातीत्युपलक्षणं परजन्मादिज्ञानस्यापि। संस्कारसाक्षात्करणात्पूर्वादिजन्मान्यशेषविशेषैर्ज्ञायन्त इति।

अत्रेदमाख्यानं श्रूयते—भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणाद्दशसु प्राकृतसर्गेषु जन्मक्रमं बाल्ययौवनवार्धकादिरूपं तत्परिणामक्रमं च साक्षात्कुर्वतो विवेकजं ज्ञानं प्रादुरभूत्। अथ भगवानावट्यो लिङ्गशरीरमात्रविहारी परीक्षा-
१० र्थं तनुधरो निर्माणकायधारी भूत्वा पप्रच्छ "दशसु महासर्गेषु कल्पेषु कुशलत्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यगादिगर्भसंभवं दुःखमुपभुञ्जता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन तदत्यं सुखमुपभुञ्जता च सुखदुःखयोर्मध्ये किमधिकमुपलब्धम्" इति। ततस्तं जैगीषव्य उवाच। तत्र देवमनुष्येषु पुनः पुनरुत्पद्यमानेन यत्किंचिदनुभूतं सुखं तत्सर्वं दुःखमेव प्रत्येमि। यथा सुखस्यापि दुः-
१५ खत्वं तथा गुणवृत्त्यविरोधाच्च (यो. सू. २।१५) इत्यनेनोक्तम्। पुनरावट्यः पप्रच्छ "यदिदमायुष्मतः स्वेच्छया प्रकृतिप्रयोक्तृत्वरूपप्रधानवशित्वेनैश्वर्यसुखं तथा प्रधानवशित्वेन कामसमाप्त्या विषयेष्वलंप्रत्ययरूपवैतृष्ण्याख्यसंतोषजन्यं यच्चित्तस्य स्वाभाविकं सुखं सर्वतोऽप्युत्तमं किमिदमपि दुःखपक्षे निक्षिप्तमिति। ततो जैगीषव्य उवाच। विषयसुखापेक्षयैवेदमनुत्तमं संतोषसुखमुक्तं कैवल्यापे-
२० क्षया दुःखमेव। यतोऽयं संतोषाख्योऽलंप्रत्ययो बुद्धिधर्मत्वात्त्रिगुणः सुखादिगुणमयत्वात्। त्रिगुणश्च प्रत्ययो बुद्धिपरिणामो हेयपक्षे दुःखपक्षे न्यस्तो मधुविषसंपृक्तान्नवदिति। तृष्णा हि दुःखसाधनत्वाद्दुःखरूपस्तन्तुर्बन्धकरज्जुहेतुः। तज्जन्यदुःखरूपसंतापापगमाद्वैषयिकदुःखाकलुषितत्वरूपप्रसन्नत्ववदत एवाबाधमक्षयं यावद्बुद्धिस्थायि सर्वेषामेव प्रियम्। एतावन्मात्रेण प्रधानवशित्वमूलकस्य
२५ सुखत्वमुक्तं शास्त्रेष्विति ॥ १८ ॥

## प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

प्रत्ययस्य रागादिमत्याश्चित्तवृत्तेः संयमेनाश्रयादिरूपाशेषविशेषैः साक्षात्करणादन्यचित्तस्याशेषविशेषतो ज्ञानं संकल्पमात्रेण भवतीत्यर्थः। न च यथा

---

4. B. C. om. अपि.
13. A. C. read पुनः for पुनः पुनः.
14. A. C. read प्रत्यवैमि for प्रत्येमि.
17. B. reads समाप्त्या for समाप्त्याः.

संस्कारसाक्षात्कारे तद्विषयदेशादिकमपि विषयीक्रियते तथा न परचित्तसाक्षा-त्कारोऽमुकविषयकरागवानित्येवं भवतीति वाच्यम् । परचित्तालम्बनस्य संयम-विषयेण स्वचित्तेनाविषयीकरणात्तत्प्रतिपादकशास्त्राभावाद्रागवदित्येव ज्ञाना-दिति दिक् ॥ १९ ॥

५ संयमान्तरस्य सिद्ध्यन्तरमाह—

## कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशा-संयोगेन्तर्धानम् ॥ २० ॥

स्वशरीररूपस्य संयमेन कारणाद्यशेषविशेषतः साक्षात्कारे सति संकल्पमात्रेण स्वकीयरूपस्य दृश्यताशक्तिं परचक्षुःसंयोगयोग्यतां प्रतिबध्नाति । तत्स्तम्भे सति १० परचक्षुःप्रकाशैस्तात्किरणैरसंयोगेन्तर्धानमुत्पद्यते योगिनः । दिवान्धेनेव केना-प्यसौ न दृश्यत इत्यर्थः । एवं यदा स्वस्य शब्दस्पर्शरसगन्धसंयमात्तेषां ग्राह्यता-शक्तिं प्रतिबध्नाति तदा श्रोत्रादिसंनिकर्षप्रतिबन्धाद्योगिनः शब्दादि बधिरादिने-व न केनापि श्रूयत इति बोध्यम् ॥ २० ॥

सिद्ध्यन्तरमाह—

## १५ सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञान-मरिष्टेभ्यो वा ॥ २१ ॥

आयुष्करकर्मज्ञानादेव चिरशीघ्रतारूपेण मरणज्ञानम् । तत्र विद्यमानजन्मभु-ज्यमानकर्मभिः सहैकभविकमायुष्करं कर्म द्विविधं सोपक्रमं निरुपक्रमं च । तत्राद्यं तीव्रवेगेन फलदातृ । यथा कलिकालीनप्रजानां बाल्ययौवनवार्धक्याव-२० स्थानामारम्भकम् । अन्त्यं मन्दवेगेन फलदातृ । यथा सत्यादिकालीनप्रजानां तदारम्भकम् । यथार्द्रवस्त्रं प्रसारितमल्पकालेन शुष्येद्यथा वा शुष्के तृणे मुक्तो वह्निर्वातेन युक्तः शीघ्रमेव दहति तद्वदाद्यम् । यथा च संपिण्डितं वास-श्चिरेण शुष्यति यथा वाग्निस्तृणराशावार्द्रे वाताभावे क्रमेण न्यस्तश्चिराद्दहति तद्वदन्त्यम् । परान्तः प्रलयः । तमपेक्ष्यापरान्तो मरणम् । कर्मणः सोपक्रमत्वज्ञाने २५ झटिति मरणमिति ज्ञानं निरुपक्रमत्वज्ञाने विलम्बेन मरणमिति ज्ञानम् । जन्मा-न्तरभोग्यस्य कर्मणो ज्ञानं न वर्तमानदेहस्यापरान्तज्ञाने हेतुरतो विद्यमानेत्यादि ।

अरिष्टेभ्यो वेति । अरिष्टत्वासमर्थतान्यायेन । अरिष्टं च त्रिविधम् । आध्यात्मि-कमाधिभौतिकमाधिदैविकं च । तत्राद्यं यथा पिहितकर्णः स्वदेहान्तर्घोषं वह्निज्वलनशब्दवच्छब्दविशेषं न शृणोति । तथा नेत्रेऽङ्गुल्यादिनावष्टब्धे ज्यो-३० तिर्न पश्यति । द्वितीयं यमपुरुषान्पश्यति पितॄनतीतान्पश्यति ग्रामान्तरगतान्-

---

17. C. reads चिरम् for चिर.

नागृतानेवाकस्मात्पश्यति । तृतीयमकस्मात्स्वर्गं सिद्धान्वा पश्यति । एवं मनुष्यलोके देवलोकमित्यादिरीत्या विपरीतं सर्वमिन्द्रजालादिकं विनैव पश्यति तदा मरणमुपस्थितमिति ज्ञेयम् । अन्यान्यप्यरिष्टान्यरिष्टाध्याये द्रष्टव्यानि ॥ २१ ॥

सिद्ध्यन्तरमाह—

५ **मैत्र्यादिषु बलानि ॥ २२ ॥**

मैत्री करुणा मुदितेति त्रयविषयास्तिस्रो भावनाः संयमाः । तत्र सुखितेषु मैत्री । एवंस्वरूपैवमादिसाधनिकेत्यशेषविशेषैः संयमेन साक्षात्कृता सत्यवन्ध्यमैत्री वीर्यदा भवति । परेषु मैत्र्यर्थं यत्नो विफलो न भवतीति यावत् । एवं दुःखितेषु करुणा पुण्यशीलेषु मुदिता । यद्यपि सूत्रे भावनाशब्दो नास्ति तथापि १० तन्त्रान्तरानुसारेण भाष्य उक्तः । तदर्थश्च समाधिरिति यस्तेषूक्तः सोऽवन्ध्यसंयमरूपो बोध्यः । यद्वा भावना चिन्तनं ध्यानधारणारूपम् । ततो यः समाधिः स संयमो बोध्यः । ततस्तत्तद्बलान्युक्तरीत्याऽवन्ध्यवीर्याणि जायन्ते । पापशीलेषु मैत्र्याद्यभावरूपोपेक्षैव न तु तस्यामभावरूपायां प्रतियोग्यतिरिक्तविशेषस्याभावेन तत्र भावना । अतश्च तस्यां नास्ति समाधिरिति तस्यां संयमाभावाच्चो- १५ पेक्षातो बलमिति दिक् ॥ २२ ॥

**बलेषु हस्तिबलादीनि ॥ २३ ॥**

हस्तिबले संयमाद्धस्तिबलो वैनतेयबले संयमात्तद्बलो वायुबले संयमात्तद्बल इत्यादिरीत्योह्यम् ॥ २३ ॥

सिद्ध्यन्तरमाह—

२० **प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टविज्ञानम् ॥२४॥**

व्यवहितमावृतम् । विप्रकृष्टं दूरवर्ति । बुद्धिपुरुषान्यतरसाक्षात्काररूपिणी मनसः प्रवृत्तिः प्रथमपादे ज्योतिष्मतीत्युक्ता (१।३६) । तत्कालीनो य आलोकः सत्त्वप्रकाशस्तं योगी सूक्ष्मादार्थेषु विन्यस्य तमर्थं साक्षात्करोतीत्यर्थः । अत्र न्यासमात्रवचनात्तेषु संयमापेक्षा नास्ति । चक्षुर्न्यासमार्जनं पटदर्शनवद्विशुद्धसत्त्व- २५ प्रतिसंधानमात्रेणैव तत्साक्षात्कारसंभवात् । परंपरया बुद्ध्यादिविषयकसंयमसाध्यत्वेनास्याः संयमसिद्धिमध्ये गणनमिति बोध्यम् ॥ २४ ॥

**भुवनज्ञानं सूर्ये संयमात् ॥ २५ ॥**

---

2. B. om. रीत्या.
12. A. reads तत् for तत्तत्.
21. C. reads अन्यन्तर for अन्यतर.
24. A. B. read हि शुद्ध for विशुद्ध.
26. B. reads सिद्ध for सिद्धि.

तत्र भुवनविस्तारः कथ्यते । तत्रादौ सप्त लोकाः । तत्रावीचिर्नाम नरकविशेषः सर्वलोकाधस्तात् । तमारभ्य मेरुपृष्ठपर्यन्तं भूर्लोकः । मेरुपृष्ठादारभ्य तत्पृष्ठोपलक्षितभूर्लोकस्योपरि ध्रुवपर्यन्तं ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः। स एव भुवर्लोकः । ध्रुवात्परः पञ्चविधः स्वर्लोकः । एतेन त्रिलोकव्यवस्थापि दर्शिता । पञ्चानां स्वर्लोकत्वेनैक्यात् । तत्र माहेन्द्रस्तृतीयो लोको भूर्लोकात् । स स्वर्लोकः । चतुर्थः प्राजापत्यो महर्लोकः । त्रिविधो ब्राह्मः । जनलोकस्तपोलोकः सत्यलोक इति ।

ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान् ।
माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजाः ॥

इति संग्रहश्लोकः ।

तत्रावीचेरुपर्युपरि निविष्टाः षण्महानरकभूमयः शिलाशर्करापङ्कसलिलानलानिलाकाशतमसामाधारा महाकालाम्बरीषरौरवमहारौरवकालसूत्रान्धतामिस्राख्याः । तमोऽन्धकारः । एतेषां महानरकत्वादन्येऽप्युपनरकाः कुम्भीपाकादयोऽनन्तास्तत्र बोध्याः । यत्र स्वकर्मोपार्जितदुःखभोगिनः प्राणिनः कष्टमायुर्दीर्घं गृहीत्वा जायन्ते । ततः षण्महानरकभूम्यूर्ध्वं महातलरसातलातलसुतलवितलतलातलपातालाख्यानि सप्त पातालानि । तेषां च सप्तपातालानां भूर्लोके प्रवेशः । एवं चतुर्दशलोका भवन्ति । भूमिरियमष्टमी सप्तद्वीपा वसुमती । यस्याः सुमेरुर्मध्ये पर्वतराजः काञ्चनः । तस्य पूर्वादिप्रदक्षिणक्रमेण राजतवैदूर्यस्फटिकहेममणिमयानि शृङ्गाणि । तत्र वैदूर्यप्रभानुरागान्नीलोत्पलपत्रश्यामो नभसो दक्षिणभागः । पूर्वभागो रजतप्रभानुरागाच्छ्वेतः । पश्चिमः स्फटिकवत्स्वच्छः प्रतिबिम्बग्राही । उत्तरः स्वर्णवर्णकुरण्टकपुष्पाभः ।

अस्य सुमेरोरुपरि दक्षिणपार्श्वे जम्बूनामा वृक्षो यन्नाम्ना लवणोदधिवेष्टितो जम्बूद्वीपः । निरन्तरं सूर्येण प्रदक्षिणीकरणादस्य सुमेरोरहोरात्रं संयुक्तमिव भ्रमति । यमेवास्य भागं सूर्यस्त्यजति तत्र रात्रिर्यमेव भागमलंकरोति तत्र दिनमिति । तथा तस्य सुमेरोरुत्तरदिशि नीलनामकश्वेतनामकशृङ्गवन्नामकास्त्रयः पर्वताः प्रत्येकं द्विसहस्रयोजनायामाः । तेषामन्तरेषु त्रीणि वर्षाणि नवनवयोजनसहस्रविस्ताराणि । तत्र नीलगिरिमेर्वन्तरे रमणकम् । श्वेतस्योत्तरे हिरण्मयम् । शृङ्गवत उत्तरं समुद्रपर्यन्तमुत्तराः कुरवः । सुमेरोर्दक्षिणदिशि निषधहेमकूटहिमशैला द्विसहस्रयोजनविस्ताराः । तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसहस्राणि । हरिवर्षं किंपुरुषं भारतमिति पूर्ववत् । तथा सुमेरोः पूर्वदिशि तत्संयुक्तो माल्यवान्पर्वतः । तमेव सीमानं कृत्वा समुद्रपर्यन्तं भद्राश्वनामकं वर्षम् । तन्नामैव स देशः । तथा सुमेरोः पश्चिमदिशि तत्संसक्तो गन्धमादनः पर्वतः । तमारभ्य समुद्रपर्यन्तं केतुमालनामा देशः ।

12, B. om. महारौरव.

तन्नामकमेव वर्षम् । छत्राकारस्य सुमेरोरधोभागे वर्षमिलावृत्तम् । चतुर्दिक्षु च पर्वताश्छत्रपार्श्वस्थावरणवास इव मेरुपार्श्वेष्वेव संसक्ता इति बोध्यम् ।

मेरोश्चतुर्दिशस्तत्र नवसाहस्रविस्तृतम् ।
इलावृतं महाभाग चत्वारस्तत्र पर्वताः ॥ ( वि. पु. २।२।१५ )

५ इति विष्णुपुराणात् । ते पर्वताश्च प्रत्येकं पादोनसहस्रायामा इति बोध्यम् । तदेवं पर्वतैः सह जम्बुद्वीपं लक्षयोजनविस्तारम् । तदेवं सुमेरुणा सह सुमेरोश्चतुर्दिक्षु पञ्चाशत्पञ्चाशद्योजनसहस्रेण स्थितं जम्बुद्वीपम् । सुमेरोश्च परिमाणम्

चतुरशीतिसाहस्रं योजनैरस्य चोच्छ्रयः ।
प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः ॥ ( वि. पु. २।२।८-९ )

१० इति । सोयं जम्बूद्वीपो द्विगुणेन लवणोदधिना वलयाकृतिना वेष्टितः । ततो जम्बूद्वीपात्क्रमेणोत्तरोत्तरं द्विगुणाद्विगुणाः शाककुशक्रौञ्चशाल्मलिगोमेदप्लक्षपुष्करद्वीपाः स्वस्वद्वीपात्समुद्राश्च सर्षपराशिकल्पा नात्यन्तमुच्छ्रिता नापि भूमेः समाः कुलद्वयस्थितविचित्रशैलावतंसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदका वलयाकृतयः । ससमुद्राः सर्वे लोकालोकपर्वतपरिवारा द्वीपाः सप्तसमुद्रपरि-
१५ वेष्टिता वलयाकृतय इतरलोकसहिता पञ्चाशत्कोटियोजनपरिमिताः ।

तदेतत्समग्रं पञ्चाशत्कोटिपरिमितं भूगोलं सुप्रतिष्ठितमण्डमध्ये व्यूढम् । तादृशं च शतकोटिविस्तरमण्डं समावरणसहितमपि प्रधानस्याणुरवयवो यथाकाशे खद्योतः । प्रकृतिं प्रकृत्य

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।
२० ईदृशानां प्रदृश्यन्ते कोटिकोटिशतानि च ॥ ( वि. पु. २।७।२७)

इति विष्णुपुराणात् ।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ ( श्वे. ४।१० )

इति श्रुतेश्च । शक्तिशक्तिमतोरविभागेन शक्त्यंशेषु शक्तिमदंशत्वमपीति तदाशयः ।
२५ तत्र पाताले जलधौ पर्वतेषु चैतेषु देवनिकाया देवसमूहा असुरगन्धर्वकिंनरकिंपुरुषयक्षराक्षसोरगभूतप्रेतपिशाचापस्मारकाप्सरोब्रह्मराक्षसकूष्माण्डविनायकाश्च प्रतिवसन्ति । सर्वेषु द्वीपेषु पुण्यात्मानो देवामनुष्याश्च प्रतिवसन्ति । सुमेरुस्त्रिदशानामुद्यानभूमिः । अत्र मिश्रवनं नन्दनं चैत्ररथं सुमानसमि-
३० त्युद्यानानि । सुधर्मा देवसभा । सुदर्शनं पुरम् । वैजयन्तः प्रासादः ।

---

12. B. C. om. प्लक्ष.
18. A. O. read विस्तारम् for विस्तरम्.
26. A. om. चैतेषु.

तदूर्ध्वमन्तरिक्षलोके स्थावयो ग्रहा अश्विन्यादीनि ऋक्षाणि तदितरक्षुद्र-
ज्योतीरूपास्तारकाश्च सर्वोपरि मेढिकावन्निश्चलतया स्थिते ध्रुवसंज्ञके ज्योति-
र्विशेषे वायुरज्ज्वा निबद्धा वायोः प्रतिनियतसंचारेण कालविशेषैरवधृतगतयः
सुमेरोरुपर्युपरिभावेन संनिविष्टा दिवि भुवर्लोके भ्रमन्ति। न च सुमेरोरुपरि
५ ज्योतिर्मण्डलभ्रमणे कथं मेरुणा ज्योतिश्चक्रस्यावरणं यतो रात्रिंदिनव्यवस्थेति
वाच्यम् । वृक्षेण सूर्यव्यवधानवन्मेरोरेकपार्श्वस्थस्य सूर्यादेः पार्श्वान्तरेण
व्यवधानसंभवात् ।

माहेन्द्ररूपस्वर्लोकनिवासिनः षड्देवजातीयाः सप्तहास्त्रिदशा अग्निष्वात्ता
याम्यास्तुषिता अपरिनिर्मितवशवर्तिनः परिनिर्मितवशवर्तिनश्चेति । सर्वे संकल्प-
१० सिद्धा अणिमाद्यष्टैश्वर्ययुक्ता ब्रह्मदिनरूपकल्पायुषो वृन्दारकाः पूज्याः काम-
भोगिनः पित्रोः संयोगं विनैव लब्धदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिवाराश्च।

ततो महर्लोके प्राजापत्ये पञ्चविधो देवनिकायः कुमुदा ऋभवः प्रतर्दना
अञ्जनाभाः प्रचिताभा इति । एते सर्वे महाभूतानां परिणामने स्वतन्त्रा ध्यान-
मात्रतृप्ताः कल्पसहस्रायुषः ।

१५ ततो ब्रह्मणः प्रथमे जनलोके चतुर्विधो देवनिकायः। ब्रह्मपुरोहिता ब्रह्मका-
यिका ब्रह्ममहाकायिका अमरा इति । ते सर्वे भूतानामिन्द्रियाणां च परिणामने
समर्था द्विसहस्रकल्पायुषः ।

द्वितीये ब्रह्मणो लोके तपसि त्रिविधा देवनिकाया आभास्वरा महाभास्वराः
सत्यमहाभास्वरा इति । एते सर्वे भूतेन्द्रियान्तःकरणानां परिणामने समर्थाः स्वे-
२० च्छयाऽन्यानिर्माणे चित्तनिर्माणे च समर्था ध्यानतृप्ता ऊर्ध्वरेतसोऽस्खलितरेतस
ऊर्ध्वं सत्यलोकादावप्रतिहतज्ञाना अधोधोलोकेष्वनावृतज्ञानविषया उत्तरोत्तरं
द्विगुणायुषश्च ।

तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अकृतभवनन्यासाः स्वप्रति-
ष्ठा उपर्युपरि स्थिताः पूर्वपूर्वापेक्षयोर्ध्वमूर्ध्वं स्थिताः । सत्यलोकेऽप्यवान्तरलोकभे-
२५ दान्मूलप्रकृतेः परिणामने समर्थाः। सर्वे यावत्सर्गायुषश्च । तेषां नामान्यच्यु-
ताः शुद्धनिवासाः सत्याभाः संज्ञासंज्ञिनश्च । तत्राद्याः सवितर्कध्यानेनैव सुखि-
नः । द्वितीयाः सविचारध्यानसुखाः । तृतीया आनन्दमात्रध्यानसुखाः । तुरीया
अस्मितामात्रध्यानसुखाः । ते लोके चतुर्दशभुवनमध्य एव तिष्ठन्ति न ब्रह्माण्डा-
द्बहिः । न चाण्डस्य सर्वजीवसाधारण्यात्कथं ब्रह्माण्डसंज्ञेति वाच्यम् । सर्वेषा-
३० मेषां हिरण्यगर्भस्य लिङ्गदेहेन सर्वलोकव्यापत्वादंशांशिभावेन सर्वजीवानां तद-
भेदाच्च सर्वेषां ब्रह्मतया ब्रह्माण्डत्वाक्षतेः। विदेहप्रकृतिलयास्तु मुक्तप्रायत्वादीश्व-
रकोटित्वाद्ब्रह्माण्डस्यान्तर्बहिश्च स्वातन्त्र्येण तेषां व्यापाराच्च लोकवासिजनमध्ये
गणिता इत्येतत्सर्वं भुवनं वैराग्यातिशयात्स्वर्यद्वारे सूर्यान्तश्छिद्रं ब्रह्मलोकद्वार-

33, A. O. read अतिशयाय for अतिशयात्.

भूते सुषुम्नायां वा संयमं कृत्वा योगिना साक्षात्करणीयम् । एवं योगशास्त्रोक्तेनान्यत्रापि संयमेनेदं भुवनं द्रष्टव्यम् । एवं संयमं तावदभ्यसेद्यावदिदं सर्वं दृष्टं भवतीति दिक् ॥ २५ ॥

## चन्द्रे ताराव्यूहज्ञानम् ॥ २६ ॥

५ चन्द्रे संयमं कृत्वा ताराव्यूहं जानीयात् ॥ २६ ॥

## ध्रुवे तद्गतिज्ञानम् ॥ २७ ॥

ताराव्यूहज्ञानानन्तरं ध्रुवे संयमं कृत्वा ताराणां गतिं जानीयात् । एवं यत्र कुत्रचिद्विमाने कृतसंयमः सर्वाणि तानि साक्षात्कुर्यात् ॥ २७ ॥

## नाभिचक्रे कायव्यूहज्ञानम् ॥ २८ ॥

१० शरीरमध्यवर्तिनाभिकन्दरूपं कदलीकन्दवदाद्युत्पद्यते । यतः शाखापल्लवादिवच्छिरःपादादिकमवयवजातमूर्ध्वमधश्चाविर्भवति । तत्र नाभिचक्रे संयमेन साक्षात्कारपर्यन्तेन कायस्थपदार्थवातपित्तत्वगसृगादिव्यूहं जानीयात् । वातपित्तश्लेष्माणस्त्रयो दोषाः । धातवः सप्त त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि । पूर्वपूर्वमेषां बाह्यमित्येषां विन्यासः ॥ २८ ॥

## १५ कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ २९ ॥

जिह्वाया अधस्तात्तन्तुः । ततोऽधस्तात्कण्ठः । ततोऽधः कूप उरःपर्यन्तम् । तत्र संयमात्क्षुत्पिपासे न बाधेते ॥ २९ ॥

## कूर्मनाड्यां स्थैर्यम् ॥ ३० ॥

उरसि कुण्डलितसर्पाभोगान्यतरवत्स्थिता कूर्माकारा या नाडी तस्यां कृत-
२० संयमः स्थिरां चित्तवृत्तिं लभत इत्यर्थः ॥ ३० ॥

## मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३१ ॥

शिरःकपालमध्यस्थच्छिद्रस्यान्तः स्वप्रकाशरूपं ज्योतिरस्ति । तत्र संयमपूर्वकात्साक्षात्काराद्द्यावापृथिव्योरन्तश्चारिसिद्धदर्शनं भवतीत्यर्थः । मूर्धशब्देन सुषुम्ना नाडी लक्ष्यत इति मिश्राः ॥ ३१ ॥

## २५ प्रातिभाद्वा सर्वम् ॥ ३२ ॥

प्रातिभं स्वप्रतिभोत्थमनौपदेशिकं ज्ञानं संसारतरणोपायत्वात्तारकं विवेकजस्य वक्ष्यमाणस्य सार्वज्ञ्यस्य पूर्वरूपं लिङ्गं यथा सूर्यस्योदयपूर्वरूपं प्रभा। तेनोत्पन्नेन योगी सर्वमेवातीतानागतादि जानाति । पूर्वोक्तसंयमं विनापीत्यर्थः। प्रातिभस्यापि क्षणतत्क्रमादिसंयमजन्यतायाः वक्ष्यमाणत्वादस्या अपि परंपरया

---

13. B. reads त्व for त्वक्.
23. A. C. read अन्तर for अन्तः.
29. B. reads क्षणतः क्रम for क्षणतत्क्रम.

संयमासिद्धित्वेन तासु गणनामिति बोध्यम् । यद्यपि तारकं सर्वविषयम् (यो. सू. ३।५४) इत्यागामिसूत्रे विवेकज्ञानमेव, तारकं प्रातिभं च वक्ष्यते तथाप्यत्र प्रातिभादिति हेतुवचनाद्विवेकज्ञानपूर्वरूपमेव लक्षणया प्रातिभं तारकं चेति व्याख्यातम् ॥ ३२ ॥

इदानीं संयमस्य सत्त्वपुरुषान्यताख्यातिरूपां मुख्यां सिद्धिं विवक्षुस्तत्संयमहेतुभूतायाश्चित्तसंविदः कारणमाह—

## हृदये चित्तसंवित् ॥ ३३ ॥

यदिदमस्मिन्बृहत्वाद्ब्रह्मणो जीवस्य पुरे शरीरे दहरं सगतं पुण्डरीकाकारं वेश्म तत्र विज्ञानं विज्ञानवृत्तिकमन्तःकरणं ब्रह्मणः सिंहासनकल्पं विद्यते । अतस्तस्मिन्हृदयाख्ये वेश्मनि संयमाच्चित्तसाक्षात्कारो भवतीत्यर्थः । एवंभूतेषु केषु संयमेषु भावनाप्रकारो योगशास्त्रविशेषाद्गुरुमुखाच्च प्रत्येतव्यः ॥ ३३ ॥

चित्ते च ज्ञाते ततो विवेकेनात्मसाक्षात्कारो भवतीति क्रमानुसारेणाह—

## सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३४ ॥

सत्त्वाधिक्याद्बुद्धिः सत्त्वम् । यद्बुद्धिसत्त्वं प्रख्याशीलतया समानसत्त्वाधीनवृत्तिके रजस्तमसी अभिभूय सत्त्वपुरुषान्यतासाक्षात्काररूपेण परिणतं प्रकृष्टज्ञानैश्वर्यानन्दादिमयमात्माकारतयाऽऽत्मकल्पं तस्मादपि परिणामिनोऽत्यन्तविधर्मा पुरुषः । परिणामशून्यत्वात् । अत एव शुद्धोन्यश्चितिमात्ररूपः । एवं च तादृशचित्तेनासंकीर्णस्य बाह्याद्याकारचित्तेनासंकीर्णत्वमर्थात्सिद्धमित्यत्यन्तासंकीर्णत्वं पुरुषस्य । एवं तयोरत्यन्तासंकीर्णयोर्यः प्रत्ययाविशेषः प्रत्यययोर्विविच्याग्रहणं स भोगः ।

अयमविवेको बुद्धिधर्मः । तत्र बुद्धेः प्रत्ययः सुखादिमती विषयाद्याकारवृत्तिः । पुरुषस्य च प्रत्ययो बुद्धिवृत्तिप्रतिबिम्बावच्छिन्नश्चैतन्यांशः सुखाद्यात्मकशब्दाद्यनुभवनामा । यद्यपि पौरुषेयः प्रत्ययः पुरुषातिरिक्तो न भवति तथापि दृश्योपरागेण परिच्छिन्नोंऽश एव प्रत्ययः । पुरुषस्त्वपरिच्छिन्नो महाकाशवदिति तयोर्भेदः ।

तयोरविवेके बीजं तु पुरुषस्य दर्शितविषयत्वम् । यतो बुद्ध्या पुरुषे प्रतिबिम्बमर्पितं ततो जपास्फटिकयोरिव धर्मसंकराद्विवेकः । धर्माविवेकेनैव च धर्मिणोः सांकर्यम् । तद्धर्मविवेकेनैव निरसितुं शक्यत इति धर्मविवेकसंयमः कार्य इति प्रतिपादयितुमत्र भोगो लक्षितः ।

एवमुभयात्मकस्य भोगस्य मध्ये यः सत्त्वस्यांशो भोगप्रत्ययः स परप्रयोजनकत्वाद्दृश्यः । यस्तु तस्मात्परार्थादन्यो विशिष्टश्चितिमात्रः पुरुषांशप्रत्ययः स

---

30. A. reads तस्मात्परार्थात् before दृश्यः.

30. A. C. read पुरुषांश: for पुरुषांश.

परस्य बुद्ध्यादेरदृश्यत्वात्स्वार्थः । तत्र यथोक्ताविवेकेन साक्षात्कारपर्यन्तात्संयमा-त्पुरुषविषयः साक्षात्कारो भवति दिव्यः । एवं चायं मुख्यो भोगोऽविविक्तप्रत्ययात्मकोंऽशभेदेनोभयोरेव भवति । यस्तु "चिदवसानो भोगः" (सां. सू. ६।५५) इति सांख्यसूत्र उक्तः स गौणः पुरुषस्यैव । यस्तु विपाकान्तर्गतो भोगः सुखा-
५ द्याकारवृत्तिरूपः स बुद्धेरेव । तावेतौ भोगापवर्गौ बुद्धावेव वर्तमानाविति तत्र तत्र भाष्यात् । स हि तत्फलस्य भोक्तेति तत्र तत्र भाष्यकृता विपाकफलस्य सुखादेर्भोगान्तरवचनाच्चेति बोध्यम् ।

नन्विदं पुरुषज्ञानं किं बुद्धेरुत पुरुषस्य । आद्ये बुद्धेश्चेतनत्वापत्तिः । अन्त्ये स्वस्य स्वज्ञेयत्वे कर्तृकर्मविरोधः सदैव ज्ञानप्रसङ्गश्चेति चेन्न । बुद्धिसत्त्वधर्मेण
१० पुरुषाकारप्रत्ययेन जडतया पुरुषो न भास्यते, किं तु पुरुष एव स्वस्वरूपाकारां बुद्ध्यारूढां वृत्तिं स्वस्मिन्प्रतिबिम्बितां पश्यतीत्यदोषात् । एवं च स्वप्रतिबिम्ब-वत्स्वाकारबुद्धिवृत्तेः प्रतिबिम्बनात्मकमेव दर्शनं पुरुषस्य पुरुषज्ञानम् । यथा घटाद्याकारवृत्तिप्रतिबिम्बनरूपं वृत्तिदर्शनमेव पुरुषस्य घटदर्शनम् । न चात्र कर्तृकर्मविरोधः । तत्र हि स्वस्मिन्स्वसंबन्धानुपपत्तिरेव बीजम् । प्रकाशसंब-
१५ न्धस्यैव प्रकाश्यत्वात् । स च संबन्ध एकस्मिन्नपि बिम्बप्रतिबिम्बाख्यरूपभेदे-नोपपन्नः । आत्माकारवृत्त्यवच्छिन्नो हि ज्ञाता, केवलश्च ज्ञेय इति विशेषात् । स्वप्रकाशत्वं चात्मनः स्वज्ञेयत्वमेव । "चेतनात्मा स्ववेदन" इति स्मृतेः । एतेनात्मनो ज्ञेयत्वाभाव एवेति चिन्त्यम् ।

यत्तु वृत्तिव्याप्य एवात्मा न फलव्याप्य इति, अत्र केचित् । फलव्याप्य-
२० त्वस्य सामान्यतो व्यवहारहेतुतया क्लृप्तत्वेन चैतन्याख्यफलव्याप्यतां विना चैत-न्यव्यवहारानुपपत्तिः । अन्यथा घटादिव्यवहारस्यापि वृत्तिव्याप्यत्वेनैवोपपत्तौ बिम्बप्रकाशकतया चैतन्यकल्पनावैयर्थ्यापत्तेः ।

यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह । ( तै. २।४ )
इति त्वस्मदादिमनोवृत्त्यगोचरत्वमेव प्रतिपादयति ।

२५ अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति । ( का. २।१२ ) इति श्रुत्या योगिमनोविषयत्वावगमाच्च । पुरुषस्यैव स्वज्ञातृत्वं श्रुतिराह "विज्ञातारमरे केन विजानीयात्" (बृ. २।४।१४) इति । आत्मा यदि न नित्य-ज्ञानरूपः स्यात्तदा केन ज्ञानान्तरेण विज्ञातारमात्मानं लोको विजानीयादिति तदर्थः । इयं हि श्रुतिर्न प्रेत्य संज्ञास्ति ( बृ. २।४।१२ ); यत्र त्वस्य
३० सर्वमात्मैवाभूत्तत्केन कं पश्येत् ( बृ. २।४।१४ ) इति पूर्ववाक्येन स्वयं ज्ञानस्वरूपोऽपि सर्वकरणाविलयात्सर्वदृश्याविलयाच्च मोक्षकाले किमपि न पश्यतीति

---

1. A. Reads भोगाख्यः after स्वार्थः.
4. B. reads विकार for विपाक.

मैत्रेयीं प्रत्युक्ते मोक्षकालेऽनभिव्यक्त्यात्मा ज्ञानस्वरूप एव मास्त्विति तदाशङ्का मनसि निधाय तन्निरासाय प्रवृत्ते 'आत्मा यदि ज्ञानस्वरूपो न स्यात्तद्विषयकज्ञानान्तरकल्पनेऽनवस्था स्यात्' इत्याशयिका । एतेनेयं श्रुतिः पुरुषस्य सर्वदा ज्ञेयत्वं वदतीति व्याख्यानं चिन्त्यम् ॥ ३४ ॥

## ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३५ ॥

ततः स्वार्थसंयमजन्यपुरुषसाक्षात्कारात् । यत्तु स्वार्थसंयमादिति तन्न । तज्जन्यायाः पुरुषज्ञानरूपसिद्धेरुक्तत्वेन चकाराभावेन च पुरुषज्ञानस्यैव पूर्वसूत्रे विशेष्यतया च तत्परामर्शस्यैवौचित्यात् । ततो मनआदीनां प्रातिभादिसंज्ञकशक्तिविशेषरूपाः सिद्धयो भवन्ति । तत्र प्रतिभोपदेशादिनैरपेक्ष्येण सूक्ष्मादीनां मानसं यथार्थज्ञानम् । तत्सामर्थ्यं प्रातिभम् । एवं श्रावणादयपि । वेदनादयस्तु त्वक्चक्षूरसनाघ्राणानां सामर्थ्यसंज्ञाः । तत्र प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम् । श्रावणाद्दिव्यशब्दानां च श्रवणम् । वेदनाद्दिव्यस्पर्शज्ञानम् । आदर्शाद्दिव्यरूपज्ञानम् । आस्वादाद्दिव्यरसज्ञानम् । वार्तातो दिव्यगन्धज्ञानम् । एतत्सर्वं कामनां विनापि जायते ॥ ३५ ॥

## ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३६ ॥

ते प्रातिभादयः । ते समाहितचित्तस्य जायमाना उपसर्गाः । तस्य समाहितस्य यद्दर्शनं पुरुषैकाग्र्यं तद्विरोधित्वात् । व्युत्थितचित्तस्य तु जायमानाः सिद्धयो भवन्ति । अतस्ता उपेक्ष्य पुरुषदर्शनाभ्यास एव कार्य इति भावः ॥ ३६ ॥

सिद्ध्यन्तरमाह—

## बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३७ ॥

चञ्चलस्वभावत्वादेकत्रानवस्थितस्य मनसो धर्माधर्मवशादेकशरीरे या प्रतिष्ठा ज्ञानहेतुः संबन्धविशेषः स बन्धः । तादृशबन्धकारणस्य कर्मणः शैथिल्यं देहबन्धनाक्षमता समाधिसामान्यबलाद्भवति । तथा 'एवंप्रकारेणानया नाड्यां चित्तं शरीरे प्रविशति निर्गच्छति' इत्येवं चित्तगतिसाक्षात्काराभिन्नस्य प्रचारसंवेदनम् । तदपि समाधिसामान्यबलजमेव । एवं कर्मनिर्मितकस्य निर्गमप्रतिबन्धकसंयोगविशेषस्य क्षयाच्चित्तप्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्क्रम्य

1. B. reads नाभिव्यक्त्यात्मा for अनभिव्यक्त्यात्मा.
6. B. C. read तत्र for तन्न.
22. B. reads चञ्चलस्य तत्र, C. reads चञ्चलत्वात् for चञ्चलस्वभावत्वात्.

शरीरान्तरेषु निक्षिपति । निक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति यथा मधुकरराजमुत्पतन्तं मक्षिका अनूत्पतन्ति निविशमानमनुनिविशन्त इति दिक् ॥ ३७ ॥

योगशास्त्रोक्तसंयमविशेषेणोदानजयात्सिद्धिमाह—

## उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३८ ॥

प्राणापानादिरूपा सर्वेन्द्रियवृत्तिर्जीवननाम्नी । न च सुषुप्तौ चक्षुराद्युपरमेऽपि प्राणादिवृत्तीनां दर्शनात्सर्वेन्द्रियाणामित्यसंगतम् । किं तु जीवनयोनिप्रयत्नवशादन्तःकरणस्यैव वृत्तिरिति युक्तमिति वाच्यम् । सुप्तेन्द्रियाणां ज्ञानकर्मलक्षणवृत्त्योरेव प्रतिषेधेन प्राणादिवृत्तेः सत्त्वेऽप्यक्षतेः । न च बाह्यवायुभिरन्तस्थप्राणानां तुल्यलक्षणत्वाद्वायुविशेषा एव प्राणादयः सन्तु, किमर्थं करणानां वायुतुल्यक्रियाकल्पनमिति वाच्यम् । प्राणाच्छ्रद्धां च वायुं च ( प्र. ६।४ ) इति श्रुतौ वायोः प्राणकार्यत्वश्रवणात् । "न वायुक्रिये पृथगुपदेशात्" (ब्र.सू. २।४।९ ) इति वेदान्तसूत्रे वायुतत्संचाराभ्यामतिरेकस्य प्राणेऽवधारणाच्च । किं चान्तःकरणस्य शोकादिना प्राणस्य कम्पादिर्दृश्यते । तत्र लाघवात्सामानाधिकरण्येन कार्यकारणभावस्यैव युक्तत्वम् । अन्यधर्मेणान्यपरिणामेऽतिप्रसङ्गाद्दहनकल्पनापत्तेश्च । तस्य च वायुरधिष्ठात्री देवता । सूर्यश्चक्षुर्वायुः प्राणः ( मु.२।१।४ ) इत्यादिश्रुतेः । तस्मात्तेषामेव परिणामभेदाः प्राणाः । ज्ञानादिहेतुपरिणामास्तु करणानीति भेदः । देवतयाऽभेदात्तु सूर्यश्चक्षुरिति वायुः प्राण इति व्यवहारः ।

यत्त्वत्र भाष्ये प्राणादिजीवनशब्दाभ्यां प्राणादिनामकवायुक्रियाविशेषहेतुः प्रयत्नभेद एवोक्तः, स च करणनिष्ठ इति भाष्यार्थ इति तन्न । तस्य क्रिया पञ्चतयी मुखनासिकागतिः प्राण इत्यग्रिमभाष्ये प्राणादीनां गत्यादिवचनेन विरोधात् । अत एव लिङ्गशरीरमध्ये प्राणा न गण्यन्ते । करणे प्रवेशात् । तस्य करणसामान्यस्य क्रियोपलक्षितपरिणामभेदः पञ्चविधः । तत्र प्राणो मुखनासिकागतिराहृदयवृत्तिः । सममनुरूपं नाडीषु रसानां नयनात्समानो हृदयान्नाभिपर्यन्तवृत्तिः । मूत्रपुरीषगर्भाणामपनयनहेतुरपानो नाभेः पादतलपर्यन्तवृत्तिः । ऊर्ध्वगतिमत्त्वाद्रसाद्यूर्ध्वनयनाच्चोदानो नासिकाग्राद्ब्रह्मरन्ध्रपर्यन्तवृत्तिः । सर्वदेहव्यापिवृत्तिकोऽञ्चलनादिहेतुर्व्यानः । एषां प्राणः प्रधानम् । प्राणो यदश्नाति पिबति तेनैवान्येषां धारणात् । प्राणमुत्क्रामन्तमनु सर्वे प्राणा उत्क्रामन्ति (बृ.४।४।२) इति तदुत्क्रमे सर्वेषामुत्क्रमणश्रवणाच्च । अतो मुख्यनाम्ना सर्वेषां व्यवहारात्पञ्च प्राणा इत्यादिव्यवहारोपपत्तिः । तस्योदानस्य शास्त्रोक्तसंयमेन जयाज्जलपङ्ककण्टकादिष्वसङ्गो विकारहेतोः संयोगस्य तैरभावः । तथाऽर्चिरादिमार्गगमनाय स्वेच्छया मरणकाल उत्क्रान्तिश्च भवति ॥ ३८ ॥

## समानजयाज्ज्वलनम् ॥ ३९ ॥

संयमविशेषेण समानजयात्तेजस उपध्मानं कृत्वा सततिनस्वशरीरं ज्वलयति दहतीत्यर्थः ॥ ३९ ॥

## श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४० ॥

५ सर्वश्रोत्राणामाकाशं कर्णशष्कुल्यवच्छिन्नं प्रतिष्ठाधिष्ठानम् । तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात् । इन्द्रियाणां प्रकाशात्मकतया प्रकाशात्मकान्तःकरणोपादानकत्वेन भूतोपादानकत्वाभावात् । तन्नद्भूतसंसृष्टतयोत्पत्तेस्तु परेषां भौतिकत्वव्यवहारः । शब्दस्य वायुपरिणामत्वे तद्द्वाराधिष्ठानमाकाशोपादानकत्वे तु सम्यगेव शब्दप्रतिष्ठात्वमाकाशस्य । एवं च श्रोत्रशब्दयो-
१० राश्रय आकाशम् ।

श्रोत्राणामाकाशाश्रयत्वं पञ्चशिखेनाप्युक्तम् । तुल्यदेशश्रवणानामेकश्रुतित्वं सर्वेषां भवतीति । अस्यार्थः । कालभेदेन तुल्यदेशानि श्रवणाख्यज्ञानानि येषां पुंसां तेषामेकदेशावच्छिन्नश्रोत्रकत्वं तत्तत्काले भवतीत्यर्थः । स चैकदेशस्तत्तद्देशावच्छिन्नमाकाशम् । एवं चायःप्रतिममाहंकारिकश्रोत्रमयस्कान्तमणितु-
१५ ल्येन वक्तृवक्त्रस्थेन शब्देनाकृष्टं स्ववृत्तिपरंपरया वक्तृवक्त्रगतं शब्दं गृह्णाति । अत एव तत्तद्दिग्देशावर्तित्वेन शब्दप्रतीतिर्जीवमात्रस्योपपन्ना । एवं घ्राणरसनत्वक्चक्षूंष्यप्याहंकारिकाणि पृथिवीजलवायुतेजोरूपभूताधिष्ठानानि । स्वाश्रयवृत्तिगन्धादिगुणसहकारेणैव तेषां बाह्यपृथिव्यादिगुणगन्धादिग्राहकत्वम् ।

तदेतच्छ्रोत्रमाकाशस्य लिङ्गम् । सूक्ष्मेन्द्रियस्य निराश्रयस्थितेरभावात्
२० गन्धवत् । कर्णशष्कुली च न तस्याधारः । लोकान्तरगतिकाले तदभावात् । नापि शून्यमाधारः । अभावानभ्युपगमात् । अभावस्य भावाधारत्वासंभवाच्च । नापि पृथिव्यादिस्तदाश्रयः । आश्रयगतस्वसजातीयगुणसहकारेणैव तेषां स्वग्राह्यगुणग्राहकत्वात् । नापि कर्णशष्कुल्यवच्छिन्नः पुरुषस्तस्याश्रयः । विवरपिधानेपि तदवच्छेदेन चैतन्याभिव्यक्त्या पुरुषादेरनावृततया शब्दग्रहणप्रसङ्गात् । तस्मा-
२५ त्पिधानयोग्यं परिशेषादाकाशमेवाश्रयः ।

एवं शब्दाश्रयोप्याकाशमेव । न वायुः । द्रव्यान्तरपूरिते वेण्वादौ वायुसंयोगेन शब्दप्रसङ्गात् । न च च्छिद्रवायुसंयोगोपि शब्दकारणम् । तथासति संयोगाधारतया छिद्रस्य द्रव्यत्वसिद्धौ तस्यैव शब्दाश्रयताया युक्तत्वात् । एवमवकाशरूपानावरणमप्याकाशलिङ्गम् । अन्यथा स्थाल्यादिष्वन्तस्तेजःप्रवेशो न
३० स्यात् । न च पुरुष एवावकाशः । आवरणासंभवात् । न च दिक्कालाववकाशः । तयोर्नभःपरिणामविशेषत्वात् ।

---

2. B. reads स तावत् for सतीयत्.
3. B, C. read सत्यपि for तद्द्वारा.

तथा विभ्वप्याकाशम् । परिच्छिन्नत्वे हि मूर्तत्वापत्तावप्यत्र पृथिव्यादिस्थले मूर्तानामसमानदेशत्वदर्शनादस्य मूर्तान्तरैर्घटादिभिः समानदेशत्वदर्शनाद्विभुत्वेनामूर्तत्वसिद्धेः । किं चानावरणस्याकाशलिङ्गत्वे सिद्धे यत्र यत्रानावरणं तत्र तत्राकाशमिति सर्वमतत्वेन विभुत्वसिद्धिः । न चाकाशस्य विभुत्वे कथं कार्यत्वम्, कथं वाकाशपरिमाणकथनमिति वाच्यम् । आकाशस्याप्यन्तःकरणवद्वैशेषिकाणां पृथिव्यादिवच्च कार्यकारणरूपेण द्वैविध्यात् । तत्र कारणाकाशं तमोगुणविशेष एव । तदानीमाकाशताव्यञ्जकशब्दादिविशेषगुणाभावात् । कारणपृथिव्यादिवत् । तच्च कारणाकाशं गुणान्तरोपष्टब्धं सदंशत आदौ शब्दजननयोग्यावयवरूपेण परिणमते क्षीराब्धिरिवामृतमथनेंऽशतो दधिरूपेण । ततस्तापुसंघातेनैव महापृथिवीवदेव महाभूताकाशमहंकारापेक्षया परिच्छिन्नं वायोरावरणमुपपद्यते । एवमन्तःकरणोत्पत्तिरपि बोध्या ।

एवं च क्रियायाः करणसाध्यत्वाच्छब्दग्रहणक्रियया तत्करणं श्रोत्रमनुमीयते । न च चक्षुराद्येव तदस्तु । बधिराबधिरयोरितरेन्द्रियसत्त्वेपि बधिरस्य शब्दाश्रवणात् । तयोः श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं तन्मात्रादिसूक्ष्मशब्दग्राहकं श्रोत्रं भवति । इदमुपलक्षणं त्वग्वातयोश्चक्षुस्तेजसो रसनाजलयोर्घ्राणपृथ्व्योः संबन्धसंयमाद्दिव्यं त्वगादीत्यपि बोध्यम् ॥ ४० ॥

## कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४१ ॥

चोऽत्र वार्थे । यत्रासनादौ कायस्तत्र शरीरावच्छेदेन चाकाशं तिष्ठति । तस्याप्यवकाशदातृत्वात् । अतः कायस्य यस्तेन संबन्धः व्याप्तिरूपस्तत्र संबन्धे कृतसंयमस्तत्संबन्धं साक्षात्कारेण वशीकृत्य लघुषु वा तूलादिष्वा परमाणुभ्यः संयमेन स्वायत्तीकृताकाशसंबन्धः प्रथमं लघुर्भवति येन जले पृथिव्यामिव पद्भ्यां संचरति । तत ऊर्णनाभितन्तुमात्रे विहृत्य रव्यादिरश्मिषु विहरति । ततो यथेष्टमाकाशगतिरस्य भवति ॥ ४१ ॥

## बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४२ ॥

शरीराद्बहिर्मनसो वृत्तिलाभो बहिर्वस्तुनां संकल्पवशतारूपः सा विदेहा नाम धारणेति संज्ञिका । सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति तदा कल्पितेत्युच्यते । या तु त्यक्तशरीरस्यापि मनसो बहिर्वृत्तिः सा त्वकल्पिता ।

---

2. A. reads रूपानावरण after देशत्व.
5. C. reads परमाणु for परिमाण.
21. B. reads संबन्ध for संबन्धम्.

सा च कल्पितया साध्यते । यया साधितया परशरीराण्याविशन्ति योगिनः । सेयमकल्पिता महाविदेहेत्युच्यते । तया च प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशाः कर्म च विपाकत्रयं च रजस्तमोमूलकं तस्य समूलस्य क्षयो भवति । तेषां क्षये च निरावरणं योगिनश्चित्तं स्वेच्छया विहरति च जानाति च ॥ ४२ ॥

इदानीं ग्रहीतृग्रहणग्राह्यसंयमासिद्धिमध्ये ग्रहीतृग्रहणयोर्ग्राह्यनिरूप्यत्वादादौ तत्संयमसिद्धिमाह—

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४३ ॥**

स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं च तेषु साक्षात्कारपर्यन्तसंयमाद्भूतानां जयो वशवर्तितेत्यर्थः । पृथिव्यादिपञ्चभूतानां सामान्यविशेषसमूहरूपाणामेकैकाधिकास्तन्मात्रभिन्नाः शब्दादयो विशेषा वक्ष्यमाणैराकारादिभिर्धर्मैः सह धर्मधर्मिणोर्भेदाभेदाभ्यां स्थूलशब्देन शास्त्र उक्ताः । विशेषाश्च षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयो मधुराम्लादयः सुरभिदुर्गन्धादयश्च । एते हि नामरूपादिभिः परस्परस्माद्भिद्यन्त इति विशेषाः । आकारादयश्च—

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च ।
वृत्तिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता ॥

इति भूमेः । आकारोऽवयवसंस्थानविशेषः । वरणमावरकत्वम् । वृत्तिः सर्वभूताधारता । भेदो विदारणम् । क्षमा धारणसामर्थ्यम् ।

स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् ।
शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः ॥ २ ॥

रक्षा आवरणाद्विना रक्षकत्वम् ।

ऊर्ध्वभाक्पाचकं दग्धृ पावकं लघु भास्वरम् ।
प्रध्वंस्योजस्वि वै तेजः पूर्वाभ्यां भिन्नलक्षणम् ॥ ३ ॥
तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम् ।
चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः ॥ ४ ॥

आक्षेपः पातनम् । छायाशून्यत्वमच्छायता ।

सर्वतोगतिरव्यूहोऽविष्टम्भश्चेति ते त्रयः ।
आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः ॥ ५ ॥

सर्वतो गतिर्व्यापकत्वम् । अव्यूहः सर्वपदार्थानां प्रविरलीकरणम् । अविष्टम्भोऽवकाशः । एतत्सूत्रोक्तपञ्चरूपेष्वाद्यं रूपं भूतानाम् ।

---

1. A. reads कल्पिततया for कल्पितया.

29 B. reads पूर्व for धर्म after पूर्व.

31. A. reads पञ्च for रूपम्.

द्वितीयं रूपं स्वरूपं तु सामान्यं साधारणलक्षणम्। यथा भूमेः सांसिद्धिककाठिन्यरूपमूर्तिव्यङ्ग्या पृथिवीत्वजातिः । सामान्यविशेषयोरभेदात्तु मूर्तिर्भूमिरिति भाष्ये प्रयुक्तम् । स्नेहव्यङ्ग्यजलत्वजातिर्जलस्य । औष्ण्यव्यङ्ग्यतेजस्त्वजातिस्तेजसः । वहनशीलत्वरूपप्रणामित्वव्यङ्ग्यवायुत्वजातिर्वायोः । विभुत्वव्यङ्ग्याकाशत्वजातिराकाशस्य । कार्यरूपेणाकाशस्याप्यनेकत्वात् । इदं चोक्तशब्दादिविशेषाणां सामान्यम् । ते हि तां तां जातिमितरेभ्यो व्यावर्तयन्ति । तत्तज्जात्याश्रयाणां च परस्परं भेदं कुर्वन्ति । तदुक्तमेकजातिसमन्वितानामेषां तत्तद्रसादिधर्ममात्रेण सजातीयान्तराद्व्यावृत्तिरिति ।

सामान्यविशेषसमुदायोत्र शास्त्रे द्रव्यम् । अतिरिक्तावयव्यभ्युपगमेपि तयोरभेदाभ्युपगमात् । अन्यथा घटो मृत्तन्तवः पट इत्यभेदप्रत्ययानुपपत्तेः । अवयवानपलापाच्च । तदपलापे तदाधारतानुपपत्तेश्च । तदतिरिक्तावयव्यनुपलब्धेश्च । तत्र सामान्यं नाम घटे घटव्यक्तिरूपघटपरमाणुमत्त्वम् । रूपक्रियादीनामप्यसमन्वेतद्रव्यत्वात् । सर्वत्र तत्तद्व्यक्त्यनुगमोस्त्येवानुगताकारप्रतीतिजनक इति बोध्यम् । न च समूहमात्रस्य द्रव्यत्वे वनस्याप्येकद्रव्यत्वापत्तिः । समुदायस्य द्वाभ्यां प्रकाराभ्यां स्थितेः । तथा ह्येकः शब्देनानुपस्थितभेदकावयवेष्वनुगतो यथा शरीरं वृक्ष इत्येकद्रव्यरूपः समूहो यूथं वनमिति चानेकद्रव्यरूपस्तदनुगतः समूहः । यूथादौ च विशिष्टस्यातिरिक्तत्वाभिप्रायेणावयवानुगतत्वं बोध्यम् । अपरस्तु शब्दोपस्थितभेदकावयवेष्वनुगतः समूहो यथोभये देवमनुष्याः । अत्रोभयशब्दवाच्यस्य समुदायस्योभावयवौ यस्येति व्युत्पत्त्या तदवयवभेदस्योपादानात् । देवमनुष्या इति शब्देन च बहुवचनेन च तयोरप्यनेकेऽवयवा भेदेनोपात्ताः । अत्र हि समूहस्य देवा एको भागो मनुष्या द्वितीयो भागः । ताभ्यामेव च समूहोभिधीयते ।

स द्विविधोपि समुदायो भेदाभेदाभ्यां प्रयोक्तृभिर्विवक्षितो भवति । यथाम्राणां वनं ब्राह्मणानां संघ इति षष्ठ्या भेदेन । आम्रवनं ब्राह्मणसंघ इति च कर्मधारयेऽभेदेन ।

स द्विविधोपि पुनर्द्विविधः । युतसिद्धावयवोऽयुतसिद्धावयवश्च । युतसिद्धत्वं पृथग्भावेन सिद्धत्वम् । आद्यो वनं संघो यूथ इति । तदवयवानां गोवृक्षादीनां सान्तरालत्वात् । अन्त्यः शरीरं वृक्षः परमाणुरिति । परमाणूनां पञ्चचतुरावितन्मात्रसमूहत्वात्तदवयवानां निरन्तरत्वात् । तेष्वयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः । संयोगाविशेषावच्छिन्नेष्ववयवविशेषेष्वनुगतः सामान्यविशेषसमूहोऽवयव्याख्यं द्रव्यमिति तदर्थः । अवयवसाधारणं लक्षणं तु

---

12. A. reads परमणुत्वम् for परमाणुमत्त्वम्.
16. B. om. च after यूथादौ.
27–8. A. reads चतुरादिभाग् for चतुरादि.

सामान्यविशेषसमुदायविशेषत्वमेवेति बोध्यम् । सामान्यविशेषाश्रयो द्रव्यमिति तु न युक्तम् । तन्मते तत्र समुदायोऽस्ति न वा । अन्त्येऽनुभवापलापः । तदाधारत्वासंभवश्च । आद्ये तु तदेवास्तु द्रव्यम् । तद्व्यतिरिक्तस्य तदाधारस्यानुपलम्भान्न भावस्यो यावत्समुदायवत् । एतत्स्वरूपमित्युक्तम् । स्वरूपत्वं च स्थिरतामात्रेण । विशेषा ह्यागमापायित्वान्न स्वरूपाणि । आद्यपादे तु स्थूलस्वरूपे एकीकृत्य वितर्कानुगतविषयः स्थूलमित्युक्तम् । एवमेव विचारानुगतस्य त्रैविध्यमग्रे द्रष्टव्यम् ।

एषां भूतानां सूक्ष्मं रूपं तु पञ्चतन्मात्रम् । भूतानां साक्षात्कारणत्वात् । तस्य हि भूततन्मात्रस्यैकावयवकार्यं परमाणुः । सोऽपि पदार्थविवेकेव मात्रशब्दः । द्व्यादितन्मात्रकार्यत्वात् । अन्यथा स्थूलत्वानुपपत्तेरिति । एवं परमाणोरपि सूक्ष्मत्वात्तन्मात्राणि सूक्ष्माणीत्युक्तानि । एतत्तृतीयं रूपम् ।

अन्वयाख्यं चतुर्थं रूपं तु ख्यातिक्रियास्थितिशीलाः सत्त्वरजस्तमोरूपा गुणाः । ते हि कार्यरूपो यः स्वीयो भावः स्वात्मकः पदार्थस्तत्रानुगतत्वादन्वयशब्देनोच्यन्ते । कार्यमात्रे सुखदुःखमोहात्मकत्वदर्शनेन तदनुगम उन्नीयते ।

अर्थवत्त्वरूपं पञ्चमं रूपं तु गुणेषु वर्तमानं भोगापवर्गजातं भोगविवेकख्यातिरूपं तत् । न च गुणेषु तस्य वर्तमानत्वेऽपि भूतानां कथमर्थवत्त्वम् । गुणानां तन्मात्रभूतभौतिकेष्वनुगतत्वात् । यद्यपि भोगापवर्गावन्तःकरण एव तथाप्यनागतावस्थया वासनारूपेण वा प्रलये गुणेष्ववस्थानान्न दोषः । तद्वर्तमानेषु स्थूलभूतेषु पञ्चसु पञ्चरूपेषु संयमानस्य तस्य रूपस्य दर्शनं वशीकाररूपो जयश्च भवति । तत्र पञ्चभूतस्वरूपाणि जित्वा भूतेषु जयी भवति । एकैकमात्रजयं हि गौणो भूतजयः । तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य संकल्पानुविधायिन्यो भूतकारणानि भूतप्रकृतयो भवन्तीति दिक् ॥ ४३ ॥

तेषां संकल्पानुविधायित्वे यत्फलं तदाह -

## ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ॥ ४४ ॥

तत्राणिमाऽणुत्वं संकल्पमात्रेण तत्क्षणादेवावयवापचयेन देहस्य सौक्ष्म्यम् । तद्भूतप्रकृतिवशित्वात्(१) । लघिमा लघुत्वं गुरुतरशरीरस्यापि तूलवल्लघुत्वम् (२) । महिमा महत्त्वं यथा त्रिविक्रमादेः (३) । इन्द्रियैः प्राप्तिर्यथा भूमिष्ठोऽङ्गुल्यग्रेण चन्द्रं स्पृशति (४) । एताश्चतस्रः स्थूलसंयमसिद्धयः । प्राकाम्यमिच्छा-

---

4. A. reads स्वरूपं च for स्वरूपत्वं च.
14. B. om. तु.
17. A. om. स्थूलभूतेषु.
27. B. om. त्रि before विक्रम.

नभिघातः। इच्छायां सत्यामस्य स्वरूपं भूतस्य स्वरूपैर्न विहन्यते। भूतस्वरूपाणां
जितत्वात्। यथा—जलमिव भूमिमुद्भिद्यान्मज्जत्युन्निमज्जति जल इव भूमौ मज्जति
प्रविशति च। एषा स्वरूपसंयमस्य सिद्धिः (५)। वशित्वं भूतेषु व्यष्टिषु भौति-
केषु तत्कार्येषु वशीभवति स्वेच्छया परिणामने समर्थो भवति। न तु ब्रह्माण्डा-
५ दिषु समष्टिभूतेषु। जगद्व्यापारवर्जम् ( ब्र. सू. ४।४।१७ ) इति वेदान्तसूत्रे-
णादिसर्गसामर्थ्यवर्जनात्। तत्कारणतन्मात्रविजयाद्रागादिना तेषामवश्यश्च
भवति। सूक्ष्मसंयमसिद्धिफलमिदम् (६)। ईशित्वमेषां भूतानां तन्मात्रद्वारको-
त्पत्तीर्विनाशयोर्व्यूहान्यसंस्थानविशेषे च सामर्थ्यम्। भूतानां मूलप्रकृति-
जयात्। एषान्वयसंयमसिद्धिः (७)। यत्र कामावसायित्वं सत्यसंकल्पता।
१० यथा संकल्पस्तथा भूतप्रकृतीनां गुणतन्मात्राणामवस्थानं परिणामः। विजि-
तार्थसंबन्धो हि योगी यद्वस्तु यदर्थतया संकल्पयति तत्तदर्थकमेव भवति।
विषमप्यमृतत्वेन संकल्प्य भोजयञ्जीवयति। न चैवं जलमपि तेजः कुर्याद्धर्म-
मन्यधर्ममित्यव्यवस्थैव स्यात्। शक्तेनापि पदार्थविपर्यासाकरणात्। पूर्वपूर्व-
योगिनां यथादृष्टस्यैव संकल्पात्। 'धाता यथापूर्वमकल्पयत्' ( म. ना. ५।७ )
१५ इति स्वनियमपालनार्थमन्तर्यामिणा तथैव सिद्धानां प्रेरणात्। अर्थवत्त्वसंय-
मसिद्धिरेषा (८)। इत्यष्टावैश्वर्याणि।

कायसंपद्वक्ष्यमाणा।

तद्धर्मानभिघातः पृथिवी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियाम्। शि-
लामप्यनुप्रविशति। नापः स्निग्धाः क्लेदयन्ति। नाग्निरुष्णो दहति। न वायुः प्रणा-
२० मी वहति। अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्य इति। एष
च संयमातिशये सति संकल्पं विनैव भवतीति प्राकाम्यात् पृथगुक्तः ॥ ४४ ॥

कायसंपदमाह—

**रूपलावण्यबलवज्रसंहननानि कायसंपत् ॥ ४५ ॥**

दर्शनीयः कान्तिमानतिशयबलो वज्रवद्दृढगात्रश्च भवति योगी ॥ ४५ ॥

२५ ग्रहणसंयमसिद्धीराह—

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः॥४६॥**

ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं चेति पञ्च। सामान्यविशेषात्मा
शब्दादिर्विषयः। तेष्विन्द्रियाणां वृत्तिरालोचनं विषयाकारपरिणतिश्चिन्तावधा-
रणाभिमानसंयमरूपादन्तःकरणासाधारणवृत्तिचतुष्काद्विलक्षणा दर्शनस्पर्शना-
३० दिरूपा ग्रहणम्। यद्यप्येषापि स्मृत्यनुरोधादन्तःकरणस्यैव तथापि चक्षुराद्युपष्टम्भेन
भवतीति दर्शनादिश्चक्षुरादीनामुच्यते। न चालोचनशब्दार्थो निर्विकल्पक-
ज्ञानं चक्षुरादिमात्रवृत्त्यैवास्तु। सर्ववृत्तीनां चित्तनिष्ठत्वस्य भाष्य उक्तत्वात्।
यत्तु बौद्धा इन्द्रियवृत्तिः सामान्यमात्रविषया न विशेषस्तु मनोमात्रगोचरः। तद्व-

कम्—इन्द्रियं सामान्यमात्रेण यद्ग्रहणं तदाकारं तद्रूपवृत्तिमादधदिति तन्न । तस्य विशेषस्येन्द्रियेणानालोचितस्य मनसा ग्रहणानुपपत्तेः । मनसो बहिरस्वातन्त्र्यात् । अन्यथा चक्षुराद्यगोचरार्थानामपि मनसा विशेषग्रहणप्रसङ्गात् । अन्धबधिरादिमनसापि तद्ग्रहणापत्तेश्च । बाह्यविषयसामान्यग्रहणस्य तेन तन्निष्ठविशेषग्रहणे हेतुत्वेन न दोष इति चेत्, लाघवेनेन्द्रियाणां विषयविशेषग्रहणाकारत्वकल्पनमेवोचितम् ।

इन्द्रियाणां द्वितीयं रूपं स्वरूपं तु प्रकाशात्मनो बुद्धिसत्त्वस्य कार्या येऽयुतसिद्धा अवयवभेदाः सात्त्विकाहंकाररूपास्तेष्वनुगतः सामान्यविशेषरूपयोः समूहो द्रव्यमिन्द्रियम् । तत्र विशेषरूपं ग्रहणरूपा नीलपीताद्याकारा वृत्तिरूपाः परिणामाः । सामान्यं च चक्षुरादि । इन्द्रियाणां सात्त्विकाहंकारकार्यत्वात्प्रकाशात्मकत्वम् ।

तेषामिन्द्रियाणां तृतीयं रूपमस्मितालक्षणोऽहंकारः । अभिमानात्मकवृत्तिनिरासायास्मितालक्षण इत्यस्मितावृत्तिक इत्यर्थकम् । यथा च तन्मात्रस्य सामान्यस्य भूतानि विशेषास्तथाहंकारस्य सामान्यस्येन्द्रियाणि विशेषाः । तत्कार्यत्वात् । इन्द्रियेष्वनुगतत्वाच्चाहंकार इन्द्रियाणां रूपम् । भूतानां तन्मात्रवत् ।

चतुर्थं रूपं व्यवसायात्मकमहत्तत्त्वरूपबुद्धिरूपेण परिणताः सत्त्वरजस्तमोगुणा येषामिन्द्रियाणि साहंकाराणि कार्यम् ।

पञ्चमं रूपमिन्द्रियप्रकृतिगुणेष्वनुगतं पुरुषार्थवत्त्वम् । पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं ग्रहणादिक्रमेण संयमः कार्यः । तत्र तत्र जयं कृत्वा पञ्चरूपजयात्सर्वरूपेन्द्रियजयस्तद्वशीकारः । तेन चेन्द्रियप्रकृतयः संकल्पानुविधायिन्यो भवन्तीति दिक् ॥ ४६ ॥

## ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४७ ॥

कायस्यानुत्तमो मनोवच्छीघ्रगतिलाभो मनोजवित्वम् । तच्चेन्द्रियजयात्कार्यमिति । स्थूलदेहसंपर्करहितेन विदेहानामिन्द्रियाणां चिन्तनमात्राभिमतदेशकालविषयापेक्षा वृत्तिलाभो विकरणभावः । व्याप्नोतीति यावत् । सर्वांशो व्यक्तिभेदेनानन्तानां भूतेन्द्रियप्रकृतीनां सत्त्वादिगुणानां तद्विकाराणां च स्वेच्छयानुविधानं प्रधानजयः । भूतजयरूपपूर्वभूमिकायामेव न जयं धर्मेण्नभूमि-

---

4. B. C. read अतन्निष्ठ for तन्निष्ठ.

5. A. reads विषयस्य for विषय.

19. B. reads ग्रहणाद्युक्रमेण for ग्रहणादिक्रमेण.

कार्यामेकीकृत्य सर्वजयकथनान्न विरोधः। एत एव पूर्वस्थाने प्रकृतिलया इत्युच्यन्ते। एतास्तिस्रः सिद्धयो मधुप्रतीकसंज्ञा उच्यन्ते। एताश्च करणपञ्चकस्य ग्रहणादिपञ्चरूपस्य जयादधिगम्यन्ते। प्रकृतिमहदहंकाराणामपीन्द्रियरूपेष्वन्तिमरूपत्वात्तज्जयेन तेषामेव जयो बोध्यः ॥ ४७ ॥

५ अथ ग्रहीतृसंयमसिद्धिमाह—

## सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४८ ॥

मात्रशब्देन ख्यातेः संयमरूपत्वं लब्धं धर्मधर्म्यभेदात्संयमवतश्चित्तस्य सर्वभावेषु प्रकृतितत्कार्यरूपेष्वधिष्ठातृत्वं स्वेच्छया नियोक्तृत्वं सदैव भवति। प्र-
१० कृतिपुरुषादिसर्वज्ञातृत्वं चेत्यर्थः। संयमोऽत्रापि साक्षात्कारपर्यन्तः। परार्थात्स्वार्थसंयमात् (यो. सू. ३।३५) इति सूत्रे पौरुषेयप्रत्यये सुखाद्यनुभवरूपे परिच्छिन्न एव संयम उक्तः। अत्र तु तेन संयमेन ज्ञातेऽपरिच्छिन्ने पुरुषे बुद्धिविवेकसंयम उच्यत इति विशेषः। तथा हि। निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्यातिसूक्ष्मवस्तुप्रतिबिम्बग्रहणसामर्थ्यरूपपरमस्वच्छत्वे जाते परमाणुपरममहत्त्वान्तोऽस्य वशीकारः
१५ (यो. सू. १।४०) इत्युक्तपरवशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपेण प्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम्। करणतद्विषयात्मका ये सर्वे भावाः प्रकाशजडरूपास्तास्तद्रात्मकीभूय स्वामिनं क्षेत्रज्ञं प्रत्युपस्थापकत्वम्। संकल्पमात्रेणाशेषं भोग्यं वस्त्वयस्कान्तं लोहवत्पुरुषमुपतिष्ठत इति यावत्। सर्वज्ञातृत्वं च सर्वपुरुषाणां बद्धमुक्तेश्वराणां शान्तोदिताव्यपदेश्यधर्माविशिष्टगुणानां च युग-
२० पज्ज्ञातृत्वम्। तच्च प्रकृतिपुरुषविवेकाज्जायमानत्वेन विवेकजमित्युच्यते। एषा विशोका नाम सिद्धिः। यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनत्वाच्छोकशून्यो वशी विहरति ॥ ४८ ॥

अथास्य संयमस्य मुख्यां सिद्धिमाह—

## तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ४९ ॥

२५ अपिः कैवल्यमित्यनेनान्वेति। तस्यां विवेकख्यातौ तज्जायां यथोक्तसिद्धौ च वैराग्यादसंप्रज्ञातयोगेन दुःखदोषस्य बीजानामखिलवासनाकर्मणां चित्तेन सह लये सति पुरुषस्य कैवल्यं पुनर्गुणासंयोगरूपमपि भवतीत्यर्थः। तथा हि। यदास्य योगिनः क्लेशकर्मक्षयरूपकर्तव्यसमाप्तौ 'बुद्धिसत्त्वस्यायं विवेकप्रत्यय सत्त्वं च हेयपक्षे, पुरुषश्चापरिणामी सत्त्वादन्य' इत्येवं विचारेण विरज्यमान-

4. A. C. read अपि for एव.
7. B. om च.
9. B. Reads सदेव for सदैव.
21. B. reads क्लेश for बन्धन.

स्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि तानि मनसा सहास्तं गच्छन्ति । तेषु प्रलीनेषु पुरुषस्तापत्रयं न भुङ्क्ते । तदा पर-वैराग्यावस्थायामेषां दुःखबीजगुणानां सत्त्वादिगुणस्थानां कार्यावस्थे मनसि क्लेशकर्मविपाकरूपेणाभिव्यक्तिस्वभावानां चरितार्थानां प्रतिप्रसवे मनसा सह
५ लये सति पुरुषस्यात्यन्तिको गुणवियोगः कैवल्याख्यो भवति। तदा स्वरूपप्र-तिष्ठा चितिशक्तिरेव पुरुष इति दिक् ॥ ४९ ॥

कैवल्याख्यसिद्ध्यर्थिनो योगिनो यथोक्तवैराग्यवदेव साधनान्तरमाह—

## स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनि-ष्टप्रसङ्गात् ॥ ५० ॥

१० स्थानिनः स्वर्गादिलोकाधिकारिणो देवा इन्द्रादयः। तेषां स्वर्गलोके नयनाय योगिनो निमन्त्रणे सति सङ्गस्मययोरकरणमुपायः। तत्करणे पुनरपि संसारप्र-सङ्गात् । सङ्गः प्रीतिः । स्मयश्च देवानां प्रार्थनेनात्मनि कृतार्थताभिमानः ।

तथा हि । चत्वारः खलु योगिनः प्राथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरति-क्रान्तभावनीयश्च । तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रवृत्तमात्रं न तु निष्पन्नं ज्यो-
१५ तिर्ज्ञानं यस्य स सवितर्कादिरूपापन्नप्रज्ञत्वात्प्राथमकल्पिकाख्य आद्यः। ऋतंभरप्र-ज्ञः, ऋतं सत्यमेव बिभर्तीति । परप्रत्यक्षं निर्वितर्कमत्र ऋतंभरप्रज्ञा । तद्वान् मधुभूमिको द्वितीयः । भूतेन्द्रियजयी तृतीयः प्रज्ञाज्योतिराख्यः। स हि सर्वे-षु भावितेषूत्पादितेषु कृतरक्षाबन्धो यतस्तेभ्यो न च्यवते । भावनीयेषूत्पादनी-येषु विशोकादिसिद्ध्यादिष्वसंप्रज्ञातान्तेषु विहितसाधनवान् । साधनविषयस्यैव
२० पुरुषयत्नस्य साध्यनिष्पादकत्वात् । चतुर्थोऽतिक्रान्तभावनीयः । तस्य चित्त-प्रतिसर्गोऽसंप्रज्ञातसमाधिसाध्यश्चित्तलयः । स एवैकोऽर्थः कर्तव्यत्वेन शिष्यते ।

तत्र प्रथमभूमिकायां देवानामीदृशानुग्रह एव न भवति । तृतीयचतुर्थयोस्तु देवा उपेक्षणीया एव भवन्ति । अतो मधुमतीं भूमिकां स्वस्य निष्पन्नामनुभ-वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वशुद्धिमनुपश्यन्तः स्थानैः 'इह रम्यतां कम-
२५ नीयोऽयं भोगः कमनीयेयं कन्या रसायनमिदं जरां मृत्युं बाधते वैहायसमिदं यान-ममी कल्पद्रुमाः पुण्या मन्दाकिनी सिद्धा महर्षय इमा उत्तमा अनुकूला अप्स-रसोऽत्र दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः स्वगुणैः सर्वमिदमर्जितमायुष्मता प्र-तिपद्यतामिदमक्षय्यमजरममरं स्थानं देवानां प्रियम्' इत्येवमुपनिमन्त्रयन्ते । अज-रत्वं सदा नवत्वम् । उपनिमन्त्र्यमाणश्च घोरेषु संसाराङ्गारेषु पच्यमानेन मया
३० जननमरणान्धकारे विपरिवर्तमानेन कथंचिदासादितः क्लेशतिमिरविनाशी यो-गप्रदीपः । तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः । स खल्वहं लब्धालो-

16. A. om. अत्र.
21. B. reads साध्यः for साध्यचित्तलयः.

कः कथमनया मृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तसंसाराग्नेरात्मानमिन्धनी-
कुर्यामिति विषयप्रीतिजदोषरूपान्सङ्गदोषांश्चिन्तयेत् । एवं विचार्य सङ्गं त्यक्त्वा
स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः
समाधिं भावयेत्कुर्यात् । एवं सङ्गं त्यक्त्वा 'एवमहं देवानां प्रार्थनीयः' इति स्मयमपि
५ न कुर्यात् । स्मयादयं सुस्थितंमन्यतया मृत्युना केशगृहीतमात्मानं न भाव-
यिष्यति । एवं चास्यान्तरप्रेक्षी नित्यं यत्नप्रतिकार्यः प्रमादः काये मृत्युलब्धविवरः
क्लेशानुत्तम्भयिष्यति । ततश्च पुनरनिष्टप्रसङ्गः । एवमस्य सङ्गस्मयावकुर्वतो भा-
वितोऽर्थो दृढो भविष्यति भावनीयश्चाभिमुखो भविष्यति ॥ ५० ॥

पुनः सर्वज्ञतासाधकं संयमान्तरमाह—

## १० क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५१ ॥

विवेकात्पूर्वमुक्तसत्त्वपुरुषान्यताख्यातिरूपाज्जायमानं ज्ञानं विवेकजं ज्ञानम् ।
इतरेतरव्यावृत्ततया सर्ववस्तूनामशेषविशेषैः साक्षात्करणम् । तत्क्षणतत्क्रमयोः
संयमादपि भवति । प्रतिक्षणं सर्ववस्तुपरिणामात्क्षणेषु तत्क्रमेषु च साक्षात्कृ-
तेषु सर्ववस्तूनां परिणामतत्क्रमयोः साक्षात्कारात्सर्ववस्तूनां विवेकेन ज्ञानं भ-
१५ वतीति भावः ।

तत्र क्षणो नाम यथा लोष्टादेर्भिद्यमानस्य परमापकर्षावधिः सत्त्वादिगुणवि-
शेषः परमाणुरेवं कालस्यापकर्षावधिभूतोऽवयवविशेषः पूर्वापरांशशून्यो यः स
क्षणः । यद्वा यावता समयेन चलितः परमाणुः पूर्वदेशं जह्यात्तावान्कालः, विभक्तो
वा यावता कालेनोत्तरदेशेन संयुज्येत तावान्कालः क्षणः । अवयविद्रव्यस्य
२० देशत्यागो बहुक्षणेनापि, कदाचिदवयवानां क्रमेण संचारादत उक्तं परमाणु-
रिति । देशस्यावयविनः क्रियया ऽनेकक्षणेन जनितदेशत्यागव्यावृत्तमे
चलित इति ।

क्रमस्तु तत्प्रवाहाविच्छेदः । तेषां क्षणानां यः प्रवाह उत्तरोत्तरभावेनावस्थानं
तस्याविरलतेति तदर्थः ।

२५ क्षणानामव्यवहितानन्तर्यरूपतत्क्रमाणां च क्षणिकत्वादेव नास्ति वस्तुभूतः
समाहारो मेलनम् । अतो मुहूर्ताहोरात्राद्यो बुद्धिसमाहारा एव । न च स्थूल-
कालस्य वस्तुनोऽभावे कथं लोकानां तत्र यथार्थप्रतीतिः । तस्यावस्तुनो बुद्धि-
निर्माणस्यापि शब्दज्ञानानुपातित्वाद्व्युत्थितदर्शनानां भ्रान्तानां वस्तुस्वरूप-
त्वाभिमानात् । न च क्षणोऽप्येवंभूत एवास्तु । क्षणस्य वस्तुकोटौ पतितत्वात् ।

---

6. B. Reads कायः for काये.

26. B. reads मिलनम् for मेलनम्.

28. A. om. स्व.

आनन्तर्यरूपक्रमस्य क्षणरूपप्रतियोग्यनुयोगिघटितत्वेन तस्य वस्तुरूपत्वावश्यकत्वात् । तस्यैव कालविद्भिः कालत्वेन कथनात् । तस्य च क्षणद्वयावस्थायित्वाभावाद्द्रव्यान्तरेभ्यो विभागः । कालनित्यत्वप्रतिपादकश्रुतयस्तु प्रवाहरूपकालपराः । स च सत्त्वादीनां शब्दतन्मात्रस्य परिणामविशेषः । स एवास्माकमस्थिरो न तु पदार्थमात्रमिति बौद्धमताद्विशेषः । क्षणस्थास्थैर्यं प्रत्यभिज्ञाद्यभावात् ।

यत्तु पूर्वदेशविभागावच्छिन्नः परमाणुक्रियादिरेव क्षण इति तन्न । विशिष्टस्यानतिरेके विशेष्यविशेषणतत्संबन्धानां त्रयाणामपि स्थिरत्वेन क्षणव्यवहारजननाक्षमत्वात् । अतिरेके तु सिद्धं न इष्टम् । अस्माभिरपि तादृशस्यैव गुणपरिणामस्य क्षणत्वाङ्गीकारात् । नित्याखण्डकाले च न प्रमाणमस्ति । इदानीमित्यादिव्यवहाराणां खण्डकालमात्रविषयकत्वात् । दिक्त्वाकाश एव । पूर्वादिव्यवहारश्च तत्तदुपाध्यवच्छिन्नाकाशेनैव । स्थित्याधारत्वेन देशव्यवहारवत् । अत एव श्रुतिषु कचिद्दिशः श्रोत्रं कचिदाकाशाच्छ्रोत्रमिति श्रूयते तदविरुद्धमिति दिक् । क्रमोऽपि वैकल्पिक एवेति मिश्राः ।

क्षणतत्क्रमयोर्वस्तुसमाहाराभावः कुत इति चेत्, शृणु । द्वयोः क्षणयोः सहभावाभावाद्द्वयोः सहभुवोः क्रमस्यासंभवाच्च । तथा हि । पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यमव्यवधानं क्षणान्तरस्य स क्रमः । तस्माद्वर्तमान एक एव क्षणस्तिष्ठति न पूर्वोत्तरे क्षणास्तत्सहभावेन तिष्ठन्तीत्यतो नास्ति मेलनमिति तत्समाहाराभावः । अतो मुहूर्तादिर्विकल्प एव । ये पुनर्भूतभाविवर्तमानाः क्षणास्ते सर्वेऽपि सर्ववस्तुपरिणामा एकस्यैव बाधकादर्शनात्क्षणत्वेन परिणामहेतुत्वादित्युक्तत्वाद् क्षणप्रतियोगी (यो. सू. ४।३३) इत्यादिसूत्रे व्याख्येयाः । अत एकैकेन क्षणेन सर्वो लोकः परिणाममनुभवति यतोऽतस्तत्क्षणोपारूढाः सर्वे पदार्था इति तयोः क्षणतत्क्रमयोः संयमानयोः साक्षात्काराद्खिलपरिणामतत्क्रमसाक्षात्कारद्वारा सर्ववस्तूनामन्योन्यव्यावृत्ततया स्वरूपधारणं भवतीति विवेकजं ज्ञानं भवति ॥ ५१ ॥

तस्य विवेकजज्ञानस्य सर्वविषयकस्य शिष्यव्युत्पत्तये एकमुदाहरणमाह—

**जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः**
**प्रतिपत्तिः ॥ ५२ ॥**

जातिलक्षणदेशैर्भेदावधारणासंभवे विवेकजज्ञानादेव साक्षात्कारो भवतीत्यर्थः ।

---

1. A. reads क्षणस्वरूप for क्षणरूप.
17. A. B. om. सः.
18. B. reads मिलनम् for मेलनम्.
24–6. A. om. सर्ववस्तु॰ ज्ञानस्य.

तत्र तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताहेतुर्यथा गोवडवयोः । तुल्ययोर्देशजातितुल्यत्वे लक्षणमन्यताहेतुर्यथा कालाक्षीयं गौरियं स्वस्तिमती गौरिति । लक्षणमभिव्यक्तो धर्मभेदः । एवं द्वयोरामलकयोर्जातिलक्षणसारूप्ये देशभेदोऽन्यत्वकर इदं पूर्वमिदमुत्तरमिति । यत्र जात्यादिभिरन्यतानुमानं न संभवति तादृशं ५ विवेकजज्ञानस्योदाहरणम् । यथा यदा पूर्वदेशस्थमामलकं विषयान्तरव्यग्रस्य ज्ञातुर्विवेकं करिष्यतो योगिन उत्तरदेशे स्थाप्यते तदा द्वयोरामलकयोरेकदेशत्वे सति पूर्वदेशोपलक्षितमिदमिदं चोत्तरदेशोपलक्षितमिति विवेकानुपपत्तिः। तयोर्जात्यादिभिरविकसाम्यात् । योगिनोऽसंदिग्धेन तत्त्वज्ञानेन भवितव्यम् । अत उक्तं सूत्रकारेण ततो विवेकज्ञानात्प्रतिपत्तिरिति ।

१० कथमेतदितिचेत्, शृणु । आमलकस्य क्षणेन सह वर्तते यः पूर्वो देशः स आमलकान्तरस्य क्षणेन सह वर्तमानादुत्तरदेशाद्भिन्नः । अतः स्वदेशक्षणप्राप्त्या ते आमलके भिन्ने।तत्क्षणविशिष्टस्यैकदेशसंबन्धासंभवात्।अतो भिन्नयोः पूर्वोत्तरदेशसंबन्धक्षणयोः साक्षात्कारस्तयोरामलकयोरन्यत्वहेतुर्यथाकविवेकग्रहे कारणम्। य आमलकपूर्वपूर्वापरदेशाभ्यां पौर्वापर्यपरिणामक्षण आसीत्तयोर्देशान्तरकृत- १५ पौर्वापर्यपरिणामक्षणविशिष्टत्वमनुभवन्संयमी ते भिन्ने प्रत्येति । एवं द्विविक्षणमात्रेण ज्येष्ठकनिष्ठयोर्ज्येष्ठकनिष्ठताज्ञानं क्षणक्रमसाक्षात्कारेणैवेति बोध्यम् । एतेन स्थूलदृष्टान्तेन तुल्यजातिलक्षणदेशस्य परमाणुसामान्यस्यान्योन्यविवेकप्रत्यय ईश्वरस्य योगिनश्च प्रकृत्यादिप्रेप्सणमभीप्सोः क्षणतत्क्रमानुभवाद्बोध्यः। तथा हि । पूर्वयोः परमाणुदेशतत्साहित्यसंपादकक्षणयोः साक्षात्करणादयं पूर्व- २० देशस्थोऽयमुत्तर इति विवेकः । यत उत्तरस्य पूर्वदेशानुपपत्त्योनरस्य स्वदेशप्राप्तिर्भिन्ना । तयोः साहित्यसंपादकक्षणभेदात् ।

केपि वैशेषिका मुक्तात्मनां प्रलये परमाणूनां चानन्यजातिलक्षणदेशानामन्योन्यं विभाजकान्तरासंभवेन तत्कालिकत्वेनान्त्यो विशेषनामा कश्चन भेदको योगिग्राह्यःपदार्थःस एतेदानीं परमाणूनामप्यन्यतामस्थयं करोतीति वदन्ति, २५ तन्मतेपि संस्थानरूपमूर्तिव्यवधानजातिलक्षणदेशयोगिबुद्धिगम्यक्षणभेदोऽन्यत्वहेतुरस्त्येवेति समानम् । तत्र संस्थानाद्भेदः प्रसिद्ध एव । संस्थानमवयवसंनिवेशः । व्यवधिर्यथा कुशपुष्करद्वीपयोर्देशस्वरूपयोः । अत एवोक्तं वार्षगण्येन मूर्तिव्यवधिजात्यादिभ्यो भेदेनातिरेकेण विशेषस्याभावान्मूलेषु नित्यद्रव्येषु पृथक्त्वं विशेषपदार्थो नास्तीति । अस्य मते बद्धावस्थायां ये मूर्त्यादयः

5. B. C. om. विवेकज० यदा पूर्व.
7. A. C. read वा for चोत्तरदेशोपलक्षितम्.
17. A. C. read अन्योन्यम् for अन्योन्य.
24. B. om. अपि.
29. A. reads पृथकत्वं for पृथक्त्वम्.

स्थितास्त एव मुक्त्यवस्थायामपि योगिभिर्गृह्यमाणा मुक्तानामन्योन्यं भेदव्यवहारजनकाः । एवं परमाण्वादीनामपि प्रलये भेदव्यवहारः स्वगतधर्मस्य कार्यभेदादृक्लक्षणभेदाद्वेति मन्तव्यम् । मूलस्य प्रधानस्य तु कभेदहेत्वभावाद्भेदो नास्त्येव । तदुक्तं कृतार्थं प्रति नष्टमप्यनष्टम् ( यो. सू. २।२२ ) इति ॥ ५२ ॥
५ इदानीं विवेकजज्ञानस्य मोक्षोपयोगमाह—

## तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५३ ॥

इतिर्हेतौ । यतो विवेकजज्ञानं सर्वविषयादिरूपमतः सर्वत्र दोषसाक्षात्कारेणोत्कटवैराग्यद्वारा संसारतारकमित्यर्थः । तारकम् । लौकिकसामग्रीं विनैव
१० सत्त्वपुरुषान्यतासंयमेन क्षणतत्क्रमसंयमेन बोधाधितं यथार्थज्ञानसामर्थ्यं प्रतिभा तदुत्थम् । प्रतिभोत्थत्वं चानौपदेशिकत्वात् । तच्च सर्वविषयं न किंचिद्विषयम् । सर्वथाविषयं सर्वैः प्रकारैरतीतानागतादिरूपैः स्वगतसर्वविशेषैः सर्वविषयकम् । ईदृशं च न शाब्दम् । तस्य सामान्यमात्रविषयकत्वात्, परिच्छिन्नविषयकत्वाच्च । अक्रमम् । एकक्षणे बुद्धिदृश्युपारूढसर्वविषयम् । एवंप्रका-
१५ रेण विवेकजज्ञानं पूर्णम् । अस्यैवांशो योगप्रदीपो मधुमती भूमिः । यस्यां स्थान्युपनिमन्त्रणम् । सा हि विवेकजज्ञानविषयैकदेशप्रकाशकत्वादंशः । तत आरभ्यास्य पूर्तिपर्यन्तं यत्किंचिन्मध्ये ते सर्वेऽस्यैवांशाः सवितर्कादिरूपाः परिणामत्रयसंयमादिरूपाश्च संप्रज्ञातयोगभूमिका योगबहिरङ्गत्वेनाल्पतया योगप्रदीपत्वेन नोक्ताः । अत एव विवेकजज्ञानस्य सूर्यतुल्यत्वमन्यत्रोक्तम् ॥ ५३ ॥
२० नन्वेवं सति किमेतादृशज्ञानानन्तरमेव मोक्ष उत तद्विनापीति संशय उत्तरमाह—

## सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वेत्यादिः । एवं चेतरसिद्ध्यनपेक्षा सुतरां कैवल्य इति बोध्यम् । बुद्धिसत्त्वस्य पुरुषेण सह यदा शुद्धिसाम्यं तदैव
२५ मोक्षो न तूक्तसिद्ध्यपेक्षेत्यर्थः । यदा हि निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रत्यये विवेकख्यातिमात्राधिकारं कर्तव्यताबुद्धिर्यस्य तादृशं दग्धान्यनागतक्लेशबीजरूपाणि विपाकारम्भसंभावनाजानि यत्र तादृशं भवति तदा पुरुषस्य शुद्ध्या सारूप्यं प्राप्तमिव भवति । बुद्धेर्दुःखात्मकत्वेनात्यन्तशुद्धेः

---

6. A. reads सर्वथा for सर्वथा.
10. B. C. read सामर्थ्य for सामर्थ्यं.
13. A. reads अशाब्दम् for शाब्दम्.
13. A. reads अविषयक for विषयक.

कदाप्यभावात्। किमंशेन तर्हि साम्यमिति चेच्छृणु। बुद्धिधर्मत्वात्पुरुष उपचरितस्य प्रत्ययाविशेषात्मभोगस्याभावः पुरुषस्य शुद्धिः। बुद्धेरपि जीवन्मुक्तिदशायां विवेकित्वेन तादृशभोगाभावेन शुद्धिसाम्यात्। साक्षितामात्ररूपभोगव्यावृत्तय उपचरितेत्युक्तम्। प्रत्ययाविशेषरूपो हि भोगः। तस्याविवेकस्योपाधिधर्मत्वात्।
5 एवं च यथा साक्षी निरभिमान एवं चित्तस्य निरभिमानत्वं मोक्षहेतुर्नैश्वर्यादिकमिति फलितम्।

अस्यां च शुद्धिसाम्यावस्थायां जातायां प्रारब्धप्रतिबन्धनिवृत्त्यनन्तरं कैवल्यं भवतीश्वरानीश्वरसाधारण्येन। पूर्वोक्तसंयमानां तत्तत्सिद्धिकामनयानुष्ठानात्प्राप्तज्ञानक्रियाशक्तिमानत्रेश्वरः। तादृशैश्वर्ये कामनाभावात्तल्लाभेऽपि तैः प्राप्त-
10 विवेकजज्ञानस्यानीश्वरस्य चेतरस्य चोत्पन्नात्मज्ञानस्य दग्धक्लेशबीजस्य मुक्त्यर्थं ज्ञानान्तरे न काचिदपेक्षास्ति। न चैवं किमर्थं सिद्धीनां कथनम्। समाधिजस्य क्रियाशक्तिरूपाणिमाद्यैश्वर्यस्य सार्वज्ञ्यस्य च वैराग्यरूपसत्त्वशुद्धिद्वारा मोक्षार्थत्वेन कथनात्।

परमार्थतस्तु सत्त्वपुरुषान्यताज्ञानादेवाज्ञाननिवृत्त्या कैवल्यम्। तथा
15 ह्यज्ञाने निवृत्त उत्तरक्लेशनिवृत्तौ तदभावात्कर्मविपाकाभावः। कैवल्यं च चरिताधिकाराणां गुणानामस्यामवस्थायां पुरुषं प्रति दृश्यत्वेनानुपस्थानम्। तदा हि पुरुषः सुखदुःखमोहात्मकगुणादर्शनेन चित्तज्योतिर्वियोगात्स्वरूपमात्रज्योतिर्दुःखादिप्रतिबिम्बरूपमलरहितः सन्केवल ईश्वरेऽविभागं प्राप्नोतीति शिवम्॥ ५४॥

इति सांख्यप्रवचने पातञ्जलसूत्रवृत्तौ योगशास्त्रे विभूतिपादस्तृतीयः॥

---

11 B. om न before काचित्.
15. A. reads अज्ञाननिवृत्तिः for अज्ञाने निवृत्ते.
15. A. om. च.

## चतुर्थः कैवल्यपादः ।

इदानीं समाधिसिद्धेरुत्कर्षं दर्शयितुं पञ्चप्रकारां सिद्धिमाह—

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥**

तत्रैहिकेन कर्मणा देवादिदेहान्तरजन्ममात्रेण भवन्त्यणिमादिसिद्धिर्जन्मजा।
५ असुरादिभवनेषु रसायनादिजा कायवज्रसारत्वादिसिद्धिरोषधिजा । मन्त्रजपादिभिर्याणिमाद्याकाशगमनादिसिद्धिः सा मन्त्रजा । तपसा संकल्पसिद्धिस्तपोजन्या सा । समाधिजा व्याख्याता ॥ १ ॥

अथ निर्माणकायनिर्माणेन्द्रिययोरुत्पत्तिप्रकारमाह—

**जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥**

१० अन्यजातिपरिणतानां कायेन्द्रियाणां पूर्वपरिणामापाय उत्तरपरिणामोपजनिस्तत्कायेन्द्रियप्रकृतिभूतानामवयवानामापूराद्नुप्रवेशाद्भवति । लोके वल्मीकादीनां क्षुद्रपरिणामापाये तदुत्तरमहापरिणामोत्पत्तेर्भूतप्रकृतीनामनुप्रवेशेन दृष्टत्वात् । अतो योगिनामपि देहेन्द्रिययोः परिणामान्तरकाले धर्मा निमित्तापेक्षाः कायेन्द्रियप्रकृतय आपूरणेन स्वस्वजातीयं विकारमुपकुर्वन्ति । तत्र
१५ कायप्रकृतिः पञ्चभूतानि। इन्द्रियप्रकृतिश्चाहंकारः। दृश्यते लोके तृणराशिनिक्षिप्तस्य वह्निकणस्य क्षणादेव प्रकृत्यापूरेण गगनव्यापी परिणामः । एवमेव वामनादीनां त्रिभुवनव्यापित्वे । कृष्णेन चार्जुनादिभ्यो विश्वरूपप्रदर्शने प्रकृत्यापूरेण तडित्वत्क्षणभङ्गुरेणेति बोध्यम् । एवं शरीरस्य तारुण्यवार्धकादिकमपि । एवमणिमादिकं प्रकृत्यपगमादिति बोध्यम् । अगस्त्यादीनां समुद्रपानं तोयादि-
२० प्रकृत्यपगमेनेति बोध्यम् । अत्र जात्यन्तरशब्देन योगिनां गजतुरगादिवैभवं कायव्यूहादिकं च ग्राह्यम् ।

स एकधा भवति त्रिधा भवति पञ्चधा ।
शतं च दश चैकश्च सहस्राणि च विंशतिः ॥ ( छा. ७।२६।२ )

इति कायव्यूहे श्रुतिः ॥ २ ॥

---

10. A. C. read उपजनः for उपजनिः.
18. C. reads तडिद्वत् for तडित्वत्.

ननु योगजधर्मबलात्प्रकृत्याकर्षे प्रकृतिस्वातन्त्र्यासिद्धान्तहानिरत आह—

## निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

धर्मादिरूपं निमित्तकारणं न प्रकृतीनां प्रेरकम्। परतन्त्रेण कार्येण स्वतन्त्रस्य कारणस्याप्रवर्तनात्। नन्तु प्रकृतेः स्वातन्त्र्ये धर्मादिकं व्यर्थमित्यत आह—वरणेत्यादि। यथा क्षेत्रिकोऽद्भिः पूर्णात्केदारात्समं निम्नं निम्नतरं वा केदारान्तरं तामिरद्भिः प्लिवयिषुर्नापः पाणिना प्रकर्षति क्षिपति। आवरणं त्वासां भिनत्त्यालवालाख्यम्। तस्मिंश्च स्वयमेवापः केदारान्तरं गच्छन्ति। तथा धर्मेण प्रकृतीनामावरणेऽधर्मे भिन्ने स्वयमेव प्रकृतयः स्वस्वसजातीयं विकारं विकारप्रकृतीनां परिणामान्तरार्थं व्याप्नुवन्ति।

एवं क्रियावदारम्भकसंयोगोपि प्रकृतेः स्वत एव भवति। तथा हि। यथा स एव क्षेत्रिकस्तस्मिन्नेव केदार औदकान्भौमान्वा रसान्धान्यमूलान्यनुप्रवेशयितुं न समर्थः। किं तर्हि मुद्गगवेधुकश्यामाकादींस्ततोपकर्षति। अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य। । न तु प्रकृतिप्रवृत्तौ संयोगविशेषे वा धर्मो हेतुः। ऐणामकारणम्। यथा संस्कार ननुगता एव संस्कारस्योद्बोधकमात्राः। उद्बोधश्च तमोदोषरूपावरणभङ्गः। तथा प्रकृतिरेव जगत्कारणम्। कालकर्मेश्वरादयस्तु प्रकृतेः कार्यजननशक्त्युद्बोधकाः। तत्र धर्माधर्मौ स्वविरुद्धाधर्मधर्मरूपावरणभङ्गेनोद्बोधकौ। ईश्वरस्तु साम्यपरिणामादिरूपाखिलावरणभङ्गेनोद्बोधकः। कालादयस्तु धर्माद्युद्बोधकतया दण्डादयस्तु कार्यान्तराभिव्यक्तिप्रतिबन्धकतयेत्यूह्यम्। एतदेव निमित्तकारणत्वम्। अव्यभिचारात् संयोगस्यासमवायिकारणत्वमिष्यत एव। द्वारत्वात्तु न तेन प्रकृतेः स्वातन्त्र्यहानिरिति बोध्यम्। तत्र धर्मस्याधर्मापसारणद्वारा कायेन्द्रियपरिणामनिमित्तत्वम्। यथा नन्दीश्वरे। स हि नन्दिनामा मनुष्यो धर्मातिशयवशान्नन्दीश्वरो जातः। एवं बलवानधर्मोपि धर्मापसारणेन तन्निमित्तं यथा नहुषाजगरस्येति दिक् ॥ ३ ॥

यदा योगी बहून्कायान्निर्मिमीते तदा किं ते निर्माणमनोमात्रेणैव व्यवहारभाज उत तदतिरिक्तप्रातिस्विकमनोभाजस्तत्राह—

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

स्वसंकल्पेन निर्मितचित्तानि निर्माणचित्तानि निर्मितदेहसमसंख्यानि

भवन्ति । चैत्रमैत्रादिशरीरेष्वेकैकासाधारणचित्तान्वितत्वदर्शनात् । तानि चाहंकाराख्यास्मितामात्रात् । चित्तशब्दोऽत्र मनोमात्रवाची । योगिनो मनस्तु संकल्पमात्रेण निमित्तकारणं तेषाम् । एवं बुद्ध्यहंकारा अपि स्वप्रकृतिप्रधान-बुद्ध्यापूराद्भवन्तीति बोध्यम् । युक्तिसाम्यात् । ततस्तानि सर्वाणि शरीराणि
५ सचित्तानि भवन्ति । ननु व्यापकस्य निर्मातृचित्तेनैव कायव्यूहेषु वृत्तिसंभवे-नानेकतत्कल्पना व्यर्थेति चेन्न । समाधिभोगयोर्ज्ञानाज्ञानयोश्चैकदैकस्मिंश्चित्ते विरोधेन तद्भेदसिद्धेः । यदा तु योगी जीवभेदानेव स्वदेहान्निर्मितेषु देहेषु यो-जयति तदाऽवश्यमन्तःकरणभेदापेक्षणाच्च ।

> तस्माच्च मनसो भेदा जायन्ते चैत एव हि ।
> १० एकधा स द्विधा चैव त्रिधा च बहुधा पुनः ॥
> योगीश्वरः शरीराणि करोति विकरोति च ।
> प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।
> संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥

इति स्मृतेः । कदाचित्तु योगिनामेकान्तःकरणेनैव नानादेहेषु व्यवहारोऽपि ।
१५ स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात् । न चैवमात्मनानात्वकल्पना व्यर्था । चित्तभेदेनैव ज्ञानाज्ञानाद्युपपत्तेरिति वाच्यम् । बन्धमोक्षव्यवस्थानुरोधेन तन्सि-द्धेरिति दिक् ॥ ४ ॥

तत्र विशेषमाह—

## प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

२० तेषां बहूनां चित्तानां कथमेकचित्ताभिप्रायानुसारिणी प्रवृत्तिः स्या-दिति योगी पूर्वसिद्धं यच्चित्तं तदेव सर्वचित्तानां प्रयोजकं निर्मिमीते नियामकं करोति । एवं च तदभिप्रायेण तेषां प्रवृत्तिः । ऐश्वर्यनिर्वाहार्थमनेकचि-त्तेष्वन्तर्यामिविधया पूर्वसिद्धं चित्तं स्थापयित्वा तत्र प्रवृत्तिभेदं संपादयतीति भावः । एतेनैकाभिप्रायानुरोधः स्वपरप्रतिसंधानं चोपपादितम् । एतेन विष्णवा-
२५ दीनामंशावतारा अपि व्याख्याताः । तेष्वात्मन एकत्वेऽप्यंशांशिभावव्यवहार उपाधीनामंशांशिभावेनौपाधिक इति दिक् ॥ ५ ॥

अथोक्तपञ्चविधसिद्धियुक्तचित्तानां मध्ये मुक्तियोग्यं चित्तमाह—

## तत्र ध्यानजमनाशयम् ॥ ६ ॥

तेषु यद्ध्यानजं ध्यानसंस्कृतं निर्माणयोग्यं चित्तं तदेवानाशयं क्लेशकर्म-

---

25. O. reads भावाः for भाव.

वासनारूपाशयरहितम् । योगेनैव ज्ञानोत्पत्त्या वासनोच्छेदो न मन्त्रादिभिरित्यर्थः ॥ ६ ॥

इतरेषां तु कर्माशयोरस्त्येव, त्रिविधकर्मवत्त्वादित्याह—

## कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

५ योगिनो निष्पन्नयोगस्य कर्म कायादिव्यापारोऽशुक्लाकृष्णः । पुण्यपापाहेतुत्वात् । इतरेषामयोगिनां जन्मादिसिद्धानां त्रिविधं शुक्लं कृष्णं शुक्लकृष्णं चेति । तत्र कृष्णं तमोवर्धकतया दुःखफलदं यथा दुरात्मनाम् । शुक्लं सत्त्ववर्धकत्वात्सुखफलदं यथा तपःस्वाध्यायध्यानवतामसंन्यासिनामपि । तस्य हि केवले मनस्यायत्तत्वेनाबाहिःसाधनाधीनतया परापीडयैवोत्पत्तेः । शुक्लकृष्णं
१० रजोवर्धकत्वात्सुखदुःखफलदम् । यथा कामिनाम् । तस्य देहेन्द्रियमनोभ्यो बहिर्यानि साधनानि तत्साध्यतया परपीडानुग्रहोभयद्वारकत्वात् । बहिःसाधनसंपादने ह्यन्ततोऽपरिहार्या पिपीलिकादीनां पीडा भवत्येवेति बहिःसाधनसाध्यं सर्वं वेदोक्तमपि कृष्णसंकीर्णमेव । अनुग्रहश्च तत्र देवादीनां प्रसिद्ध एव । अशुक्लाकृष्णं यथा संन्यासिनामभिमानफलत्यागिनां क्षीणक्लेशानां चरमदे-
१५ हानाम् । न तु संन्यासाभिमानिनाम् । अविद्यादिक्लेशसत्त्वे तेषामपि धर्माधर्मोदयात् । क्लेशक्षये च गृहिणामप्यशुक्लाकृष्णत्वात् । योगिभिः फलस्याहंकरोमीत्यभिमानस्य च त्यागात् । विहितं हि कामनायां सत्यामेव फलदम् । विहितं निषिद्धं चेदुभयमप्युपादानाख्याभिमाने सत्येव फलदम् । अत्राशुक्लाकृष्णानां सुखदुःखफलस्यैव प्रतिषेधेन सत्त्वशुद्धिफलकत्वमस्त्येव । न च ज्ञाने-
२० नैव तेषां सत्त्वशुद्धयाप्यः पापक्षयो भविष्यति । कर्मणामपि ज्ञानाङ्गतया सत्त्वशुद्धिहेतुत्वात् । आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ( मु. ३।१।४ ) इति श्रुतेः ।

योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये । ( भ. गी. ५।११ )

इति स्मृतेश्च । अन्यथा वसिष्ठादीनां कर्मानुष्ठानानुपपत्तेः । न च लोकसं-
२५ ग्रहार्थं तेषां कर्म । लोकसंग्रहस्य स्वतोऽपुरुषार्थतया कैवल्यहेतुसत्त्वशुद्धिद्वारैव तत्त्वस्यौचित्यादिति दिक् ॥ ७ ॥

नन्वयोगिनां कर्मसत्त्वेऽपि वासनानभिव्यक्त्या मोक्षोऽस्त्वित्यत आह—

## ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

ततस्त्रिविधात्कर्मणो वासनानामभिव्यक्तिर्भवत्येव । नन्वेवं मानुष्यप्रापकक-
३० र्मणा पश्वादिभोगवासनाभिव्यक्तौ तृणभोजनेऽपि प्रवृत्तिः स्यादतस्तद्विपाकानु-

17. B. reads फलं ददाति for फलदम्.
27. B. reads न च योगिनाम् for नन्वयोगिनाम्.

गुणानामिति । यज्जातीयस्य कर्मणो यो विपाकस्तदनुगुणानामेवाभिव्यक्तिरि-
त्यर्थः । न हि दैवं कर्म फलोन्मुखं तिर्यङ्मनुष्यवासनाभिव्यक्तिनिमित्तं संभव-
ति । किं तु दैवानुगुणवासनाभिव्यक्तिनिमित्तमेवेति । नारकतिर्यङ्मनुष्ये
चायं समानश्चर्चो विचार इति दिक् ॥ ८ ॥

५ चतुर्जन्मादिव्यवहितवासनाभिव्यक्तिं कर्मफलान्यथानुपपत्त्याह—

## जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

जात्यादिभिर्व्यवहितानामपि वासनानामानन्तर्यमव्यवहितवत्तत्कार्यकारित्वं
भवति । अन्यथा कर्मफलानुपपत्तेः । स्मृतिसंस्कारयोरेकरूपत्वादेकाकारत्वा-
१० दित्यर्थः । तथा हि । वृषदंशविपाकारम्भः स्वव्यञ्जकेनाञ्जनेन कालादिनाभिव्य-
क्तो वर्तमानावस्थो भवति न तु पूर्वदेहत्यागमात्रेण झटित्येवेति नियमः । स
यदा जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितं स्वव्यञ्जकं
माप्नोदियात्तदा शीघ्रं पूर्वमात्तवृषदंशविपाकजनितसंस्काररूपवासना गृहीत्वैव
व्यक्तो भवति । व्यवहितानामपि वासनानां सदृशं कर्म व्यञ्जकमभिव्यक्तौ नि-
१५ मित्तं मक्तेरेवोपादानत्वादित्यानन्तर्यमेव । अर्थात्सादृश्यं चैकजातीयफलकत्वेन ।
प्रमाणमाह—स्मृतिसंस्कारयोरेकरूपत्वात् । न चाव्यवहितं मनुष्यजन्मन्येव
वृषदंशवासनाः सन्तु । अनुभवैः स्वसमानाकारसंस्काराणामेव जननात् । न
चैवं मनुष्यवासनयैव वृषदंशविपाकोऽस्तु । संस्काराणां कर्माशयानुरूपाणामेवा-
पेक्षणात् । न च मनुष्यसंस्कारादेव वृषदंशविपाकनिर्वाहकस्मृतिरस्तु । स्मृति-
२० संस्कारयोः समानरूपत्वात् । तस्माज्जात्यादिव्यवहितसंस्कारेभ्यः स्मृतिः ।
न । चैवमेकविपाककाले स्मृत्युत्पादनेन पूर्वसंस्कारनाशात्कथं पुनस्तज्जातीय
विपाकान्तरम् । इदानींतनस्मृतिभिः पुनः संस्कारोत्पत्तेः । एवमेते स्मृतिहेतुसं-
स्काराः कर्माशयोद्बोधाद्व्यज्यन्ते । अतो व्यवहितानां निमित्तनैमित्तिकभावानु-
च्छेदादानन्तर्यमेवेति सिद्धम् ॥ ९ ॥

२५ ननु सकलजन्मार्थं वासनास्वीकारेऽनवस्था स्यादत आह—

## तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥

तासां वासनानामनादित्वं प्रवाहरूपेण मा न भूवं भूयासमित्याशिषो नित्य-
त्वात्प्रतिजन्मनियतत्वात् । यद्यप्याशीर्नित्यतया तद्धेतुवासनानामनादित्वं

---

10. A. reads वृषदंश for वृषदंश.
13. A. reads वृषदंश for वृषदंश.
14. A. reads सदृश for सदृशम्.
18,19. A. reads वृषदंश for वृषदंश.
28. A. om. प्रतिजन्मनियतत्वात्.

सिध्यति न तु भोगहेतुवासनानां तथापि तत्रानवस्थायाः प्रामाणिकत्वेनादोषत्वे तद्दृष्टान्तेनान्यासामप्यनादित्वमनुमेयम् । न चाग्न्यौष्ण्यादिवदियमाशीश्चित्तस्य स्वाभाविक्येवास्तु । जातमात्रस्यानुमानापसमर्थस्यात्र जन्मन्यननुभूतमरणादिधर्मकस्य द्वेषतदनुषक्ततत्कारणमरणादिदुःखस्मरणाभ्यामेव जायमानस्य यथो-
५ करूपस्य त्रासस्य पूर्वजन्मानुभूतमरणादिदुःखवासनां विनानुपपत्तेः । न च स्वाभाविकः सः । खड्गदर्शनादिनिमित्तसापेक्षत्वादन्यथाऽभावात् । न हि स्वाभाविकं निमित्तसापेक्षम् । स हि दृश्यमानखड्गादेर्दुःखहेतुभावानुमानात् । तच्च तज्जातीयादनुभूतदुःखस्मरणे सति तज्जातीयतयाऽस्यापि तत्त्वमनुमिनोति । तस्मात्प्राग्भवीयोऽनुभवः शिष्यते । बालकस्य दृश्यमानः कम्पो भयादीदृशकम्प-
१० त्वान्मत्कम्पवत् । भयं च द्वेषदुःखस्मृतिदुःखानिमित्तकं भयत्वान्मद्भयवत् । स्मृतिश्च पूर्वानुभवनिबन्धना सांप्रतिकानुभवाभावविशिष्टस्मृतित्वादित्यनुमानेन तात्सिद्धिः । तस्मादनादिवासनानुविद्धमिदं चित्तं विपाकोन्मुखकर्मवशात्काश्चिदेव वासना गृहीत्वा पुरुषस्य भोगायोपावर्तते ।

ननु वासनानामनादित्वं चित्तस्य नित्यत्वे सर्वशरीरेष्वेकत्वे च स्यात् ।
१५ तच्च न । पुंप्रकृत्यतिरिक्तस्य कार्यत्वाभ्युपगमात् । अणुमहच्छरीरभेदेन तत्परिमाणचित्तस्यापि भेदाच्चेति चेत्,

अत्र सांख्याः । प्रतिपुरुषं सर्वशरीरसाधारणमेकैकमेव चित्तम् । किं तु घटप्रासादरूपस्वल्पमहदाश्रयभेदेन प्रदीपवत्स्वल्पमहच्छरीरभेदेन संकोचविकासशालितया स्वल्पमहत्परिमाणं च । न तु विभु । तथा सत्यणुत्वासंभवेनान्तरा प्र-
२० लये लयस्यानुपपत्तेः । एवं चाणुतुल्यसूक्ष्मावस्थायाः प्रकृतेः सत्त्वरूपांशतां प्राप्नोतीति न प्रकृतिपुरुषातिरिक्तस्यानित्यताहानिः । तथा संसारः संसरणमिहलोकपरलोकसंचारश्चोपपद्यते । सक्रियत्वात् । विभुत्वे चैतदुभयं न घटत इति वदन्ति ।

एतच्छास्त्राचार्यास्तु विभ्वेव चित्तम् । प्रतिनियतपुरुषभोग्यत्वात् । पुरुषभे-
२५ देनानन्तं च ।

> चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
> द्वाभ्यां शून्यतमं विद्धि चिदाकाशं वरानने ॥

इति स्मृतेः । यथा चाकाशस्य विभोरपि घटाद्युपाधिकं गमनं तथास्यापि वृत्त्युपाधिकं तत् । विभूनामेव जीवचित्तानां मलिनदर्पणवदविद्याकामकर्मा-

---

1. A. reads सिद्धम् for सिध्यति.
2. A. C. om. आदि after औष्ण्य.
5. C. readsa आशीरूपस्य for रूपस्य.
20. A. om. लये.
20. B. C. read अणुत्वावां प्रकृते for अवस्थायाः प्रकृतेः.
24. आचार्याः स्वयंभूरिति क्षिप्ताः ।

वृत्तप्रकाशशक्तीनां बाह्यसत्त्वान्तरोपष्टम्भाज्ज्ञानादिहेतुरेकादशेन्द्रियपञ्चप्राणरूपः परिणामविशेषः प्रदीपशिखावद्व्यरूपो जायते। सा वृत्तिस्ता वृत्तयश्च संकोचविकासशालिन्यः स्वल्पमहच्छरीरभेदेन संकोचविकासशीला भवन्ति। प्राकृतलयपर्यन्तं चावतिष्ठन्ति। तदुपाधिकं च गमनागमनम्। तद्वृत्तिजन्यवृत्तीनां घटपटाद्याकाराणां ज्ञानादिशब्दवाच्यता। एवं च चित्तं कार्याकार्यरूपेण द्विविधमाकाशवत्। योगिनां युगपत्सर्ववस्तुज्ञानदर्शनाच्चास्य विभुत्वम्। अन्यथा संनिकर्षाभावात्कथं गृह्येत। योगजधर्मस्यापि प्रत्यासत्तित्वकल्पने गौरवात्। तस्माद्योगजधर्मस्तमआख्यप्रतिबन्धकनिवृत्तिमात्रे कारणम्। योगिनोऽपि प्रत्यक्षे संयोगादिप्रत्यासत्त्यैव। अनन्तवासनाधारत्वाच्च विभुत्वम्। अत एव वासनानां देशव्यवधानमाचार्येणोक्तं प्रन्थिवच्च वासनानां स्थितिर्भाष्य उक्ता। सर्वथाणुत्वे तु युगपत्सर्वेन्द्रियवृत्त्यनुपपत्तिः। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ( न्या. सू. १।१।१६ ) इत्यनेन च सदा सर्वगतत्वाभाव एव मनआख्यकरणे लिङ्गत्वेनोक्तो न त्वेकदेन्द्रियद्वयवृत्त्यभावो हेत्वासिद्धेरिति बोध्यम्।

ननु वृत्तीनां संकोचविकासयोः किं कारणमिति चेच्छृणु। धर्माधर्मरूपं निमित्तकारणं तयोः। अनादित्वाच्च नान्योन्याश्रयः। न चैवं शारीरादिधर्मैः स्तुतिदानादिभिरेव ज्ञानसंभवे योगो व्यर्थः। बाह्याध्यात्मिकभेदेन निमित्तद्वैविध्यात्। तत्र बाह्यं शरीरादिसाधनापेक्षं स्तुतिदानाभिवादनादि निन्दापरस्वादानादि च। आध्यात्मिकं चित्तमात्राधीनं श्रद्धावीर्यस्मृतिसमाधिप्रज्ञारूपं तद्विपरीतमश्रद्धादि च। तदुक्तम्—ये चैते मैत्र्यादयो ध्यायिनामयत्नसाध्यत्वेन विहारास्ते बाह्यसाधनानपेक्षस्वभावत्वेन निष्पाद्यं प्रकृष्टं धर्ममुत्पादयन्तीति। तयोराध्यात्मिकं बलवत्। ज्ञानवैराग्यरूपतया सर्वातिशायित्वात्। चित्तबलं विना दण्डकारण्यं कः शारीरेण कर्मणा शून्यं कुर्यात्समुद्रमगस्त्यवद्वा पिबेत्। दण्डकराजक्रोधेन दण्डकदेशं समाधिनष्टया जनशून्यं कृतवान्काव्ययोगी। एवं च योगजधर्मवद्बाह्यधर्मो न तथा चित्तविकासकारीति न तद्वैयर्थ्यमिति बोध्यम्॥ १०॥

इदानीं मोक्षोपपत्तयेऽनाद्यनन्तानामपि वासनानामत्यन्तोच्छेदमाह—

## हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः॥ ११॥

तत्र हेतुरुच्यते। धर्मात्सुखमधर्माद्दुःखं सुखाद्रागो दुःखाद्द्वेषस्ततः प्रयत्नस्तेन प्रयत्नेन मनसा वाचा कायेन वा चेष्टमानः परमनुगृह्णात्युपहन्ति वा। ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषाविति षडरं धर्माधर्मसुखदुःखरागद्वेषरूपारषट्कसहितं प्रवृत्तमिदमविद्याद्यनेमिनेन भ्रमितं संसारचक्रं ज्ञानकर्मवासनाहेतुः।

यथा कुलालचक्रस्य दण्डेन प्रेरणे वेगाख्यः संस्कारो भवति ततस्तं विनापि किंचित्कालं स्वयमेव भ्रमति तद्वदेव भ्रामितं संसारचक्रं वासनाहेतुः । अस्य च प्रतिक्षणमावर्तमानस्याविद्यानेत्री भ्रामिका । सैव सर्वक्लेशानां मूलकारणम् । अविद्याक्षये च कर्मणां सत्त्वेपि चक्रभ्रमणेऽपि न वासनोदय इत्येषोऽविद्यारूपो
५ वासनाया हेतुः ।

फलं तु यं पुरुषार्थमुद्दिश्य धर्मादुत्पन्नं तदेव वासनानामपि फलम् । कर्मवासनयोरन्योन्यसहकारित्वात् । ननु फलेन सह कथं कारणस्य नियमरूपः संग्रहः । फलाभावेपि कारणस्य सत्त्वादिति चेन्न । अपूर्वस्यासतो जन्माभावात् । एवं च सत्कार्यवादस्वीकारेणानागतावस्थफलेनं तत्संभवः ।

१० आश्रयस्तु वासनानां साधिकारं पुरुषार्थवन्मनः । प्रलये वासनासत्त्वानुरोधेन तदाश्रयमनसो नित्यत्वमभिप्रेत्य साधिकारमित्युक्तम् । अधिकारसमाप्तौ तु मनसो लयेन क्व निराश्रया वासनास्तिष्ठेग्न् । मनोत्र चित्तम् ।

आलम्बनं तु यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनम् । मोक्षकाले तु कामिनीरूपादीनां रागवासनाऽव्यञ्जकत्वान्नालम्बनत्वम् ।
१५ एवमेतैर्हेतुफलाश्रयालम्बनैः संगृहीता व्याप्ताः सर्ववासनाः । अत एषामभावेऽत्यन्तोच्छेदे विदेहमुक्तिसमये तदाश्रयाणां तन्नियतानां वासनानामभावोऽत्यन्तोच्छेद इति तासामनादित्वेपि मोक्षसंभव इत्यर्थः ॥ ११ ॥

ननु सत्कार्यवादात्कथं वासनानामत्यन्तोच्छेदोत आह—

## अतीतानागतं स्वरूपतोस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥

२० स्यादयं दोषो यदि स्वरूपापायस्तासामुच्येत । किं त्वत्यन्तातीततामात्रमुच्यते । यतोतीतानागतं वस्तु स्वरूपतोस्ति । ननु विरुद्धधर्माणां कथमेकदा सत्ता तत्राह—अध्वभेदादिति । भिन्नाध्वकत्वान्नविरोध इत्यर्थः । वर्तमानलक्षणानामेव विरोध एकदेति भावः । तयोः स्वरूपानपाये किं प्रमाणमिति चेच्छृणु । भाविष्यदभिव्यक्तिकमनागतमनुभूताभिव्यक्तिकमतीतमनुभूयमानाभिव्यक्तिकं वर्तमानं
२५ त्रयमप्येतत्स्वरूपसत् । यतो योगिनां प्रत्यक्षज्ञानस्य विषयः । यदि चैतंत्स्वरूपतो न स्यात्तदं विर्विषयं ज्ञानमुत्पत्स्यत् । शशशृङ्गादीनां ज्ञानादर्शनात् । न च शुक्तिरजतादिवद्बुद्धिपरिणामविशेष एव योगजधर्मादिजन्योतीतादिस्थले साक्षिज्ञानविषयोस्त्विति चेन्न । योगिना पूर्वानुभूतातीतादेः कालान्तरेपि प्रत्यभिज्ञायमानत्वात् । वर्तमानवस्तूनामप्येवं बुद्धिमात्रतापसङ्गाच्च । अस्मदा-
३० दीनां तु सौक्ष्म्यादनुपलम्भ उपपन्नः । घटोऽतीत इति प्रतीतिवन्नास्तीति प्रत्ययोप्यतीततादिविषयकः ।

---

15. B. om. एवम्.
25. A. B. read स्वरूपं सत् for स्वरूपसत्.

किं च यदि भोगसाधनस्यापवर्गसाधनस्य वा कर्मणः फलमुत्पत्स्यमानं निरुपाख्यमसत्तदा तेन निमित्तेन तदुद्देशेन कुशलस्य योगिनोऽनुष्ठानं न स्यात् । अनागतं साक्षात्कृत्य योगी तद्वर्तमानत्वाय यतते । यथार्जुनः कालात्मके कृष्णशरीरे भाविनं भीष्मादिमृत्युं दृष्ट्वा युद्धे प्रवृत्तः । न चैवं कारणव्यापारो विफलः । ५ सत एव फलस्य वर्तमानीकरणे व्यापारात् । दृष्टं च तिलेषु विद्यमानस्यैव तैलस्य तैलिकव्यापारेणाभिव्यक्तिमात्रम् । नापूर्वोपजननं कारणव्यापारः । शिलायामङ्कुरोत्पादनेऽपि तदापत्तेः । न चैवं कारणस्यापि नित्यत्वादतीतकारणादपि कार्याभिव्यक्तिः स्यात् । वर्तमानस्यैव कारणस्य कार्याभिव्यक्तिहेतुत्वात् । न त्वपूर्वोत्पादने हेतुत्वम् । शशशृङ्गादेरप्युत्पत्त्यापत्तेः । उत्पत्तेः प्रागद्वयोरपि परमते १० तुल्यत्वात् ।

धर्मी चानेकधर्मस्वभावः । तस्य च ते धर्मा अध्वभेदेन प्रत्यवस्थिताः । न च विरोधः । अभिव्यक्तिरूपेण विशेषेणैव धर्माणां विरोधो न स्वरूपत इत्यभ्युपगमात् । न हि यथा वर्तमानमभिव्यक्तिमापन्नं द्रव्यतः स्वक्रियाकारित्वेनास्त्येवमतीतमनागतं च वर्तते । किं तर्हि स्वेनैव भाविव्यक्तिकेन रूपेणानाग- १५ तमस्त्यतीतं चानुभूताभिव्यक्तिकेन स्वरूपेणास्ति । वर्तमाने एव त्वध्वनि स्वरूपव्यक्तिरित्यतीतानागतयोरध्वनोस्तस्या अभावः । न चैवमेकाध्वसमयेऽपराध्वाभावात्तत्रैव सत्कार्यहानिः । एकस्य चाध्वनोऽभिव्यक्तिसमये द्वावध्वानौ धर्मिसमन्वागतौ भवत एवेति नाभूत्वा भावस्त्रयाणामध्वनामित्यदोषात् । एतच्चोपपादितं प्राक् ॥ १२ ॥

२० अथ सदसत्त्ववैधर्म्येण कार्यकारणभावविवेकं सम्यग्ज्ञानविषयमाह—

**ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥**

तेमी अध्वानो धर्मा वर्तमाना व्यक्तस्वरूपा अतीतानागताः सूक्ष्मात्मानः षडविशेषरूपाः सर्वमिदं महदादिविशेषपर्यन्तं धर्मजातं गुणानां संनिवेशविशेषमात्रम् । परमार्थतस्तु गुणात्मान एव ते धर्माः । गुणरूपेणैवैषां सत्त्वं न तु स्वरूपेणे- २५ त्यर्थः । तदुक्तं—

गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥

इति । परमं पारमार्थिकं नित्यमिति यावत् । मायेव । लौकिकमायावत्क्षणभङ्गुरम् । अतः सुतुच्छकमत्यन्ततुच्छमत्यसारम् । स्थिरांशाभावात् । अत्र ३० सुशब्देन परिणामितया गुणानामपि तुच्छत्वं सूचितम् । तेषामपि

15. A. om. अभि.
17. C. om. अभिव्यक्तिसमये.
27. A. reads मायैव for मायेव.
28. A. reads मायैव for मायेव.

परिणामितया कूटस्थनित्यापेक्षया तुच्छत्वात् । गुणकार्यं तु ततोपि तुच्छम् । यद्यपि मायाशब्दो मिथ्यावस्तूनां कारणे मुख्यः । " मायां तु प्रकृतिं विद्यात् " ( श्वे. ४।१० ) इति श्रुतेः । विश्वस्य बीजं परमासि माया ( सप्तशती ११।५ ) इति स्मृतेश्च । मायात्वं च सूक्ष्मविकारेण व्यामोहकत्वम् । तच्च ५ प्रकृतावेव मुख्यं तथापि कार्यकारणभेदात्कार्येपि मायाशब्द उक्तः ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया । ( गी. ७।१४ )

इत्यादिवत् ॥ १३ ॥

ननु सर्वविकाराणामनेकगुणरूपत्वे कथमेकं शब्दतन्मात्रमेकं चक्षुरित्यादयो व्यवहारा इत्यत आह—

१० **परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥**

परमार्थतो नानात्वेपि व्यावहारिकेण परिणामरूपेण परिणामस्यैकत्वाद्वस्तूनां गुणानामेकत्वव्यवहार इत्यर्थः । दृष्टो हि बहूनामप्येकः परिणामो यथा रुमानिक्षिप्तानां गवाश्वमहिषमातङ्गानामेको लवणत्वजातीयः परिमाणो वर्तितैलानलानां च प्रदीप इति । तथा हि । प्रख्याक्रियास्थितिशीलानां गुणानां ग्रह-१५ णात्मकानां सात्त्विकान्तःकरणरूपैकरूपेण परिणतानां बाह्यकरणभावेन श्रोत्रेन्द्रियमेकः परिणामः । एवमन्यान्यपि ज्ञानेन्द्रियाण्येकः परिणामः । तथा ग्राह्यात्मकानां तामसान्तःकरणरूपेण परिणतानां शब्दतन्मात्रादिरूप एकः परिणामः । स शब्दः शब्दतन्मात्ररूपं द्रव्यम् । विषयो नाम जडो देवाविश्रोत्रेन्द्रियविषयश्चेति । एवं राजसान्तःकरणरूपेण परिणतानां गुणानामेकः २० परिणामो वागादीन्द्रियम् । तेषामेव शब्दतन्मात्रादीनां मूर्त्या काठिन्येन सजातीयानां द्रव्याणामेकः परिणामः पृथिवीपरमाणुः स्थूलपृथिव्याः सूक्ष्मावस्थांशः पञ्चतन्मात्रावयवकः । गुणानामणुत्वेपि तेषु पृथिवीत्वाद्यभावेन न पृथिव्याद्यणुव्यवहारः । तेषां च परमाणूनामेकैकः परिणामः पृथिवी गौर्वृक्षः पर्वत इत्येवमादिः । एवं भूतान्तरेष्वपि स्नेहौष्ण्यप्रणामित्वावकाशदानसमानियतज-२५ लत्वतेजस्त्ववायुत्वाकाशत्वजातीयानि तन्मात्राण्युपादाय सामान्यतः सजातीयानामनेकेषां धर्मभूत एकविकारारम्भ उपपादनीयः । तत्र तत्तज्जातीयारम्भकाः परमाणवो भिन्ना एव । तदनुगम एव तत्र तत्र तत्तज्जातिव्यवहारभाक् । एवं क्रियाद्युपादानभूता अपि रजआद्यंशा भिन्ना एव । तदनुगमादेव तत्तत्क्रियात्वादिव्यवहारः । त एव च तत्तद्व्यक्तयः । अत एव व्यक्तभेदा ३० व्यक्तय एव जातिरिति वदन्ति । त एव पृथिवीजलादिव्यक्तिरूपाः । एवं

---

13. A. reads कृमा for रुमा.
14. A. om. गुणानाम्.
15. A. om. श्लोक.
25. B. reads सामान्यम् for सामान्यतः.

पृथिव्यादिविकाराणां सामान्यभूताः परमाणव एव तेषां व्यक्तिभूताः।
अनुगतत्वाच्च घटत्वादिजातिरूपा अपि ते ।

अत्रेदमवधेयम्–शब्दादीनां मूर्तिसमानजातीयानामिति भाष्योक्तेस्तन्मात्र-
पञ्चके काठिन्यस्नेहादिव्यङ्ग्या पृथिवीत्वादिजातिरूपा व्यक्तयः सन्ति । तत्र
५ पृथिवीजातीयैः शब्दादिगन्धान्तपञ्चतन्मात्रैः पृथिव्यणव आरभ्यन्ते । तेषां च
महापृथिव्यादिः परिणामः । तस्यां पञ्चगुणोपलम्भात् । एवं जलजातीयैः शब्दादि-
रसपर्यन्तैश्चतुस्तन्मात्रैर्जलपरमाणवस्तेभ्यो महाजलादि । एवं तेजोजातीयैः
शब्दादिरूपान्तात्रितन्मात्रैस्तेजोणवस्तैर्महातेजआदि । एवं वायुजातीयाभ्यां शब्द-
स्पर्शतन्मात्राभ्यां वाय्वणवस्तेभ्यो महावाय्वादि । एवमाकाशजातीयाच्छब्दतन्मा-
१० त्रादहंकारसहकृतादाकाशाणवस्तेभ्यो महाकाशादि । एवं च परमाणुगणोत्पत्त्यन-
न्तरं तेभ्य एवाकाशादिक्रमेण पञ्चमहाभूतोत्पत्तिरिति बोध्यम् । सर्वत्र तन्मात्रै-
स्तत्तद्भूतोत्पादनेहंकारस्य सहकारित्वं बोध्यं स्मृतिबलात् ।

यत्तु विज्ञानवादिनः कार्यकारणरूपं सर्वं वस्त्वसत्(चित्तकल्पितमात्रम् । स्वप्न-
वद्बाह्यवस्तुनो हि प्रातीतिक्येव सत्ता । परमार्थतो गुणा वा तत्परिणामो जाती-
१५ तादिकं वा न किंचिदस्ति ।

यथा रथादयः स्वप्ने भान्ति नैव तु सन्ति ते ।
तथा जाग्रदवस्थायां भूतानि च न सन्ति वै ॥

इति स्मृतेः ।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
२० न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

इति श्रुतेश्च । किं च स्वप्नादौ ज्ञानं विषयभूतार्थं विनोभयवादिसिद्धम् ।
अर्थश्चानुभवविषयत्वं विना शशशृङ्गादिः परैरपि न स्वीक्रियते । किं च ज्ञा-
नाभावकाल उभयवादिसिद्धोऽर्थो नास्ति । अत उभयसिद्धेन ज्ञानेनैव स्वप्ना-
दिवत्सर्वव्यवहारोपपत्तौ ज्ञानातिरिक्तार्थकल्पने गौरवमिति बाह्यं वस्त्वपह्नुवते ।
१५ किं च यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानस्यात्मा । वेद्यन्ते च
भूतभौतिकानीति विरुद्धव्याप्तोपलब्धिः । निषेध्यभेदविरुद्धेनाभेदेन व्याप्तं
वेद्यत्वं दृश्यमानं स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्धं भेदं प्रतिक्षिपति । तथा
यद्येन नियतसहोपलम्भं तत्ततो न भिद्यते यथैकस्माच्चन्द्राद्द्वितीयश्चन्द्रः । नियत-
सहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः । निषेध्यभेदव्यापकानियम-
२० विरुद्धो नियमोऽनियमं व्यावर्तयंस्तद्व्याप्तं भेदं प्रतिक्षिपति । भेदप्रतीतिश्च
कल्पितभेदाविषया विकल्परूपैवेति ।

10. B. reads गुण for गण.

तत्र । तेषां स्वमाहात्म्येन संनिकर्षादिनोपस्थितं ( न तु दोषादिना स्वप्नवद्-
त्यन्तबाधादर्शनात् ) वस्तुस्वरूपं गृहीत्वाप्यप्रमाणविकल्पात्मकस्वप्नज्ञानदृष्टा-
न्तबलेनापलपतां श्रद्धेयवचनत्वाभावात् । तेषां ज्ञानस्य भ्रमत्वेन तद्वाक्यस्य
यथार्थवाक्यार्थज्ञानाजन्यत्वेनाश्रद्धेयत्वात् । सहोपलम्भनियमवेद्यत्वरूपौ हेतू
५ अनैकान्तिकौ । तथा हि । वस्तुनि स्थूलत्वं बाह्यत्वं च । न ते ज्ञानगते । नाना-
देशव्यापित्वं च स्थौल्यं विच्छिन्नदेशता च बाह्यत्वम् । न चैकस्यैमौ विरुद्धध-
र्मौ । न च विज्ञानभेदः । युगपद्विज्ञानद्वयाभावात् । न च विकल्पः । विशद-
प्रतिभासात् । अलीकत्वे विज्ञानस्यापि तत्त्वापत्तेः । वेद्यत्वेन विज्ञानाभेदात् ।
तस्माच्च वेद्यत्वमभेदव्याप्तम् । एवं सहोपलम्भनियमो भेदेऽपि घटपटयोर्दृष्टो वन-
१० मित्यादिप्रत्यये चेति दिक् ॥ १४ ॥

इतोपि तन्मतमसंगतमित्याह—

## वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥

एकत्रैव विषये चित्तान्तरवियोगेन चित्तान्तरालम्बनत्वदर्शनात्तयोर्भिन्ना-
र्थयोः पृथगेव पन्थाः स्वरूपभेदोऽयनवर्त्म । एकानेकत्वरूपमित्यर्थः । क्षणिक-
१५ विज्ञानमेव परेषां चित्तमिति चित्तभेदेनैव विज्ञानभेदोऽर्थेषु सिद्ध इति भावः ।
तथा हि । बहुचित्तावलम्बनीभूतमेकं वस्तु साधारणत्वेन प्रत्यभिज्ञया सिद्धम् ।
तच्च नैकपुरुषीयचित्तात्मकं नाप्यनेकपुरुषीयचित्तात्मकमपि तु स्वप्रतिष्ठं
चित्तातिरेकेण स्वातन्त्र्येणैव स्थितम् । कुतः । वस्तुसाम्ये चित्तभेदात् । पुरुष-
भेदेनैकस्मिन्नेव योषिद्वस्तुनि धर्मरूपनिमित्तात्सुखवती कन्याकारवृत्तिर्भवति ।
२० अधर्मरूपनिमित्ताच्च तत्रैव दुःखवती सा । अविद्यानिमित्तेन तत्रैव मोहवती
सा । सम्यग्दर्शनेन च तत्रैव माध्यस्थ्यवतीति । अतः कस्य पुरुषस्य चित्तेन
कल्पितमभिन्नं स्यान्न कस्यापीति नैकचित्तात्मकत्वसंभवः । या त्वया दृश्यते सैव
मयापीति प्रत्यभिज्ञानाच्च । किं चान्यचित्तपरिकल्पितेनार्थेनान्यचित्तोपरागा
संभवः । परस्वप्नस्य परेणाज्ञानात् । एतेनानेकचित्तपरिकल्पितत्वमपि निरस्तम् ।
२५ बहुभिरेकस्वप्नादर्शनात् । तस्माद्ग्राह्यग्रहणरूपयोर्वस्तुज्ञानयोर्भेदेन वैधर्म्येण
भिन्नयोर्विभक्त एव पन्था नानयोः संकरगन्धोपीति बोध्यम् ।

ननु चित्तातिरिक्तार्थवादिनामर्थस्य स्थिरत्वान्निरन्तरमेव कथं ज्ञानं न
भवति । कथं वैक एवार्थः सुखादिभेदाभिन्नासु वृत्तिषु हेतुः स्यात् । न ह्येक-
स्मात्कारणात्कार्यभेदो घटत इति चेन्न । सांख्यमते सर्वस्य वस्तुनः सुखदुःख-
३० मोहात्मकत्रिगुणत्वेन चित्तस्य चलस्वभावत्वेन च धर्मादिनिमित्तसापेक्षत्वेन
च वस्तुसंबन्धस्य कादाचित्कत्वेन चोक्तदोषद्वयाभावात् । धर्मादिनिमित्तानु-

---

12. B. reads अपि after साम्ये.

रूपसुखाद्यात्मकमत्यर्थं भाति सुखाद्यात्मकत्वेनैव वस्तुनो हेतुतया कारणताव-
च्छेदकभेदाच्च । केचित्तु ज्ञानाद्भिन्नोऽपि ज्ञानसहभूरेवार्थो भोग्यत्वात्सुखादिवत्।
अत्र सुखं दृष्टान्तस्तन्मतेनैव । अस्मन्मते सुखस्यापि विषये स्थिरत्वात् । रागद्वे-
षादिकं तूभयासिद्धो दृष्टान्तः । अन्यथा सत्वं मानाभावादिति । तन्न । एवमनुमा-
५ नेन पूर्वोक्तरक्षणेषु वस्तुस्वरूपस्यैवापलापेन तस्य पुरुषान्तरसाधारणत्वानाप-
त्त्या यत्त्वया दृष्टं तदेव मयेति प्रत्यभिज्ञानुपपत्तेः ॥ १५ ॥

किं च—

## न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥

१० शून्यात्मपक्षानातिरिक्तं तेषां चित्तं नास्तीति तदेवात्र चित्तम् । तत्तन्त्रं तन्नियत-
म् । एवं च वस्त्वेकज्ञाननियतं नेति प्रतिज्ञा । तदित्यादिर्हेतुः । यद्येकज्ञाननियतं
चेद्वस्तु स्यात्तदा तच्चित्ते विषयान्तरसंचारिणि निरुद्धे वा तद्वस्त्वस्वरूपेणैव
तत्स्यात् । तेनापरामृष्टत्वादन्यस्याविषयत्वाच्च । एवं च केनाप्यगृहीतस्व-
भावत्वरूपाप्रमाणकं किं तत्स्यात् । चित्तापाये कुत्र विलीयेत । न कुत्रचित् । यदि
१५ चित्तकारणे विलीयेतेत्युच्यते तदा घटादिरूपार्थानां लाघवाच्चित्ताभेदापत्तौ
विज्ञानवादिमत एव प्रवेशः । यदि मृदादिषूच्येत तर्हि विनाशकारणत्वेन दृष्टस्य
मुद्गरपातादेरभावेन तद्वस्तुनाशानुपपत्तिः । एवमपि नाशाङ्गीकारे पुनश्चित्तेन
समकालमाविर्भवत्कुत उत्पद्येत । कारणत्वेन कल्पस्याभावात् । न च तज्ज्ञान-
कारणमेव तत्कारणम् । आशामोदकैरपि तृप्तिप्रसङ्गात् । किं चाप्यर्थस्य शरीर-
२० रूपस्याप्रतीयमानाः पृष्ठाद्यंशास्तेऽप्यप्रामाणिकत्वादसन्तः स्युः । एवं च पृष्ठाद्य-
भावादुदरं प्रतीयमानमपि न सत्यतया गृह्येत । उदरस्य पृष्ठादिव्याप्ततया
पृष्ठाद्यभावेनोदराभावसिद्धेः । तस्मात्स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः स्वतन्त्राणि
च चित्तानि प्रतिपुरुषं प्रवर्तन्ते । तयोः संबन्धादुपलब्धिः पुरुषस्य भोगो वियो-
गाच्चानुपलब्धिर्मोक्ष इति दिक् ॥ १६ ॥

२५ इदानीं चित्तात्मनोर्विवेकप्रकारमाह—

## तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥

चित्तस्य कालभेदेन ज्ञातमज्ञातं च वस्तु । अर्थज्ञानेऽर्थाकारताख्योपरागसा-
पेक्षत्वात् । एवं च ज्ञाताज्ञातविषयत्वाच्चित्तं परिणामि । न चार्थाकारतातिरिक्तं

---

3. A. reads स्थितत्वात् for स्थिरत्वात्.
8. C. reads तत्प्रमाणकम् for तदप्रमाणकम्.
11. A. om. एक.
13. A. reads अन्य for अन्यस्य.
16. B. om. तर्हि.
18. A. reads ज्ञान for तज्ज्ञान.

बुद्धेर्ज्ञानं किं यत्र तस्यापेक्षोच्यत इति वाच्यम् । भूतप्रकाशवत्सुषुम्न्यादिव्यावृत्तस्य सत्त्वगतप्रकाशस्य सत्त्वेन तस्यैवाकारावच्छिन्नस्य बुद्धिधर्मज्ञानत्वात् । तथा हि । अयस्कान्तमणिवदक्रिया एव विषया अयोवत्क्रियाशीलं चित्तं स्वमहिम्नाऽऽकृष्य स्वस्मिन्संबध्य स्वाकारेण तत्परिणामेनोपरञ्जयन्ति । अतो
५ येन विषयेणोपरक्तं यच्चित्तं स तस्य विषयो ज्ञातः । इतरे चाज्ञाताः । अतो ज्ञाताज्ञातवस्तुकत्वानुपपत्त्या चित्तस्योपरागाख्यपरिणामवत्त्वं सिद्धं पुरुषाद्वैधर्म्यम् । एतेनार्थस्य स्वतन्त्रत्वे जडत्वान्न कदाचित्प्रकाशः स्यात् । न चेन्द्रियाधेयो जडस्वभावस्यार्थस्य धर्मः प्राकट्यादिः प्रकाशः । तत्त्वे नीलत्वादिवत्सर्वपुरुषसाधारणत्वापत्तावेकस्य शास्त्रार्थज्ञत्वे सर्वेषां विद्वत्त्वापत्तेः । अतीतानागत-
१० योर्वर्तमानधर्मवत्त्वासंभवाच्चेति निरस्तम् । अर्थोपरक्तचित्तप्रतिबिम्बेन चितेरर्थानुभवात् । यद्यपि जडत्वाच्चित्तस्य न ज्ञानं चैतन्यस्यैव ज्ञानत्वात् । तच्च पौरुषेयमेव । सत्त्वस्य प्रकाशरूपता तु पुरुषप्रतिबिम्बग्रहणक्षमनैर्मल्यमेव तथापि तप्तायःपिण्डवद्व्यवहारतो बुद्धिसत्त्वप्रकाशोऽपि ज्ञानशब्देनोक्तः ॥ १७ ॥

घटादयस्तु पुरुषस्य न साक्षाद्विषयाः । किं तु चित्तमेव तद्विषयः । अतो न
१५ पुरुषस्य ज्ञाताज्ञातविषयत्वमित्याह—

## सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात् ॥ १८ ॥

तत्प्रभोश्चित्तसाक्षिणः पुरुषस्य विषयभूताश्चित्तवृत्तयः सदा ज्ञाताः । पुरुषस्यापरिणामात् । परिणामित्वे हि पुरुषस्य कदाचिदज्ञान्यापत्त्या चित्तवृत्त्यज्ञानेऽहं सुखी
२० न वा दुःखी न वेच्छामि न वेत्यादिः संशयः स्यात् । अतो वृत्तेरज्ञातसत्ताभावात्पुरुषोऽपरिणामी । किं च परिणामित्वे पुरुषीयज्ञानादिलक्षणधर्मस्य मोक्षे नाशापत्तौ व्ययदोषेण दारिद्र्यवन्मोक्षस्यापुरुषार्थत्वापात्तिः । तथा हि । यदि चित्तवत्तत्प्रभुः परिणमेत तदा तस्य पुरुषस्य विषयभूताश्चित्तवृत्तयः शब्दादिविषयवज्ज्ञाताज्ञाताः स्युः । सदा ज्ञातत्वं तु मनोवृत्तीनां स्वप्रभोः पुरुषस्यापरिणामित्व-
२५ मनुमापयतीति ।

नतु सर्वसंबद्धत्वाविशेषेऽपि चित्तमेव पुरुषस्य विषय इत्यत्र किं मानमिति चेच्छृणु । अर्थाकारतैव विषयविषयिभावो न तु संयोगमात्रम् । अतीन्द्रियेषु संयोगसत्त्वेऽपि चित्तविषयत्वाभावात् । पुरुषे चार्थाकारताप्रतिबिम्बरूपेणैव

---

5. P. om. इतरे चाज्ञाताः.
8. A. om. जड.
10. C. reads दृचितेः for न चितेः.
22. B. om. तद्.

स्वतोऽपरिणामित्वात् । अतः पुरुषे प्रतिबिम्बनसामर्थ्यं वृत्तिमच्चित्तस्यैव । फलब-लात् । यथा जलादौ प्रतिबिम्बनसामर्थ्यं रूपवत्स्थूलद्रव्यस्यैव । शब्दादीनां तु चित्तारूढानामेव पुरुषेण भासनम् । अर्थे विषयत्वं तु पुरुषवृत्तिप्रतिबिम्बानि-ष्ठतत्तदाकारतानिरूपकत्वमेव । तदेव च तत्तद्वस्तुनिष्ठं विशेष्यतादिशब्दैर्व्य-
५ वह्रियत इति ।

अत्रेदं तत्त्वम्—अज्ञानस्य चित्तधर्मतया तत्कार्यधर्मादिकं तत्कार्यं चेच्छा-सुखादिकं सर्वं चित्तस्यैव । सामानाधिकरण्यप्रत्यासत्तौ लाघवात् ॥ १८ ॥

ननु चित्तमेव विषयवत्स्वस्यापि प्रकाशकमस्तु कृतं पुरुषेण । अग्निवत् । अग्निचित्तसाधारणं स्वप्रकाशत्वमखण्डोपाधिरिति बौद्धाशङ्कायामाह—

१० **न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥**

यथेन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वप्रकाशानि तथा मनोपि ज्ञेयम् । यद्धि परिणामितया नीलादिवदनुभवव्याप्यं न तत्स्वाभासम् । आत्मनि वृत्तिवि-रोधात् । न हि तदेव क्रिया च कारकं च । न हि पाकः पच्यते छिदा वा छिद्यते । पुरुषस्तु नानुभवकर्मेत्यतः स्वप्रकाश एव । अपराधीनप्रकाशतैवास्य
१५ स्वयंप्रकाशता नानुभवकर्मतेति मिश्राः ।

अन्ये तु चित्तं स्वगोचरवृत्त्यभावकाले न स्वप्रकाशं दृश्यत्वादिन्द्रियशब्दा-दिवदिति प्रयोगः । एवं च स्वगोचरवृत्त्यभावकाले चित्तभानार्थं पुरुषसिद्धिः । वृत्तिभानार्थं नियमेन वृत्तिकल्पने चानवस्था । पुरुषे स्वज्ञेयतायाः उक्तत्वेन तत्र व्यभिचारवारणाय काल इत्यन्तम् । कर्तृकर्मविरोधो विपक्षे बाधकस्तर्कः ।
२० कर्तृकर्मविरोधे च स्वस्मिन्स्वसंयोगाद्यनुपपत्तिस्तर्कः । न चैवं पुरुषस्य ज्ञेयत्वे कर्तृकर्मविरोधः । चेतनप्रतिबिम्बितबुद्धिवृत्तिव्याप्यत्वरूपस्यैव ज्ञेयत्वस्य पटादिवत्तत्र सत्त्वात् । तत्र बुद्धिवृत्त्यारूढरूपो दृश्यो दर्पणारूढमुखवत्केवलस्तु द्रष्टेति प्रकारभेदान्न तद्विरोधः । प्रकारभेदेपि वस्तुतः स्वप्रकाशत्वमस्त्येव । एते-नात्मा दृश्य एव न । पुरुषगोचरस्तु व्यवहारः स्वरूपसतैव पुरुषेण । प्रका-
२५ शगोचरव्यवहारे प्रकाशानपेक्षादर्शनादिति चिन्त्यम् । चित्तवृत्तावप्येवं परैरदृ-श्यतायाः सुवचतया चित्तातिरिक्तपुरुषसिद्ध्यनुपपत्तेः । वृत्तिगोचरव्यवहारस्यापि स्वरूपसत्या वृत्त्यैव वक्तुं शक्यत्वात् । तस्यापि सत्त्वरूपतया प्रकाशत्वात् । परो-क्षाभिहृष्टान्तोप्यसिद्धः । यथाग्निः पूर्वं तमसा पिहितः पश्चादात्मानं प्रकाशयतीति कचिद्दृष्टं स्यात्तदाग्नेः स्वप्रकाशत्वं पुरुषस्येव सिध्येत । तदेव तु नास्ति ।

---

4. A. reads तत्तच्छब्दाकारता for तत्तदाकारता.
4. A. reads सिद्ध for सिद्धम्.
23–25. A. om. प्रकारभेदा० व्यवहारे.

यद्यपि पुरुषोपि प्रकाशरूप एव सर्वदा तमस्तु बुद्धिवृत्तेरेव प्रतिबन्धकं तथापि बुद्धिवृत्त्यारूढ्यकरणाभावकाले स्वमविषयीकृत्य तदारूढ्यकरणकाले करोतीत्यमितो विशेषात् । अतः प्रकाशरूपतादिसाम्येपि पुरुषः स्वप्रकाश्यो-नाग्निः । किं च प्रकाश्यत्वव्यवहारः प्रकाश्यप्रकाशकसंयोगे दृष्टः । न च स्वरूप-
५ मात्रे संयोगः । संयोगोऽत्र प्रतिबिम्बसाधारणः संबन्धः । अग्नेः स्वप्रकाशत्वं तु प्रकाशान्तरनैरपेक्ष्येण । अग्निदृष्टान्तेन चेदृशमेव स्वप्रकाशत्वं शास्त्रेषूच्यते चित्ताद्विवेकाय । चित्तस्य हि प्रकाशः पुरुषोपाधिक एवायसो दग्धृत्ववत् । अ-वेद्यत्वे सत्यपरोक्षयोग्यत्वं स्वप्रकाशत्वं पुरुषे इति वेदान्तभाष्यकृतः । तेषां द्रष्ट-व्य इत्यादिश्रुतीनां का गतिः । वेदनस्य व्यवहारं प्रति सामानाधिकरण्येन
१० हेतुत्वस्य क्लृप्तस्य का गतिरिति वदन्ति । किं च स्वाभासं चित्तमि-त्यस्य कस्याप्यग्राह्यमित्येवार्थो यथा स्वात्मप्रतिष्ठमाकाशमित्यस्याप्रतिष्ठ-मिति । एवं च वृत्तिरूपस्वबुद्धिप्रचारस्य संवेदनात्क्रुद्धोहं भीतोहममुत्र मे रा-गोऽमुत्र मे क्रोध इति प्राणिनां व्यवहारो दृश्यते स स्वबुद्ध्यग्रहणे न स्यात् । अतो बुद्धेर्ग्राह्यत्वमावश्यकम् । ननूक्तप्रत्ययेहमिति पुरुषस्यापि भानात्तस्यापि स्वाभा-
१५ सत्वं न स्यादिति चेन्न । अग्राह्यत्वरूपस्वाभासत्वस्य पुरुषेप्यनङ्गीकारादिति दिक् ॥ १९ ॥

चित्तस्य स्वाभासतामते तन्मतमालम्ब्यैव दूषणमाह—

**एकसमये चोभयानवधारणम् ॥ २० ॥**

एकस्मिन्नुत्पत्तिक्षण एव स्वपरावधारणं न युक्तम् । पूर्वं सत एव प्रत्यक्षगो-
२० चरत्वात्स्वस्य च प्रागसत्त्वादित्यर्थः । न च स्वोत्पत्त्यनन्तरं ग्रहणमस्तु । क्षणि-कवादिना या वस्तुन उत्पत्तिः सैव तस्य क्रिया कार्यं सैव च तस्याः कर्त्रादिकारक-मित्यभ्युपगमात् । तन्मते हि सर्वं वस्तूत्पत्तिमात्रफलकं निर्हेतुकं च स्वयमेव भवति ॥ २० ॥

ननु स्वाभासशब्देन स्वसंतानग्राह्यत्वमुच्यते । एवं च स्वरसेन विनाश-
२५ स्वाभाव्येन निरुद्धं नष्टमपि चित्तमुत्तरोत्पन्नेन चित्तान्तरेण ग्राह्यमित्याश-ङ्कायामाह—

**चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २१ ॥**

---

2. A. reads बुद्धिर्वृत्त्यारूढ्य for बुद्धिवृत्त्यारूढ्य.
2. B. reads कारणाभाव for करणाभाव.
2. B. reads तदारूढ्याकरण for तदारूढ्यकरण.
14. A. om. भानात्तस्यापि.
27. B. reads वृत्त्यो for वृत्ते.

वृत्तिरूपचित्तं वृत्तिरूपचित्तान्तरेण चेद्गृह्यते सा वृत्तिविषया वृत्तिः केन गृह्येत । अन्ययेति चेदतिप्रसङ्गेनानवस्थारूपः । न च सर्वमेव चित्तं गृहीतव्यमिति नियमाभावान्नानवस्था । एवमप्यनन्तवृत्तिगोचरानन्तवृत्तिकल्पनागौरवमेवातिप्रसङ्गः । अस्माभिर्लाघवेन सकलवृत्तिगोचरैकज्ञानकल्पनात् । एतेन वैशेषिकाणामुत्तरोत्तरज्ञानेन पूर्वपूर्वज्ञानग्रहणकल्पना परास्ता । गौरवात् । स्मृतिसंकरश्चेति । बुद्धिबुद्धेरिति शेषः । तथा हि । यावन्तो बुद्धिबुद्धीनामनुभवास्तावन्त्यः स्मृतयः स्युः । विषयानुभवज्ञानज्ञानधारा जातेति विषयस्मृतिकालेप्यनन्तानां तज्ज्ञानानां घटो मया ज्ञातो घटज्ञानं ज्ञातं तज्ज्ञानं च ज्ञातमित्येवमनन्ताकारैकदा स्मृतिः प्राप्नोति । सोयं स्मृतिसंकरः । तत्संकरे च घटो मया ज्ञात इत्येकमात्राकारस्मृत्यनुभवो न स्यात् ।

किं चैवं बुद्धिप्रतिसंवेदिपुरुषापलापिनां नास्तिकानां बन्धमोक्षधर्माधर्मव्यवस्थादिकं सर्वं व्याकुलमेव । किं च तेषां मध्ये विज्ञानवादिनः क्षणिकविज्ञानरूपं चित्तमात्रं भोक्तृत्वेन परिकल्प्य तस्यैव मोक्षं वदन्ति । अस्ति स सत्त्वविशेषो य एतान्सांसारिकान्पञ्चस्कन्धान् हित्वान्यान्प्रतिसंदधातीत्यादिना स्वग्रन्थेन । तत एव स्वाभ्युपगमाद्विनस्थैर्यापत्त्या त्रस्यन्तीति न्यायविरुद्धास्ते । पञ्चस्कन्धाश्च विज्ञानवेदनासंज्ञारूपसंस्काराख्याश्चित्तस्यैव शाखाभेदा न तु चित्ताद्भिन्नाः । तत्र विज्ञानं विषयानुभवः । वेदना दुःखम् । संज्ञारूपे नामरूपे । शब्दार्थाविति यावत् । संस्कारो वासना । एष्वेवान्येषामपि सुखादीनां प्रवेश इत्यखिलं वस्तु चित्तमेवेति तन्मतम् ।

तथान्ये शून्यवादिनः स्कन्धानां महानिर्वेदाख्यवैराग्यायापुनर्जन्मरूपानुत्पादाय प्रशान्तस्य जीवन्मुक्तस्य गुरोरन्तिके ब्रह्मचर्यं ब्रह्माभ्यासं साक्षात्कारपर्यन्तं करिष्याम इत्युक्त्वा शिष्यतामापन्ना नास्तिकगुरूपदेशात्सत्त्वस्याहंशब्दार्थस्य सत्तामपलपन्ति ते शून्यवादिनो भवन्तीति तेपि न्यायविरुद्धाः । स्वाभ्युपगमविरोधात् । भोक्तुः सत्त्वस्यापलापेनाहंशब्दार्थस्य मोक्षस्य ब्रह्मचर्यादीनां चासत्त्वास्वीकारादुद्देश्यविस्मृतेः । सांख्ययोगादयस्तु प्रकृष्टा वादाः प्रकृष्टानि शास्त्राणि स्वशब्देनाहं स्वमात्मेत्यादिशब्दजातेन भोक्तृतया चित्तस्य स्वामिनं पुरुषमुपगच्छन्तीति न तेषां कश्चिद्दोषः ॥ २१ ॥

ननु चित्तस्य तदाकारपरिणामेन विषयग्रहणं दृष्टम् । पुरुषस्य तु परिणामाभावात्कथं चित्तज्ञातृत्वमत आह—

---

5. B. om. उत्तर after उत्तर.
6. A. om. पूर्व after पूर्व.
7. A. om. ज्ञान after ज्ञान.
14. B. om. सः.
17. B. reads संस्कार for शाखा.
25. C. reads वासना for वासना.

## चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥

अप्रतिसंचाराया अपि चितेः स्वीयबुद्धिदर्शनं बुद्धिवृत्त्याकारापत्त्यैव भवतीत्यर्थः। ज्ञातुःसंचारो न साक्षादेव ज्ञाने हेतुः। किं त्वर्थाकारताहेतुसंनिकर्षद्वारा। अन्यथा स्वप्नादौ मनःसंचाराभावेनार्थभानायोगः। अतो विभुत्वेन सर्वत्र संनिकृष्टस्यात्मनः संचारो नापेक्ष्यते। आपत्तिग्रहणं च पुरुषस्य पारमार्थिकाकारप्रतिषेधार्थम्। यथा हि विषयासंनिकर्षकालेपि स्वप्नादौ तज्ज्ञानायागत्या चित्तस्य तदाकारः परिणाम इष्यते नैवं पुरुषस्य चित्तवृत्त्यभावेपि तज्ज्ञानं भवति, येन पुरुषेपि वृत्त्याकारः परिणाम इष्येत। किं तु संनिकृष्टजपालौहित्यस्येव चित्तवृत्तेः प्रतिबिम्बनमेव लाघवादिष्यते। उभयत्राकाराख्यपरिणामकल्पने गौरवात्। स्फटिकदर्पणादेः स्वप्रतिबिम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्च। एवं च वृत्तिप्रतिबिम्बनमेव वृत्त्याकारापत्तिः।

तथा हि। भोक्तृशक्तिश्चितिरपरिणामिनीत्यसंचारा। अतश्चित्तस्येव न पुरुषस्य ज्ञानसंभवः। सा च वृत्तिरूपे परिणामिन्यर्थे प्रतिबिम्बरूपेण संचारितेव सती तद्वृत्तिं चेतनवत्करोति। न चाविवेकादेवेदृशी बुद्धिवृत्तिः। अविवेकस्यैव तन्मूलकत्वाद्दोषान्तराभावात्। चेतनभानार्थं च वृत्तौ तत्प्रतिबिम्बः कल्प्यते। घटमहं जानामीति बुद्ध्यारूढतयैव शब्दादिवदात्मनो भानात्। केवलपुरुषग्राहिका स्वेतराकाररहिता प्रतिबिम्बविशिष्टा तद्वृत्तिः। इदमेव प्रतिबिम्बं बुद्धेश्चिच्छायापत्तिरित्युच्यते बुद्धेरर्थाकारतावदात्माकारतेत्यप्युच्यते। तस्या वृत्तेः प्राप्तचैतन्यप्रतिबिम्बरूपाया अनुकारमात्रतया तत्प्रतिबिम्बाधारतामात्रेण चितेस्तद्वृत्तिज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टैवेत्युच्यते। भिन्नास्तु विषयाकारबुद्धौ चितेः प्रतिबिम्बेन तस्य प्रतिबिम्बस्य तदाकारत्वापत्तिर्यथा जलप्रतिबिम्बितचन्द्रस्याचलादेरपि चलत्वादि। एवं च विनापि चितिव्यापारमुपसंक्रान्तचित्प्रतिबिम्बं चित्तं स्वगतया क्रिययाऽक्रियावतीमपि चितिं क्रियावतीमिवासंगतामपि संगतामिवाभासयति। स्वयं च भोग्यभावमासाद्यदभोक्त्रीमपि भोक्तृभावमापादयति। वृत्तौ चैतन्यप्रतिबिम्बमेव पुरुषस्य वृत्तिरित्याहुः। तदुक्तम्—

न पातालं न विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम्।

---

14. A. reads रूपेण for रूपे.

14. B. reads असंचारितेव for संचारितेव.

15. A. om. न चा.

26. A. reads आसादयन्ते for आपादयति.

गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते ॥
इति । अस्यार्थः । यस्यां गुहायां गुह्यं शाश्वतं ब्रह्मांशांशयमेवाद्यात्मसामान्यं
निहितं संगुप्तमित्युच्यते सा गुहा न पातालादि । किं तु ब्रह्मवृत्त्यविशिष्टां बुद्धिवृ-
त्तिमेव कवयः पण्डिताः पश्यन्ति । अविशिष्टता च परस्परप्रतिबिम्बनेनोभयोर-
५ पि विषयाकारत्वाच्चेतनत्वाच्च । अतो विविच्य ग्रहणायोग्यतयावस्थितिरेवात्म-
नः संगोपनं बुद्धाविति तात्पर्यम् । आदित्यपुराणेपि—

नित्यः सर्वगतो ह्यात्मा बुद्धिसंनिधिमत्तया ।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते ॥

इति ॥ २२ ॥

१० नन्वेवमपि शब्दादिसंवेदनं चितेः कथम् । तेषामपि चितौ प्रतिबिम्बनसाम-
र्थ्ये सर्वदा सर्वार्थभानप्रसङ्गः । किं च चितेः स्वसंवेदने चिन्तनवत्पुरुषेप्युक्तान-
वस्था समाना । किं च बुद्धिपुरुषयोर्वैयधिकरण्येनानुभावोप्यनुपपन्नः । अत आह—

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

सर्वे ग्रहीतृग्रहणग्राह्याः पुरुषस्यार्था भोग्या यस्मिन्निति सर्वार्थम् । ईदृशं
१५ चित्तं यतो द्रष्टृदृश्योभयाकारम् । बाधकं विना संनिकृष्टवस्त्वाकारतास्वाभाव्यस्य
चित्ते सर्वसिद्धत्वात् । एवं च बुद्धिसंवेदनमेव बुद्धिस्थस्य शब्दादेः पुरुषस्य च
संवेदनम् । यद्धि शब्दादिपुरुषोभयाकारा बुद्धिवृत्तिः पुरुषे प्रतिबिम्बिता भासते
इदमेव शब्दादेः पुरुषस्य च दृश्यत्वं बुद्धेर्दृश्यत्ववत् । अतो न पुरुषदर्शनार्थं वृत्त्यन्त-
रापेक्षा । नापि कर्तृकर्मविरोधः । अन्तःकरणस्य द्वारत्वात् । तथा हि । मनो मन्त-
२० व्येनोपरक्तं तदाकारं स्वयं च स्वेन रूपेणोपरक्तं तन्मुरूपस्य विषयत्वाद्विषयि-
णा पुरुषेण स्वीयचैतन्यलक्षणवृत्तिविशेषेण च संबद्धम् । संनिकर्षस्य ग्रहणहेतु-
त्वाद्बुद्धिवृत्तौ च पुरुषस्यासङ्गस्य प्रतिबिम्बातिरिक्तसंनिकर्षासंभवाद्धटमहं जाना-
मीति ज्ञानानुभवात् । तदेतच्चित्तमेवोभयोपरक्तं शब्दादिविषयरूपेण विषयिपुरुषरू-
पेण च निर्भासते साक्षिणि प्रतिबिम्बितं चेतनाचेतनरूपापन्नत्वात् । यथा
२५ स्फटिकमणिः पार्श्वद्वयस्थयोर्जपेन्द्रनीलयोः प्रतिबिम्बनात्स्वीयरूपेण सह त्रि-
रूप इव, एवं चित्तं विषयात्मनोः प्रतिबिम्बनाद्ग्रहीतृग्रहणग्राह्यात्मकरूपत्रयवदिव
भवति । अतः सर्वार्थं चित्तमेव । अन्येषां संनिकर्षसत्त्वेप्याकारग्रहणसामर्थ्या-
भावात् । अत्र स्फटिकदृष्टान्तोंशेन । स्वभावानुरोधेन बुद्धेरर्थाकारपरिणामस्यैवाङ्गी-
कारात् । स्फटिके तु प्रतिबिम्बमात्रम् । तत्तद्वस्तुसंनिकर्षादिना तत्तद्रूपता-
३० मात्रांशे स्फटिकस्य दृष्टान्तता ।

---

18. A. reads दृश्यत्वं च for दृश्यत्ववत्.
20. A. reads मनः for तद् before दृश्यस्य.

तद्रूपेण चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमिति प्रतिपन्ना वैशेषिकाद्-
यो बाह्यार्थं । अपरे विज्ञानवादिनश्चित्तस्य चेतसर्वरूपताङ्गीकृता तर्ह्यलं पुरुषेण
बाह्यार्थेन वा । अनादिवासनावशात्स्वत एव चित्तस्यानन्तपरिणामसंभवात् । दु-
ग्धस्य दधिरूपतावदिति, तन्न । भ्रमादिस्थले ज्ञेयार्थस्य चित्तमात्रताया अस्मा-
५ भिरभ्युपगमेपि समाधिप्रज्ञायां प्रज्ञेयोर्थश्चित्ते प्रतिबिम्बितो योनुभूयते स तस्य
चित्तस्यालम्बनीभूतत्वाच्चित्तादन्योवश्यं वाच्यः । तस्य चित्ताकारमात्रत्वे प्रज्ञ-
यैव प्रज्ञाकारः कथं गृह्येत । कर्तृकर्मविरोधात् । पुरुषस्यानङ्गीकारात् । एवं
ज्ञानातिरिक्तार्थसिद्धौ प्रज्ञारूपस्य प्रज्ञाग्राह्यत्वाभावादेव प्रज्ञायां प्रतिबिम्बरूपेण
जातोर्थो ज्ञानाकारो येन गृह्यते स पुरुष इत्यपि सिद्धम् । न च स्वमगृहीत्वैव
१० स्वस्य रूपं प्रज्ञा गृह्णातु । आकाशाग्रहणेपि शब्दवदिति वाच्यम् । शब्दवत्केव-
लाकाराग्रहणात् । अयं घट इति ज्ञानमभूदित्यादिरूपेण रूपादिवद्धर्मिपुरस्कारेणैवा-
कारानुभवात् । न तत्स्वाभासम् (यो. सू. ४।१९) इति सूत्रेण चित्तस्य चित्तग्राह्यत्वं
निराकृतम् । अत्र तु चित्ताकारस्य चित्तग्राह्यत्वं निराक्रियते भाष्यकृतेति विशेषः ।
एवं च ग्रहीतृग्रहणग्राह्यरूपं त्रितयं परस्परविजातीयतया ये विवेचयन्ति ते
१५ सम्यग्दर्शिनः । तैरेव लब्धः पुरुषः । अन्ये भ्रान्ताः ॥ २३ ॥

इतोपि चित्तातिरिक्तः पुरुष इत्याह—

## तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥

तच्चित्तमसंख्येयाभिर्वासनाभिश्चित्रीकृतमपि परस्य सुखादिसाक्षात्काररूपभो-
२० गविवेकसाक्षात्काररूपापवर्गार्थं न स्वार्थं संहत्यकारित्वाद्गृहवत् । संहत्यकारि-
त्वमितरसाहाय्येनार्थक्रियाकारित्वम् । तादृशानां च पदार्थानां लोके परमात्मा-
र्थत्वं दृष्टं न स्वार्थत्वमपि । गृहादिकमपि शयनादिकार्यमास्तरणशरीरादिसाहा-
य्येनैव करोतीति संहत्यकारि । पुरुषस्तु नित्यचैतन्यरूपतया चैतन्यार्थे नान्यम-
पेक्षते । अन्या चार्थक्रिया पुरुषस्य नास्तीति न संहत्यकारी । चित्तं करणादिसापेक्ष-
२५ त्वात्तथा । यतः सुखचित्तं न चित्तस्य सुखभोगार्थम् । तथा तत्त्वज्ञानचित्तरूपमप-
वर्गोचित्तमपि न चित्तस्यापवर्गार्थम् । भोगापवर्गयोरपि कार्यतया सार्थकत्वनिय-
मेनानवस्थाप्रसङ्गात् । यत्कार्यं तत्सार्थकमिति सर्वसंमतम् । अतश्चित्तस्यैत-
दुभयमपि परार्थम् । पुरुषस्य भोगापवर्गौ स्वरूपचैतन्यरूपतया न कार्याविति
नानवस्था पुरुषार्थत्ववादिनाम् । यश्च भोगेनापवर्गेण वार्थवान्स पुरुष एव

---

8. A. reads अन्यदीय for अनादि.
17. B. reads चित्तम् for चित्रम्.
22. C. reads शयनादिक for शयनादिकार्यम्.
24. A. om. चित्तम्.

परो न तु यत्किंचित्स्वोत्तरोत्पन्नक्षणिकोचनादिकं वैनाशिकाभिमतम् । तस्य सर्वस्य संहत्यकारित्वेन परार्थत्वात् । कूटस्थनित्यः पुरुषस्तु न संहत्यकारीत्युक्तमिति दिक् ॥ २४ ॥

अथ विवेकज्ञानजमाद्यं मोक्षमाह—

५ **विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥**

तत्रात्मभावना सकारणोच्यते । यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्रापि पुरुषे आत्मभावजिज्ञासाद्वाराऽपवर्गजनककर्मजन्यं विशेषदर्शनबीजमस्तीत्यनुमीयते यतस्तस्यैहिकसाधननिरपेक्षा स्वाभाविकी कोहमासं किं नरादिरूप आसं कथं वा
१० सुखी वा दुःखी वा किंस्विदिदं वर्तमानमपि मे रूपं देहो वा मनआदिर्वा कथंस्विदिदं केन पापेन पुण्येन वा तिष्ठति को भविष्यामि कथं भविष्यामीत्येवंरूपात्मभावभावना यथोक्तकर्मकरणिका प्रवर्तते । ऐहिकप्राग्भवीयतादृशसत्कर्मशून्यस्य दोषात्पूर्वपक्षे देहाद्यात्मतायां रुचिः श्रद्धा निश्चयो भवत्यरुचिश्च तत्त्वनिर्णये । मातृमानमेयात्मकाखिलप्रपञ्चस्य तप्तायःपिण्डवदेकीभावापन्नस्य यथोक्त-
१५ प्रकारैरन्योन्यं विवेकसाक्षात्काररूपविशेषदर्शनवतस्तु सा पूर्वोक्तात्मभावभावना भयशोकप्रवृत्तिनिवृत्त्याद्यनर्थहेतुर्निवर्तत इति तन्निवृत्तिरूप आद्यो मोक्षो भवति । विशेषदर्शने हि चित्तस्यैवैष स्वर्गनरकमोक्षादिरूपो विचित्रः परिणामो न पुरुषस्य । अविद्याद्याश्रितधर्मत्वेनाविद्याजन्यानामेषां तत्रैवौचित्यात् । पुरुषस्त्वसत्यामपि विद्यायामविद्याशून्यत्वाच्छुद्धः पापपुण्यरहितोताश्रितधर्मैर्जन्म-
२० मरणसुखदुःखादिभिरपरामृष्टः कालत्रयेऽप्यसंबद्ध इति ज्ञानात्कुशलस्यास्यात्मभावभावना निवर्तते । तन्निवृत्तेः स्वर्गनरकादिषु रागद्वेषादिनिवृत्तिः फलमिति दिक् ॥ २५ ॥

विशेषदर्शिनो लक्षणमुत्तरमोक्षकारणं संप्रज्ञातयोगं चाह—

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥**

२५ कैवल्यप्राग्भारं कैवल्याभिमुखम् । तदा विशेषदर्शनावस्थायाम् । प्राग्भवस्य चित्तं विषयाभिमुखमज्ञानमार्गसंचार्यासीत्तदा स्वर्गादिवैराग्यवशात्कैवल्याभिमुखं विवेकनिम्नं विवेकमार्गसंचारि भवतीत्यर्थः ॥ २६ ॥

---

12. A. C. read रूपाः for रूप.
13. A. reads प्रवर्तन्ते for प्रवर्तते.
15. A. om. सा.
17. B. om. हि.
20. A. om. अस्य.
26. A. reads क्षीयमाण for तदा.

नोत्पन्नेन विशेषदर्शनेनैव कृतकृत्यता, पूर्वसंस्कारवशादन्तरान्तरा मोहाख्याभां भवदुःखबीजवृत्तीनामनुवृत्तेरित्याह—

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहारोहणरूपविवेकप्रत्ययनिम्नत्ववतश्चित्तस्य तच्छिद्रेषु व्युत्थानेषु देवमनुष्यादिरूपोऽस्मि ममेति वा जानामीति न जानामीति वाऽविद्यारूपाणि प्रत्ययान्तराणि क्षीयमाणबीजरूपेभ्यः पूर्वसंस्कारेभ्यो भवन्तीत्यर्थः ॥ २७ ॥

कथं तर्हि संप्रज्ञातप्रवाहेणाप्यविद्यानिवृत्तिः स्यादत आह—

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

एषां संस्काराणां हानं दाहः स्वकार्यासामर्थ्यं क्लेशानामिवोक्तं पूर्वाचार्यैः। यथा स्थूलसूक्ष्मक्लेशानां तत्त्वज्ञानचित्तलयाभ्यां दाहनाशौ तथा तत्संस्काराणामपीति फलितोऽर्थः। तदुक्तं यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानकाले ज्ञानसंस्कारेण प्रतिबन्धात्संस्कारानुत्पत्तौ पूर्वसंस्काराः प्राचीनाः क्लेशसंस्कारा ज्ञानाग्निदग्धबीजभावा न प्रत्ययमुत्पादयन्ति। ज्ञानसंस्कारास्त्वविरुद्धत्वाच्चित्ताधिकारसमाप्तिपर्यन्तं भवन्त्येव। ततश्च तेनैव सह तेषां नाश इति न संचित्यन्त इति। यद्यप्येकदा मम जन्मादिदुःखं नास्तीति ज्ञानेऽन्तरान्तरा मोहेऽपि तद्धानार्थं प्रवृत्तिरयुक्ता मोहस्यापि चित्तधर्मतायाः पूर्वं निश्चितत्वात्तथापि चित्तस्य मोहसत्त्वे पुनश्चित्तस्य भवदुःखोत्पत्त्या पुरुषस्य दुःखभोगः स्यादित्याशयेन ज्ञानिभिरपि चित्तस्यात्यन्तं मोहनिवृत्त्यर्थं यत्नकरणात्। भोगश्च पुरुषस्यैवेत्युक्तम् ॥ २८ ॥

उक्तस्य संस्कारहानस्य प्रकारमाह—

**नेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥**

यदा चायं ब्राह्मणः प्रसंख्याने विवेकसाक्षात्कारेऽप्यकुसीदस्ततः सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तत्फलेऽपि च विरक्तस्तदा तस्य विघ्नाभावेन सर्वथा संस्कारबीजस्य क्रमेण दाहादविद्यारूपप्रत्ययानन्तरिता विवेकख्यातिर्ध-

---

1–2. A. om. मोहाख्यानां भव.
5. A. om. न जानामीति.
17. B. om. प्र before वृत्तिः.
25. B. reads विघ्नाभावेन for विघ्नाभावेन.
26. A. om. सर्व.
26. C. reads प्रत्यय after प्रत्यय.

वति तदा धर्ममेघनामा संप्रज्ञातसमाधेः परा काष्ठा भवतीत्यर्थः । क्लेशकर्मादीनां निःशेषेणोन्मूलकं धर्मं मेहति वर्षतीति धर्ममेघः ॥ २९ ॥

एतत्समाधेर्धर्ममेघद्वारा फलं द्वितीयं मोक्षमाह—

## ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

निवृत्तिर्दाहसमाप्तिः । तस्य धर्ममेघस्य लाभादविद्यादयः क्लेशा अभिनिवेशातिरिक्ताः स्वमूलसंस्कारैः सह सम्यग्निवर्तन्ते । पापपुण्यरूपकर्माशयाश्च प्रारब्धातिरिक्ताः क्लेशाख्यमूलेन सह हता भवन्ति न पुनरुत्पत्स्यन्ते । तयोर्निवृत्तौ च जीवन्नेव विद्वान्मुक्तो भवति ।

केचित्त्वभिनिवेशस्यापि निवृत्तिमिच्छन्ति । न च दुःखात्यन्तानिवृत्तिर्मोक्षः । जीवतश्चावश्यं दुःखम् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति (छा. ८।१२।१) इति श्रुतेः । एवं च जीवन्मुक्तिः कथमिति वाच्यम् । दुःखकारणविपर्ययस्यात्यन्तोच्छेदेन तत्र गौणमुक्तित्वात् । क्षीणक्लेशविपर्ययस्य कस्यचित्कचिदपि केनापि जातस्यादर्शनादिति दिक् ॥ ३० ॥

इदानीं जीवन्मुक्तस्य परममुक्तिप्रकारमाह—

## तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥

तदा जीवन्मुक्तावस्थायां सर्वैः क्लेशकर्मावरणैर्मलैर्विमुक्तस्य ज्ञानसत्त्वस्यानन्त्यं भवति । ज्ञानस्य सत्त्वप्रकाशस्यानन्त्यं विभुत्वं भवति । भूतमस्त्वस्याभूतमये ज्ञानसत्त्वमित्युक्तम् । पूर्वं हि तमसाभिभूतमावृतमनन्तं स्वभावतो व्यापकमपि ज्ञानसत्त्वं रजसोद्घाटितं क्वचिदेव ग्रहणसमर्थम् । तच्च यदा सर्वैरावरणमलैरपगतं भवति तदाऽनावृतस्य तस्यानन्त्याज्ज्ञेयं प्रकाश्यमल्पं तदपेक्षया भवति । यदि पञ्चविंशतितत्त्वातिरिक्तमन्यदपि वस्तु तिष्ठेत्तदा तदपि प्रकाशयेत । ज्ञेयस्यैव स्वाकाशे खद्योतवदल्पतया न प्रकाश्यते न तु सत्त्वस्याल्पतयेति भावः ।

अत्र तमोभिभवानन्तरमेव वृत्त्युत्पत्त्युक्तेर्ध्वनेस्तमोनाशकत्ववाक्श्चिन्त्यः । एतादृशसार्वज्ञ्यं चातीवाश्चर्यमन्धमणिवेधादिवदित्युपहसाङ्गैर्बौद्धैर्यत्र सौगतेये इदमुक्तम्—अन्धो मणिमविध्यत्साच्छिद्रं कृतवान् । तं मणिमनङ्गुलिरावयत्प्रथितवान् । मथितं च तं ग्रीवाशून्यः कण्ठेऽधारयत् । तं चाजिह्वोऽस्तौदिति । अस्यायं भावः अनाद्यविद्यामूढैश्चिन्तैः सांख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवाशक्यम्—ततश्च तस्य सूक्ष्मार्थस्याविरलच्युतिनिःसंतानसूत्रेण ग्रथनं ततोऽप्यशक्यम् । ततोऽपि सर्वथाविवेकख्यातिर्ध्यानाशक्या । ततोऽपि तादृशचित्तस्य परिपूर्णत्वेन स्तुतिरप्यशक्येति । आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येन सर्वमिदं श्रद्धेयमिति ॥ ३१ ॥

---

20, B. reads तत्र for तच्च.

यथोक्तसार्वज्ञ्यात्परवैराग्योदयेनासंप्रज्ञातपरंपराजन्यं प्रारब्धभोगसमाप्ति-
जन्यं वा तृतीयं मुख्यं मोक्षमाह—

**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥**

ततो धर्ममेघोदयात्क्लेशकर्मनिवृत्त्या ज्ञानस्यानन्त्ये सति परवैराग्येण पुरुषार्थ-
५ समाप्त्या कृतार्थानां पुरुषाणां विषये गुणानां सत्त्वादीनां परिणामक्रमः समा-
प्यते। कृतार्थपुरुषाणां मोक्षौपयिकः परिणामः पुनर्न । यतः कृतभोगापवर्गाः
सत्त्वादयो गुणा अत एव समाप्तक्रमास्तं पुरुषं प्रति क्षणमप्यवस्थातुं न समर्था
भवन्ति । स्थितिहेतुपुरुषार्थाभावात् । अत्राचेतनानां चेतनार्थतया चैतन्या-
धीनसत्ता वेदान्तिभिरुच्यमाना सिद्धा । अत्र यज्ज्ञानस्यानन्त्यात्सार्वज्ञ्याख्या-
१० न्मोक्षकथनं तन्मुख्यकल्पाभिप्रायेण । वस्तुतः " सत्त्वपुरुषयोः शुद्धिसाम्ये "
( यो. सू. ३।५५ ) इति सूत्रे भाष्य ईश्वरस्यानीश्वरस्य वा प्राप्तविवेकज्ञानस्ये-
त्यनेनासर्वज्ञस्याप्यभिमाननिवृत्तिमात्रादेव मोक्ष उक्तः ॥ ३२ ॥

ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः प्रतिक्षणमुत्पादविनाशकथनेन
वैराग्योत्पादनाय प्रयुक्तः । न चायमर्थः क्रमशब्दाल्लभ्यते । तस्य पौर्वापर्य-
१५ मात्रवाचित्वात् । अतः क्रमशब्दार्थमाह—

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥**

क्षणप्रतियोगी क्षणस्यावसरस्य विरोधी क्षणेनाप्यनन्तरित इति यावत् । एवं-
रूपोऽत्र क्रमो विवक्षितो न तु पौर्वापर्यमात्रम् । परिणामश्च पूर्वधर्मापाये धर्मा-
न्तरोत्पत्तिरित्युक्तम् । ईदृशक्रमे प्रमाणं परिणामेत्यादि । क्षणानन्तर्यात्माऽव्यवधान-
२० रूपक्षणानन्तर्यधर्मकः क्रमो वस्त्रादिरूपस्य परिणामस्य पूर्वान्तापेक्षयाऽपरान्तेन
चरमावस्थयानवच्छिन्नपरिणामधाराया अनुमानेन ग्राह्यः । न हि वस्त्रस्यान्त-
काले दृश्यमाना पुराणताऽननुभूतो यथोक्तक्रमो यैरेवंभूता क्षणा यस्यास्तादृशी
संभवति । अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलादिरूपैः परिणामक्षणे-
ष्वविरलः क्रमोऽनुमीयते ।

२५ नन्वपरान्तेनानित्येषु क्रमसिद्धावपि प्रधाने चरमावस्थाऽभावाद्गुणानां परिणाम-
क्रमे मानाभावेन पूर्वसूत्रोक्ता तत्समाप्तिः कथं घटेतेति चेन्न । नित्येषु स्वतोऽपरा-
न्ताभावेपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामानुमानाद्धर्मद्वारा धर्मिविक्रिया-
या एव प्रपञ्चस्य प्रागुक्तत्वात् । न चैवं नित्यताहानिः । कूटस्थनित्यताहानावपि
परिणामिनित्यत्वाक्षतेः । कूटस्थनित्यता हि पुरुषस्यैव । परिणामित्वेन तस्या

---

17. A. om. अपि.
20. A. reads धर्मः for धर्मकः.
25. B. reads ईं च पक्षान्तेन for नन्वपरान्तेन.
27. A. reads अपरान्ते च; B. reads एवैतैरेव for अपरान्तैरेव.

एव विरोधो न तु नित्यतासामान्यस्य । नित्यता च यस्मिन्परिणम्यमानेपि तत्त्वं न विहन्यते स्वरूपं नातीतं भवति तत्त्वम् । एवं चातीततताशून्यत्वं नित्यतासामान्यलक्षणम् । तच्चोभयत्रापि कूटस्थे पुरुषे परिणामिषु गुणेषु च । तत्र गुणधर्मेषु महदादिषु विनाशित्वात्परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानः । नित्येषु धर्मिषु
५ गुणेषु कार्यद्वारा विद्यमानोपि क्षणापरान्तनिर्ग्राह्यः क्रमः स्वतोऽलब्धपर्यवसानः कूटस्थनित्येषु पुरुषेषु च । बद्धेषु चित्ताव्यतिरेकाभिमानात्परिणामेन परिणामाध्यासः । स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु तत्तत्क्षणसंबन्धरूपा स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्क्रमः पुरुषेष्वस्ति । इदानीं स्थित्वा पश्चात्स्थास्यति पूर्वं च स्थित इति व्यवहारात् । अतस्तत्रापि स्वतोऽलब्धपर्यवसानः क्रमो गतः शब्दपृष्ठतो-
१० स्तिक्रियामुपादाय कल्पित इति । षड्भावविकारेष्वास्तिता तु वृद्धिह्रेत्ववयवापचयरूपक्रियारूपेति सैव पुरुषे निषिध्यते । तत्तत्क्षणसंबन्धरूपा तु न निषिध्यत इति बोध्यम् ।

नन्वस्य संसारस्य जन्मादिपरिणामजातस्य सृष्ट्या गत्या च गुणेषु वर्तमानस्य सृष्टिप्रलयप्रवाहेणावस्थितस्य क्रमसमाप्तिरस्ति न वा । आद्येऽलब्धपर्यवसानत्वो-
१५ क्तिविरोधोऽन्त्ये भूयश्चान्ते विश्वमायानिवृत्तिः ( श्वे. १।१० ) इति श्रुतिविरोध इति चेन्न । कृतार्थपुरुषं प्रत्येव विश्वमायानिवृत्तेः श्रुत्युक्तत्वेनास्य प्रश्नस्योत्तरानर्हत्वात् । उत्तरार्हस्तु प्रश्नो यथा सर्वो जातो मरिष्यतीति प्रश्नः । अयमों भो इति इहापस्यैव परिहरणीय एकान्तवचनीयो न तु विभज्य वचनीयः । विभज्य वचनीयो यथा सर्वो मृत्वा जनिष्यत इति प्रश्नः । जातविवेक-
२० ज्ञानो न जनिष्यते, अन्यस्तु जनिष्यत इति विभज्योत्तरार्हः । तथा मनुष्यजातिः श्रेयसी न वेति प्रश्नोऽपि पशूनुद्दिश्य श्रेयसी कर्मिदेवापेक्षया नेति विभज्य वचनीय एव । अयं त्वदीयः संसारोऽयमन्तवान्न वेति प्रश्नस्त्वत्यन्तमवचनीयो यतः कुशले गुणकृतसंसारक्रमस्य समाप्तिरस्ति नेतरस्मिन्नित्यतो गुणसृष्टिप्रवाहोच्छेदानुच्छेदान्यतरावधारणे दोषः । आद्ये वाधोऽन्त्ये कस्यापि मुक्तिर्नास्तीति
२५ मोक्षापत्तिः । तस्मादयं प्रश्नो विकल्पेन व्याख्येयः । यदि सर्वथा गुणानां सृष्ट्याद्युच्छेदः पृच्छ्यते तदा नास्तीत्येव वक्तव्यम् ।

अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥

इत्यादिस्मृतेः । भूयश्चान्ते विश्वमायानिवृत्तिः ( श्वे. १।१० ) इति

5. B. om. गुणेषु.
5. A. reads क्षणः for क्षण.
6. B. C. read अध्यास for अध्यासः.
11. C. reads तल्लक्षणात् for तल्लक्षण.
18. B. reads भोः भोः for भो भोः.

श्रुतिश्च मायाख्यप्रकृतेः प्रलये व्यापारोपरमाख्यां निवृत्तिमेव वदति । यदि तु पुरुषस्य संसारोच्छेदः पृच्छयते तदा कुशलस्यास्ति नेतरस्येति विभज्य प्रतिवचनीयमेतत् ॥ ३३ ॥

गुणाधिकाराणां परिणामविशेषाणां क्रमसमाप्तौ कैवल्यमिति ततः कृतार्थानाम् ( यो. सू. ४।३२ ) इत्यादिसूत्रेण तात्पर्यत उक्तम् । तस्य कैवल्यस्य स्वरूपमवधारयति—

## पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

कृतभोगापवर्गतया पुरुषार्थशून्यानां गुणानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीराद्यात्मकानां पुरुषोपकरणानां यः प्रतिप्रसवः स्वकारणेऽत्यन्तलयः एतद्बुद्धेः कैवल्यम् । तदेव च प्रधानस्य हानिनं प्रति कैवल्यम् । पुरुषेण पुनरसंयोगात् । या तु पुनर्बुद्धिसत्त्वासंबन्धात्केवलचितिशक्तिरूपा पुरुषस्य स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपायोगापाये स्फटिकस्य स्वरूपप्रतिष्ठावत्, तस्याश्च सर्वदा यत्तथावस्थानं पुनरच्यवस्तत्पुरुषस्य कैवल्यम् । वाशब्दो व्यवस्थितविकल्पे । परस्परवियोगे ह्युपाध्युपाधिमतोरुभयोः केवलता भवति । एते एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते । इतिः शास्त्रसमाप्ताविति शिवम् ॥ ३४ ॥

पातञ्जलाब्धौ रचितः सेतुर्विज्ञानभिक्षुणा ।
महापङ्कुर्मूढतमो येन तं तीर्णवानहम् ॥ १ ॥

पातञ्जलेषु सूत्रेषु वृत्तिर्या लिखिता मया ।
प्रीयतां तु तया साम्बः शिवो मे सपतञ्जलिः ॥ २ ॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतायां पातञ्जलसूत्रवृत्तौ भाष्यच्छायाव्याख्यायां चतुर्थः पादः ॥ श्रीरस्तु ॥

इति योगवृत्तिः समाप्ता ॥

5. A. om. स्य after कैवल्य.
8. B. reads स्वरूपप्रतिष्ठा for स्वरूपप्रति

# अथ पातञ्जलयोगसूत्रपाठः

तत्र प्रथमः पादः ।

ॐ । अथ योगानुशासनम् ॥ १ ॥ योगश्चित्तवृत्तिनिरोधः ॥ २ ॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥ वृत्तिसारूप्यमितरत्र ॥ ४ ॥ वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥ प्रमाणविपर्ययविकल्पनिद्रा-
५ स्मृतयः ॥ ६ ॥ प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥ अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥ अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥ अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥ तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥ स तु दीर्घ-
१० कालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥ दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥ तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥ वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः ॥ १७ ॥ विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥ भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥ श्रद्धावीर्यस्मृतिसमा-
१५ धिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥ तीव्रसंवेगानामासन्नः ॥ २१ ॥ मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥ ईश्वरप्रणिधानाद्वा ॥ २३ ॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥ तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥ (स एष)[1] पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥ तस्य वाचकः प्रणवः ॥ २७ ॥ तज्जपस्तदर्थ-
२० भावनम् ॥ २८ ॥ ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥ व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शना-

---

१ एतत्पदद्वयं सूत्रान्तर्गतत्वेन क्वचित्पुस्तके दृश्यते ।

लब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥ दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥ तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥ मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥ विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ॥ ३५ ॥ विशोका वा ज्योतिष्मती ॥ ३६ ॥ वीतरागविषयं वा चित्तम् ॥ ३७ ॥ स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥ यथाभिमतध्यानाद्वा ॥ ३९ ॥ परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥ क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥ तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का (समापत्तिः)[1] ॥ ४२ ॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥ एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥ सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥ ता एव सबीजः समाधिः ॥ ४६ ॥ निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥ ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥ श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥ तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥ तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

इति पातञ्जलयोगसूत्रपाठे प्रथमः पादः ॥ १ ॥

## अथ द्वितीयः पादः ।

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥ समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥ अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्

[1] एतत्पदं सूत्रान्तर्गतत्वेन सूचिपुस्तके दृश्यते ।

॥ ४ ॥ अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥ दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥ सुखानुशयी रागः ॥ ७ ॥ दुःखानुशयी द्वेषः ॥ ८ ॥ स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ॥ ९ ॥ ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥ ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥ क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥ सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥ ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥ परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥ हेयं दुःखमनागतम् ॥ १६ ॥ द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥ प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥१८॥ विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥ द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥ तदर्थ एव दृश्यस्याऽऽत्मा ॥ २१ ॥ कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥२२॥ स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥ तस्य हेतुर५ विद्या ॥ २४ ॥ तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥ विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥ २८ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥ अहिंसासत्यास्तेयब्रह्मचर्याप-
१० रिग्रहा यमाः ॥ ३० ॥ जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥ वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥ वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥ अहिंसा-
१५ प्रतिष्ठायां तत्संनिधौ वैरत्यागः ॥ ३५ ॥ सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥ अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥३७॥ ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥ अपरिग्रहस्थैर्ये जन्मकथं-

तासंबोधः ॥ ३९ ॥ शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥
सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥
संतोषादनुत्तमः सुखलाभः ॥ ४२ ॥ कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥ स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥ समाधि-
५ सिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥ स्थिरसुखमासनम् ॥ ४६ ॥
प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७॥ ततो द्वंद्वानभिघातः ॥४८॥
तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥
बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः॥५०॥
बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥ ततः क्षीयते प्रकाशावरणम्
१० ॥ ५२ ॥ धारणासु च योग्यता मनसः ॥ ५३ ॥ स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥ ततः
परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥

इति पातञ्जलयोगसूत्रपाठे द्वितीयः पादः ॥ २ ॥

## अथ तृतीयः पादः ।

१५ देशबन्धश्चित्तस्य धारणा ॥ १ ॥ तत्र प्रत्ययैकतानता ध्यानम्
॥ २ ॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥
त्रयमेकत्र संयमः ॥ ४ ॥ तज्जयात्प्रज्ञालोकः ॥ ५ ॥ तस्य
भूमिषु विनियोगः ॥ ६ ॥ त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥ तदपि
बहिरङ्गं निर्बीजस्य ॥ ८ ॥ व्युत्थाननिरोधसंस्कारयोरभिभवप्रादु-
२० र्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥ तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥ सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥ ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥ एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥ शान्तोदिताव्यपदेश्य-
२५ धर्मानुपाती धर्मी ॥ १४ ॥ क्रमान्यत्वं परिणामान्यत्वे हेतुः

॥ १५ ॥ परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥ संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥ प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥ न च तत्सालम्बनं तस्या-५विषयीभूतत्वात् ॥ २० ॥ कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानम् ॥ २१ ॥ सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥ मैत्र्यादिषु बलानि ॥ २३ ॥ बलेषु हस्तिबलादीनि ॥ २४ ॥ प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २५ ॥ भुव-१०नज्ञानं सूर्ये संयमात् ॥ २६ ॥ चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥ ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥ नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥ कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥ कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥ मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥ प्रातिभाद्वा सर्वम् ॥ ३३ ॥ हृदये चित्तसंवित् ॥ ३४ ॥ सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्य-१५याविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३५ ॥ ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३६ ॥ ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥ बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥ उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥ समानजयाज्ज्वलनम्-२०॥ ४० ॥ श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥ कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाऽऽकाशगमनम् ॥ ४२ ॥ बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥ स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४४ ॥ ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ॥ ४५ ॥ रूप-२५लावण्यबलवज्रसंहननत्वानि कायसंपत् ॥ ४६ ॥ ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥ ततो मनोजवित्वं

१ इदं सूत्रं वृत्तौ न दृश्यते ।

विकरणभावः प्रधानजयश्च ॥ ४८ ॥ सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥ स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥ क्षणतत्क्रमयोः संयमाद्विवेकजं ५ ज्ञानम् ॥ ५२ ॥ जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥ तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥ सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥

इति पातञ्जलयोगसूत्रपाठे तृतीयः पादः ॥ ३ ॥

१० अथ चतुर्थः पादः ।

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥ निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥ निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥ प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥ तत्र ध्यानजमना- १५ शयम् ॥ ६ ॥ कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥ ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥ जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥ तासामनादित्वं चाऽऽशिषो नित्यत्वात् ॥ १० ॥ हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥ अतीतानागतं स्वरू- २० पतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥ ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥ परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥ वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥ न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥ तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥ सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्याप- २५ रिणामित्वात् ॥ १८ ॥ न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥ एकसमये चोभयानवधारणम् ॥ २० ॥ चित्तान्तरदृश्ये बुद्धिबुद्धेर-

तिप्रसङ्गः स्मृतिसंकरश्च ॥ २१ ॥ चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥ द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥ तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥ विशेषदर्शिन आत्मभावभावना(वि) निवृत्तिः ॥ २५ ॥ तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥ तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥ हानमेषां क्लेशवदुक्तम् ॥ २८ ॥ प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥ ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥ तदा सर्वावरणमलापेतस्य ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥ ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥ क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥ पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

इति पातञ्जलयोगसूत्रपाठे चतुर्थः पादः ॥ ४ ॥

समाप्तोयं श्रीमत्पतञ्जलिप्रणीतो योगसूत्रपाठः ॥

---

अथ पातञ्जलयोगसूत्राणां

# वर्णानुक्रमसूची ।



पृष्ठाङ्काः



[1] इदं सूत्रं वृत्तौ नास्ति.

१ एतत्सूत्रारम्भे स एष इति पदद्वयं सूत्रान्तर्गतत्वेन वृत्तिपुस्तकेऽधिकं दृश्यते ।

१ स एव इति पदद्वयं भाष्यपुस्तके सूत्राद्बहिर्दृश्यते.

समाप्तेयं पातञ्जलयोगसूत्राणां वर्णानुक्रमसूची ।

॥ श्रीः ॥

## योगसूत्रस्थानां पदानां वर्णानुक्रमेण सूचीपत्रम्—

पदानि पादाङ्कः सूत्राङ्कः

पदानि पादाङ्कः सूत्राङ्कः



पदानि पादाङ्कः सूत्राङ्कः

पदानि पादाङ्कः सूत्राङ्कः

पदानि पादाङ्कः सूत्राङ्कः



पदानि पादाङ्कः सूत्राङ्कः

---

॥ श्रीः ॥

# पातञ्जलसूत्रभाष्ये वाचस्पतिमिश्रविरचितायां तत्त्ववैशारद्यां नागोजीभट्टकृतसूत्रवृत्तौ च प्रसङ्गादुद्धृतानां श्रुतिस्मृतिसूत्रादीनां वर्णानुक्रमेण सूचीपत्रम्

| श्रुत्यादयः— | पृ. | पं. | भाष्यम् | तत्त्ववैशारदी | वृत्तिः | मूलग्रन्थनाम |
|---|---|---|---|---|---|---|
| अभीवर्स्तं प्रत्यमुञ्चत् | २१३ | ३ | भा. | ... | ... | ! |
| अङ्गुष्ठमात्रं | १९१ | ६ | ... | त. | ... | भोर. |
| अङ्गुष्ठौ संनिबधीयात् | ३११ | ३ | ... | ... | वृ. | ! |
| अचिन्त्याः खलु | २८३ | १२ | ... | ... | वृ. | ! |
| अजामेकां | ८२ | १३ | ... | त. | ... | तै. आ. |
| | ९१ | २५ | ... | त. | ... | ,, |
| | २६५ | १९ | ... | ... | वृ. | ,, |
| अजो ह्येको | ८२ | १४ | ... | त. | ... | ,, |
| | ९१ | २६ | ... | त. | ... | ,, |
| | २६५ | २० | ... | ... | वृ. | ,, |
| अण्डानां तु | ३४२ | १९ | ... | ... | वृ. | वि. पु. |
| अत्रान्तरज्ञानपक्वानि | १८१ | २० | ... | त. | ... | वाच. |
| अथात आदेशो | २४४ | १९ | ... | ... | वृ. | छा. |
| अथातो ब्रह्मजिज्ञासा | २ | ७ | ... | त. | ... | ब्र. सू. |
| अथैष ज्योतिः | १ | २० | ... | त. | ... | ! |
| अदृष्टविग्रहो | २४३ | ११ | ... | ... | वृ. | ! |
| अध्यात्मयोगाधिगमेन | ३४६ | २५ | ... | ... | वृ. | का. |
| अनन्तशक्तिश्च | ३१ | २१ | ... | त. | ... | वा. पु. |
| अनश्नन्नन्यो | २३८ | १४ | ... | ... | वृ. | मु. |
| अनाविर्भस्वरं | २४२ | ५ | ... | ... | वृ. | ! |
| अनादिर्भगवान् | ३८७ | २७ | ... | ... | वृ. | ! |
| अनित्याशुचिदुःखानात्मसु | ११ | १६ | ... | त. | ... | यो. सू. |
| अन्धो मणिमविन्दत् | २१३ | २ | भा. | ... | ... | ! |
| | ३८५ | २६ | ... | ... | वृ. | ! |

१ संकेतचिह्नरहितानि ग्रन्थनामानि प्राक्षपोक्षातानि मयाऽज्ञातानि.

| श्रुत्यादयः— | पृ. | प. | भाष्यम् | तत्त्ववैशारदी | वृत्तिः | मूलग्रन्थनाम |
|---|---|---|---|---|---|---|
| अपरामृष्टमेवाह | २३९ | १९ | ... | ... | वृ. | ! |
| अपरिणामिनी | ८९ | ८ | भा. | ... | ... | प. |
| | २९४ | ७ | ... | ... | वृ. | " |
| अपाम सोमममृता | ६२ | १७ | ... | त. | ... | तै. सं. |
| अभिन्नोपि हि | २०७ | १४ | ... | त. | ... | ! |
| अभ्यासेन तु | २३१ | २० | ... | ... | वृ. | गी. |
| अमरा निर्जरा | २५३ | ३१ | ... | ... | वृ. | अम. |
| | ३३५ | २३ | ... | ... | वृ. | " |
| अयं तु खलु | ८४ | ४ | भा. | ... | ... | प. |
| अयं लोकस्मिन् | २८६ | ३ | ... | ... | वृ. | " |
| अर्धमात्रा परं | २४४ | १० | ... | ... | वृ. | गा. |
| अविद्यया मृत्युं | ३१९ | २३ | ... | ... | वृ. | ई. |
| अविद्याऽस्मिता— | १४ | ३ | भा. | ... | ... | यो. सू. |
| अव्यक्तमेवाक्षरम् | २९१ | ७ | ... | ... | वृ. | गी. |
| अव्ययानि वृश | ३१ | २४ | ... | त. | ... | वा. पु. |
| अव्युच्छिन्नास्ततः | ३८७ | २७ | ... | ... | वृ. | ! |
| अष्टौ प्रकृतयः | २९१ | २१ | ... | ... | वृ. | म. |
| अष्टौ स्थानानि | १४० | ७ | ... | त. | ... | पा. शि. |
| | ३३२ | ११ | ... | ... | वृ. | " |
| असंशयं महाबाहो | २३१ | १९ | ... | ... | वृ. | गी. |
| अस्यावयवभूतैः | ३४२ | २४ | ... | ... | वृ. | श्वे. |
| अहं ब्रह्म परं | २४४ | २२ | ... | ... | वृ. | ! |
| अहिंसन्सर्वभूतानि | ३०८ | १० | ... | ... | वृ. | ! |
| आकारो गौरवं | १६६ | ६ | ... | त. | ... | ! |
| | ३५१ | १६ | ... | ... | वृ. | ! |
| आकाशधर्माः | १६६ | १५ | ... | त. | ... | ! |
| | ३५१ | २९ | ... | ... | वृ. | ! |
| आगमेनानुमानेन | ५२ | ६ | भा. | ... | ... | ! |
| | २५९ | २१ | ... | ... | वृ. | ! |
| आचिनोति च | ९६ | २१ | ... | त. | ... | वा. पु. |
| | २९९ | १४ | ... | ... | वृ. | " |
| आत्मगतिः क्रियावान् | ३६६ | २१ | ... | ... | वृ. | मु. |
| आत्मानं चेद्विजानीयात् | २७७ | ३० | ... | ... | वृ. | बृ. |
| आत्मा वा इदम् | २३९ | ६ | ... | ... | वृ. | ऐ. |

| श्रुत्यादयः— | पृ. | प. | भाष्यम् | तत्त्ववैशारदी | वृत्तिः | मूलग्रन्थनाम |
|---|---|---|---|---|---|---|
| एकपादमथैकस्मिन् | ३११ | ६ | ... | ... | वृ. | ? |
| एकमेव दर्शनं | ८ | ५ | भा. | ... | ... | प. |
| | ८ | २७ | ... | त. | ... | ,, |
| एकमेवाद्वितीयं | २११ | ६ | ... | ... | वृ. | गो. |
| एकस्तु प्रभुशक्त्या | १८५ | २२ | ... | त. | ... | वा. पु. |
| एतदातिष्ठतोन्यद्वा | १२० | १७ | ... | त. | ... | वि. पु. |
| एतदेव ब्रह्मविदो | ४२ | २४ | ... | त. | ... | ? |
| एतद्ब्रह्मार्पणं | २६५ | ५ | ... | ... | वृ. | कू. |
| एतद्वै तत्परमपरं | २५३ | ३० | ... | ... | वृ. | प्र. |
| एतेन योगः | २१९ | ५ | ... | ... | वृ. | ब्र. सू. |
| एते यमाः | १०६ | २५ | ... | त. | ... | वि. पु. |
| एवं भद्रासनादीनां | ११३ | १४ | ... | त. | ... | ,, |
| एवं सर्वमहिंसायां | ३०४ | १४ | ... | ... | वृ. | भार. |
| एषा वै धारणा | ११९ | २० | ... | ... | त. | वि. पु. |
| ओमित्येकाक्षरं | ३३५ | २२ | ... | ... | वृ. | गी. |
| कण्ठे मुखे नासिकाग्रे | ३१७ | ९ | ... | ... | वृ. | ? |
| कथभावो भवेत् | ८० | २३ | ... | त. | ... | ? |
| कन्बुग्रीवं | १२० | ८ | ... | त. | ... | वि. पु. |
| कर्मणा सहितात् | ३०१ | २३ | ... | ... | वृ. | कू. पु. |
| कर्मणि द्वितीया | ३३५ | २९ | ... | ... | वृ. | पा. सू. |
| कर्मण्येवाधिकारः | ५८ | १४ | ... | त. | ... | गी. |
| कर्मात्मा पुरुषो | २३८ | २७ | ... | ... | वृ. | ? |
| कलत्रमित्रपुत्रार्थ— | २७८ | १० | ... | ... | वृ. | ? |
| कामतोऽकामतो | ५८ | ११ | ... | त. | ... | ? |
| | २६५ | १ | ... | ... | वृ. | ? |
| कायमाधेयशौचत्वात् | ६२ | ४ | भा. | ... | ... | वैया. |
| कायस्याधेयशौचत्वात् | २६८ | २० | ... | ... | वृ. | ,, |
| कार्योपाधिरयं | २३९ | २८ | ... | ... | वृ. | ? |
| कार्यो ह्रस्य | २७३ | ६ | ... | ... | वृ. | कू. पु. |
| किंचित्तस्मात्परस्मिन् | ३१७ | १० | ... | ... | वृ. | ? |
| किमिच्छन्कस्य | २७७ | ३१ | ... | ... | वृ. | बृ. |
| किरीटकेयूरमुखैः | १२२ | २० | ... | त. | ... | वि. पु. |
| किरीटचारुकेयूर— | १२० | १३ | ... | त. | ... | ,, |

| श्रुत्यादयः— | पृ. | प. | भाष्यम् | तत्त्ववैशारदी | वृत्तिः | मूलग्रन्थनाम |
|---|---|---|---|---|---|---|
| ज्ञानशक्तिरहं | २३९ | ९ | ... | ... | वृ. | ? |
| ज्ञानसहभूः | १९९ | २ | भा. | ... | ... | ? |
| ज्ञानस्यैव च | १७४ | १९ | ... | त. | ... | ? |
| ज्ञानस्वरूप एवात्मा | २९२ | २१ | ... | ... | वृ. | ? |
| ज्ञानाग्निः सर्वकर्माणि | २२२ | १६ | ... | ... | वृ. | गी. |
| | २७३ | २३ | ... | ... | वृ. | ,, |
| तं त्वौपनिषदं | २१९ | १६ | ... | ... | वृ. | बृ. |
| तं सूक्ष्मतमं | २५१ | ८ | ... | ... | वृ. | ? |
| तच्च मूर्तं हरेः | ११९ | २१ | ... | त. | ... | वि. पु. |
| तच्छरीरसमुत्पन्नैः | २९२ | ५ | ... | ... | वृ. | म. स्मृ. |
| तद्रूपतामनाधारा | ११९ | २२ | ... | त. | ... | वि. पु. |
| ततः प्रत्यक्चेतनाधिगमः | १०६ | १० | भा. | ... | ... | यो. सू. |
| | १०६ | २० | ... | ... | वृ. | ,, |
| ततः शङ्खगदाचक्र- | १२२ | १७ | ... | त. | ... | वि. पु. |
| ततो न्यूनाश्च | २४१ | ३१ | ... | ... | वृ. | ? |
| तत्त्वमसि | २४० | २८ | ... | ... | वृ. | छा. |
| तत्त्वैः संपादितं | २४४ | २६ | ... | ... | वृ. | भा. |
| तत्परेणेरितं | २३९ | १० | ... | ... | वृ. | मै. |
| तत्र तन्निश्चलीभूतं | ३१८ | २९ | ... | ... | वृ. | ? |
| तत्र यः परमात्मा | २३८ | २६ | ... | ... | वृ. | ? |
| तत्संयोगरूपदुःखहेतोः | २८३ | १५ | ... | ... | वृ. | प. |
| तत्संयोगहेतुविवर्जनात् | ८१ | १ | भा. | ... | ... | ,, |
| तत्सर्वं त्वयि | ५८ | १२ | ... | त. | ... | ? |
| | २६५ | २ | ... | ... | वृ. | ? |
| तथा जाग्रदवस्थायां | ३७३ | १७ | ... | ... | वृ. | ? |
| तथापि नश्यतः | ३१४ | १४ | ... | ... | वृ. | ब. |
| तथा स्रुवाहः | २९५ | २४ | ... | ... | वृ. | ? |
| तदा द्रष्टुः | २२० | २७ | ... | ... | वृ. | यो. सू. |
| | २९९ | २३ | ... | ... | वृ. | ,, |
| तदा सर्वावरणमलापेतस्य | २१ | १९ | ... | त. | ... | ,, |
| तदिच्छस्व कर्माणि | २७६ | १३ | ... | ... | वृ. | ? |
| तदेकावयवं | १२२ | २१ | ... | त. | ... | वि. पु. |
| तदेव सक्तः | २७३ | २७ | ... | ... | वृ. | बृ. |

| श्रुत्यादयः— | पृ. | प. | भाष्यम् | तत्त्ववैशारदी | वृत्तिः | मूलग्रन्थनाम |
|---|---|---|---|---|---|---|
| तृणारणिमणिन्यायः | २४२ | ११ | ... | ... | वृ. | ? |
| तृष्णाक्षयसुखस्य | १११ | ४ | भा. | ... | ... | ? |
| | ३१० | १२ | ... | ... | वृ. | ? |
| तेनास्य ब्रूवते | ३१५ | २१ | ... | ... | वृ. | ? |
| तेभ्यो भूतानि | २९१ | ८ | ... | ... | वृ. | गो. |
| ते ये शतं | ३१० | ५ | ... | ... | वृ. | तै. |
| त्रिधा प्रकल्पयन् | ५२ | ७ | भा. | ... | ... | ? |
| | २५९ | २२ | ... | ... | वृ. | ? |
| त्रिषु धामसु | २२९ | २६ | ... | ... | वृ. | कै. |
| दश मन्वन्तराणि | २३ | २८ | ... | त. | ... | वा. पु. |
| | २३६ | ८ | ... | ... | वृ. | " |
| दीर्घस्वप्नमिमं | २५१ | २२ | ... | ... | वृ. | ? |
| दुःखमेव सर्वं | २६८ | ३० | ... | ... | वृ. | यो सू. |
| दुःखाज्ञानमया | २२४ | ११ | ... | ... | वृ. | ! |
| दुःखानुशयी | १८ | ३ | भा. | ... | ... | यो. सू. |
| दैवी ह्येषा | ३७२ | ६ | ... | ... | वृ. | गी. |
| द्वयी च मुक्तिः | २१७ | ७ | ... | त. | ... | वाच. |
| द्वाभ्यां शून्यतमं | ३६८ | २७ | ... | ... | वृ. | ! |
| द्वे द्वे ह वै कर्मणी | ७२ | १ | भा. | ... | ... | ! |
| | २७६ | १२ | ... | ... | वृ. | ! |
| द्व्येकयोर्द्विवचनैकवचने | ८३ | १० | ... | त. | ... | पा. सू. |
| धर्मानभ्यधिको | १२८ | ७ | भा. | ... | ... | ! |
| धर्मिणां गुणानां | २९५ | १६ | ... | ... | वृ. | प. |
| धर्मिणामनादिसंयोगात् | ९२ | १ | भा. | ... | ... | ? |
| धाता यथापूर्वम् | ३५४ | १४ | ... | ... | वृ. | नारा. |
| ध्वनयः सदृशात्मानो | १४४ | १६ | ... | त. | ... | ? |
| न केवलेन योगेन | ३१९ | २८ | ... | ... | वृ. | ? |
| न जातु कामः | ७६ | १७ | ... | त. | ... | भार. |
| न तस्य कार्यं | २४२ | ३ | ... | ... | वृ. | श्वे. |
| न तस्य दुर्लभं | ३१४ | १७ | ... | ... | वृ. | व. |
| न तु तद्द्वितीयम् | २२९ | २७ | ... | ... | वृ. | बृ. |
| नत्वा पतञ्जलिं देवं | २१९ | ३ | ... | ... | वृ. | वृ. |
| नत्वा पतञ्जलिमृषिं | १ | १५ | ... | त. | ... | वाच. |

